BIBLIOTHECA INDICA. १९५

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1251.

# तत्त्वचिन्तामणि-दीधिति-प्रकाश:




# TATTVACINTĀMANI DIDHITI PRAKĀSA

BY

BHAVĀNANDA SIDDHĀNTAVĀGISA

WITH TATTVACINTĀMANI AND DIDHITI

EDITED BY

MAHOPĀDHYĀYA GURU CHARANA TARKADARSHANATIRTHA

*Professor, Sanskrit College, Calcutta, and Lecturer, Calcutta U...*

VOL. I. FASC. I.

Calcutta.

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
No. 6, Nandakumar Choudhury's 2nd Lane.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1910.

# LIST OF BOOKS FOR SALE
AT THE LIBRARY OF THE
# ASIATIC SOCIETY OF BENGAL.
No. 1, PARK STREET, CACUTTA,
AND OBTAINABLE FROM
THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY

*Complete copies of those works marked with an asterisk * cannot be supplied.—*
*of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.
*Sanskrit Series*

| | Rs. |
|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each .. ... | |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... .. | |
| *Agni Purāṇa, Fasc. 6 14 @ /10/ each ... .. .. | |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 1 |
| Aitereya Lochana ... ... ... ... | |
| *Aṇu Bhāṣhya, Fasc 2-5 @ /10/ each ... ... ... | 2 |
| Aphorisms of Sāṇḍilya, (English) Fasc 1 @ 1/- ... ... | 1 |
| Aṣṭasāhasrikā Prajñapāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 |
| *Atharvana Upanishad, Fasc 4 5 @ /10/ each ... ... ... | 1 |
| Atmatattaviveka, Fasc 1, @ /10/ each ... ... ... ... | 0 |
| Açvavaidyaka, Fasc. 1 5 @ /10/ each . .. .. | 3 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol I, Fasc. 1-7 ; Vol. II. Fasc. 1 6 @ 1/ each ... .. | 13 |
| Bālam Bhaṭṭī, Vol. I, Fasc 1-2, Vol 2, Fasc. 1 @ /10/ each .. ... | 1 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol. II, Fasc 1-2 @ /10/ each ... | 3 |
| *Bhāmatī, Fasc 4-8 @ /10/ each .. ... | 3 |
| Bhaṭṭa Dīpikā Vol. I, Fasc 1 6 ; Vol 2, Fasc. 1, @ /10 each ... | 4 |
| Baudhyastotrasangraha (Tib & Sans.) ... ... ... | 2 |
| Brahma Sutra, Fasc 1 @ /10/ each .. ... ... ... | 0 |
| Bṛhaddevata Fasc 1-4 @ /10/ each .. ... ... | 2 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10 each ... ... ... | 3 |
| Bodhisattvāvatāra of Çāntideva, Fasc 1 5 @ /10/ each ... ... | 5 |
| Çri Cantinatha Charita, Fasc 1 3 ... ... ... ... | |
| Çatadusani, Fasc 1-2 @ /10/ each .. . . | |
| Catalogue of Sanskrit Books and MSS, Fasc 1-4 @ 2/ each ... | |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1 7, Vol II, Fasc 1-5, Vol. III, Fasc 1-7 Vol. 5, Fasc. 1 4 @ /10/ each ... ... | 14 |
| Ditto Vol 6, Fasc. 1 3 @ 1/4/ each ... ... ... | |
| Ditto Vol VII, Fasc 1-3 @ /10/ .. ... ... | |
| Çatasahasrikā Prajñāpāramitā Part, I. Fasc. 1-12 @ /10/ each .. .. | 4 |
| *Caturvarga Chintāmaṇi Vol II, Fasc. 1-25 ; Vol. III. Part I, Fasc. 1-18 Part II, Fasc 1-10 Vol IV. Fasc 1-6 @ /10/ each .. ... | 26 |
| Ditto Vol 4, Fasc 7, @ 1 4 each ... ... ... | 1 |
| Ditto Vol IV, Fasc. 8 9 @ /10/ .. ... ... | 1 |
| Çlokavartika (English) Fasc 1 7 @ 1/4/ each ... ... ... | 8 |
| *Çrauta Sutra of Āpastamba, Fasc. 12 17 @ /10 each ... ... | 3 |
| Ditto Çānkhāyana, Vol I, Fasc 1-7 ; Vol. II, Fasc. 1-4, Vol III Fasc 1 4, Vol 4, Fasc. 1 @ /10/ each ... ... | 10 |
| Çrī Bhāshyam Fasc 1 3 @ /10 each .. ... ... ... | 1 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each ... ... | 1 |
| Gadadhara Paddhati Kalasara Vol. I, Fasc. 1-7 @ /10/ each ... ... | 4 |
| Ditto Achārasara Vol. II, Fasc 1-4 @ /10/ each ... ... | 3 |
| Gobhiliya Grihya Sutra Vol I, @ /10/ each ... ... ... | 3 |
| Ditto Vol II Fasc 1-2 @ 1/4/ each ... .. ... | 2 |
| Ditto (Appendix) Gobhila Parisista ... . ... | 2 |
| Ditto Grihya Sangraha ... .. .. .. | 0 |
| Haralata .. .. .. ... ... ... | 1 |
| Karmapradiph, Fasc. 1 .. . ... | 1 |
| Kāla Viveka, Fasc 1 7 @ /10/ each ... .. ... ... | 4 |
| Kātantra, Fasc 1-6 @ /12/ each . ... ... | |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1 4. each .. ... | 1 |
| *Kūrma Purāṇa, Fasc 3 9 @ /10/ each ... ... ... | |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each .. ... | 6 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc 1-9 ; Vol. II, Fasc. 1-12 Vol. III, Fasc 1-10 @ /10/ each ... ... .. | 10 |

ॐ नमो गणेशाय ।

# तत्त्वचिन्तामणौ

## अनुमानखण्डे अनुमितिनिरूपणम् ।

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वादुपमानात् प्रागनुमानं निरूप्यते ।

---

दीधितिः ।

ओं नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

अध्ययनभावनाभ्यां
सारं निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि
तनुते तार्किकशिरोमणिः श्रीमान् ॥

परजुष्टनयान्निवर्त्तमाना
मननास्वाद्यरसा विशुद्ध-बोधैः ।

रघुनाथकवेरपेतदोषा

कृतिरेषा विदुषां तनोतु मोदम् ॥

न्यायमधीते सर्व्व-

स्तनुते कुतुकान्निबन्धमप्यत्र ।

अस्य तु किमपि रहस्यं

केचन विज्ञातुमीशते सुधियः ॥

मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो

भूयो विधाय विनयं विनिवेदयामि ।

दूष्यं वचो मम परं निपुणं विभाव्य

भावावबोधविहितो न दुनोति दोषः ॥

दीधिति प्रकाशः ।

(१) नमस्कृत्य गुरून् सर्व्वान् (२) निगूढ़ं मणिदीधितौ ।

श्रीभवानन्दसिद्धान्तवागीशेन प्रकाश्यते ॥

"ॐ नम" इति "परमात्मने" सर्व्वोत्कृष्टायात्मने नमः । उत्कर्षश्च जगतः सृष्टिस्थितिलयकर्त्तृत्वम् । एकरूपस्य कथं सृष्ट्यादिविचित्रकार्य्यकारित्वम् ? तत्र हेतुमाह "यो"मिति ब्रह्म-

(१) श्रीगोविन्दपदाम्भोजनवचन्द्रमरीचयः ।

वर्द्धयन्तोऽत्र सन्ततं मम सन्मतवन्दनम् ॥ इत्यधिकं च पुस्तके ।

(२) सारं इति न पुस्तके ।

विष्णुशिवात्मकायेत्यर्थः । ॐकारघटकैरकारोकारमकारैर्ब्रह्मादीनां प्रतिपादनात् । तस्य च नमस्कार्य्यताप्रयोजकं रूपान्तरमपि दर्श- यति "सर्व्वे"ति "सर्व्वभूतानि" सर्व्वप्राणिनः "विष्टभ्य" अन्त- र्यामितया स्वस्वकार्य्ये नियोज्य "परितिष्ठते" सते इत्यर्थः । अन्तर्यामिनो भगवतः प्रेरणयैव सर्व्वप्राणिनां स्वस्वकार्य्ये प्रवृत्ति- रिति भावः । विष्टम्भश्च धारणात्मकः संयोगविशेषः । भूत- पदं मूर्त्तपरम् । अतएव "विश्वव्यापी विश्वशक्तिः पिनाकी"त्यत्र विश्वशब्दो यावन्मूर्त्तवचन इत्याचार्य्याः । प्रयत्नवदीश्वरसंयोगस्यैव ब्रह्माण्डादिपतनप्रतिबन्धकत्वात् । अतएव "द्यावा पृथिवी विधृते तिष्ठत" इति श्रुतिरपि भगवत् संयोगस्य धारकत्वमाहेत्यपि वदन्ति । यत्तु आकाशं नेश्वरादतिरिच्यते इति मतानुसारेणेदं तन्न ईश्वरस्यैवाकाशतया भूतपदवाच्यत्वेन तत्रैव तत् प्रतियोगिक- संयोगाभावात् । "अखण्डौ" नित्यौ आनन्दबोधौ यस्य तस्मै इत्यर्थः । "नित्यं विज्ञानमानन्दं ब्रह्मे"ति श्रुतिरपि ब्रह्मस्वरूपा- वधारणपरा आनन्दविशिष्टस्य नित्यत्वं प्रतिपादयन्ती विशेषण- स्यानन्दस्य नित्यत्वं प्रतिपादयति । तथाच श्रुतिबलात् सिद्धे नित्यसुखे सुखत्वावान्तरजातिरेव पुण्यजन्यतावच्छेदकत्वेन कल्प्यत इत्याशयः । अखण्डो दुःखासम्भिन्न आनन्दो यस्मादेवम्भूतो- पासनात्मको बोधो यस्येति-वार्थः । यस्येति षष्ठ्यर्थो विषयता । "पूर्णाय" अप्रतिहतेच्छाय ॥ ननु सङ्गतिप्रदर्शनानुमाननिरूपण- प्रतिज्ञयोः प्रयोजनाभावः, सङ्गत्यभिधानस्यैवोन्मत्तप्रलपितत्वादि- शंका-निरासप्रयोजनकत्वादत आह "पूर्व्वापरे"ति" ।

दीधितिः ।

पूर्व्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्यावधानाय च सङ्गतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते "प्रत्यक्ष"मित्यादि ।

---

दीधिति प्रकाशः ।

सङ्गतिप्रदर्शनस्य फलम् एकवाक्यताप्रतिपत्तिः । अनुमाननिरूपणप्रतिज्ञायाः फलं शिष्यावधानमित्यर्थः । यत् प्रयोजनवत्तामवगम्य पूर्व्वग्रन्थे प्रवृत्तानान्तदेकवाक्यताज्ञानेनैवोत्तरग्रन्थेऽपि तत् .प्रयोजनवत्ताज्ञानेन प्रवृत्तिसम्भवादिति भावः । "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति जैमिनिसूत्रम् (१) । अत्रार्थैक्यादेतावन्मात्रे कृते "भगोवां विभजतु" "पूषा वां विभजत्वि"त्यनयो (२) र्विभागरूपार्थैक्यादतिव्याप्तिरतः साकाङ्क्षेति । "विभागे" विच्छिद्यपाठे श्रोतुर्यदिपरस्परार्थान्वयविषयिण्याकाङ्क्षा भवति । यथा घटमानयेत्यत्र घटमित्युक्ते आनय, पश्य वेत्याकाङ्क्षा । एवमानयेत्युक्ते घटं पटं वेति श्रोतुराकाङ्क्षा । "भगोवां विभजत्वि"त्यस्य विच्छिद्य पाठे तु नैवमाकाङ्क्षेति तद्व्युदासः । तावन्मात्रे च (३) "स्योनं ते सदनं

---

(१) अ २ पा १ सू ४६ अधि १४ । अर्थैकत्वादिति पाठः आनन्दाश्रम मुद्रितन्यायमालायाम् ।

(२) विभजनमन्वयेन सम्मतयोरिति शेषः ।

(३) विभागे साकाङ्क्षामित्येतावन्मात्रोक्तौ इत्यर्थः ।

कृणोमि घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" (१) इत्यत्र "कल्पयामी-त्यन्तः सदनार्थक एको मन्त्रः । "तस्मिन्नित्यादिपरः सादनार्थकः । एतयोश्च विभागे साकाङ्क्षत्वमस्ति । कल्पयामीत्यन्तस्य विच्छेदे तस्मिन् किमित्याकाङ्क्षा सम्भवादतोऽर्थैक्यादिति । अत्र सदन-सादनयोर्भेदादिति भावः । अर्थैक्यञ्च न वाक्यार्थैक्यं, प्रति-प्रकरणं वाक्यार्थानां भेदात् । किन्तु तात्पर्य्यविषयैक्यं, प्रकृते च प्रमाणतत्त्वविवेचनमेव चतुर्णां ग्रन्थानां तात्पर्य्यविषयः, कारण-कथनानन्तरं कार्य्यस्याकथने किमस्य कार्य्यमित्याकाङ्क्षेति । न च भिन्नतात्पर्य्यकेऽपि प्रसङ्गादिसङ्गतिसत्त्वान्न सङ्गतिरीदृशैकवाक्यता-व्याप्येति कथं तयैकवाक्यताप्रतिपत्तिरिति वाच्यम् एकवाक्यता-पन्नयोरेव सङ्गतिव्यवहारेण सङ्गतिलक्षणेऽप्येकवाक्यताया अनु-प्रवेशात्, विभिन्नतात्पर्य्यके सङ्गत्यभावादिति । अकारान्तप्रत्यक्ष-पदस्य मूले असत्त्वात् प्रत्यक्षेति पाठनिर्देशोऽनुचित इत्याशयेनाह "प्रत्यक्षवितो"ति प्रत्यक्षप्रमित्यनन्तरमनुमिति–निरूपणे प्रत्यक्ष-प्रमाणानन्तरञ्चानुमाननिरूपणे सङ्गतेराकाङ्क्षितत्वात् उभयत्रैव तत्प्रदर्शनपरत्वं मूलस्याह "अत्रोपजीव्योपजीवकभाव" इति ।

दीधितिः ।

**अत्रोपजीव्योपजीवकभावः फलतः स्वरूपतश्च । प्रत्यक्षफलस्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत्वे-**

---

(१) श्रोमं कृणोमि, सुशेवं सुखेन शयितुं योग्यं, मेध सारभूतपुरोडाशमेधार्थं ।

ऽपि न सर्व्वाप्रत्यक्षमितिस्तथा, अनुमितयस्तु सर्व्वाः साक्षात् परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः, पुरस्कृतश्चायमुपजीवकतोत्कर्षः। यद्यपि सकलमेव प्रत्यक्षफलमुपजीवत्यदृष्टजननीं समय-मकर्त्तव्यतादि-परिच्छेदिकामनुमितिम्, ईश्वरप्रत्यक्षन्तु न फलं तथापि दृष्टद्वारकमिह तथात्वमादरणीयम्, इतरस्याविनि-गम्यत्वात्, सर्व्वस्यानुमितिकरणमिन्द्रियापेक्षोपपत्ति-कम् अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्कारणता-निर्वाहकप्रत्यासत्तिविरहेणातत्त्वात्, सर्व्वं पुनरिन्द्रियं नानुमानाधीनसुन्म, मनः श्रवणयो रजन्यत्वात्, दृष्ट-द्वारा वा तथात्वमादरणीयम्। न चोत्पत्तिमदपीन्द्रियं दृष्टद्वारकमनुमानमपेक्षते।

---

दीधिति प्रकाशः।

"अत्र" प्रत्यक्षानुमानयोः, अतएव फलयोरादौ निरूपणात् 'फलत' इति प्रथममुपन्यस्तम्। केचित्तु स्वरूपयोः फलयोश्च कार्य्यकारणभावोऽपि स्वरूपयोः सङ्गतिः, जिज्ञासोपयोगित्वा-दित्याहुः। उपजीवकत्वं सङ्गतिः साक्षादनन्तराभिधानव्याप्त्या। अतएवो"पजीवकत्वादनन्तरं निरूप्यत" इत्युक्तमिति। प्राची-नानां मतमनुसृत्याह "प्रत्यक्षफलस्ये"ति। अनुमित्यनुव्यव-

सायादेरित्यादिना (१) अनुमित्यात्मकविशेषणतावच्छेदकप्रकारकबोधमूलकविशिष्टवैशिष्ट्यप्रत्यक्षपरिग्रहः। "न सर्व्वे"ति अयं घट इति प्रत्यक्षे व्यभिचारादित्यर्थः। "तथा" अनुमित्युपजीविका। ननु यत्रातीन्द्रियमेव पक्षादि यथा परमाणुराकाशसंयोगी गुरुत्वादित्यादौ तत्र व्याप्तिज्ञानस्याप्यनुमितिरूपत्वात्तज्जन्यानुमितौ न प्रत्यक्षोपजीवकत्वमत आह "अनुमितयश्चे"ति तत्रापि पतनादिप्रत्यक्षस्य गुरुत्वाद्यनुमितिद्वारा उपजीव्यत्वादित्याह "परम्परया वे"ति। ननु यत्किञ्चित् प्रत्यक्षज्ञाननिष्ठमुपजीवकत्वमपि सङ्गतिरेव तथाचाविनिगमकमित्यत(२) आह "पुरस्कृतये"ति अनन्तराभिधानप्रयोजकतया मुनिना (३) आद्रत इत्यर्थः। "अयम्" अनुमितित्वरूपप्रमितिविभाजकोपाध्यवच्छिन्ननिष्ठः। "उपजीवकतोत्कर्षः" उत्कृष्टोपजीवकता। परम्परयोपजीवकत्वस्यापि सङ्गतित्वे प्रत्यक्षफलत्वावच्छेदेनापि तदस्तीत्याशङ्कते "यद्यपी"ति "अदृष्टजननीम्" अदृष्टप्रयोजिकां कार्य्यमात्रं प्रत्यदृष्टं हेतुः, अदृष्टञ्च यागादिप्रवृत्त्यधीनं, प्रवृत्तिश्चेष्टसाधनताधीसाध्या, यागादाविष्टसाधनताज्ञानञ्च वेदात्, तत्र शक्तिग्रहः कारणं, तञ्चेदं पदमत्र शक्तम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादित्यनुमितिरूपमिति भवति शक्त्यनुमितेःप्रत्यक्षप्रयोजकत्वम्। "समयः" शब्दसङ्केतः। शक्तिग्रहापेक्षयाऽव्यवधानेनोपजीव्यानुमितिं दर्शयति "मत्कर्त्तव्यते"ति यागो मत्कृति-

(१) आदिपदेनेत्यर्थः। (२) अत इत्यत आह इति न पुस्तके।

(३) कृतमतानुपादेनेत्यर्थः।

साध्यो मत्कृतिं विनाऽसत्त्वे सति(१) सत्त्वात् इत्य(२)नुमितिर्मत्कर्त्त-व्यता विषयिणीत्यर्थः। आदिना मदिष्टसाधनतानुमितिसंग्रहः। नन्वनुमितेरनुमितित्वरूपप्रमितिविभाजकोपाध्यवच्छेदेन प्रत्यक्षोपजीवकता न तु प्रत्यक्षप्रमितित्वावच्छेदेनानुमित्युपजीवकत्वम्, ईश्वरप्रत्यक्षेऽभावादत आह "ईश्वरप्रत्यक्षन्त्वि"ति तथाच फलयोर्निरूपणे फलतावच्छेदकावच्छेदेनोपजीवकत्वमेव पुरस्कर्त्तुमुचितं तच्च प्रकृतेऽस्त्येवेत्यर्थः। न च निरूप्यतावच्छेदकावच्छेदेनोपजीवकत्वमेव पुरस्कर्त्तुमुचितं, निरूप्यतावच्छेदकन्तु प्रत्यक्षत्वमीश्वरप्रत्यक्षसाधारणमिति वाच्यम् "इन्द्रियार्थसन्निकर्षोत्पन्न"-(३) मित्यादिना निरूपितस्य प्रत्यक्षत्वस्य ईश्वरप्रत्यक्षावृत्तित्वादिति। "दृष्टद्वारकं" दृष्टमात्रद्वारकम् अदृष्टाद्वारकमिति यावत्। तेनादृष्टद्वारकस्य प्रवृत्त्यादिदृष्टद्वारकत्वेऽपि न क्षतिः। "इह" अनुमितौ "तथात्वम्" उपजीवकत्वम्। "इतरस्य" अदृष्टद्वारकोपजीवकत्वस्य "अविनिगम्यत्वात्" विनिगमनाया अविषयत्वात्,

(१) अनुत्पद्यमानत्वे सतीत्यर्थः।

(२) त्वेवं रूपेत्यर्थः इति। ख पुस्तके पाठः।

(३) इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् इति न्यायसूत्रम् अ १ आ १ सू ४। अस्यार्थः, इन्द्रियस्यार्थेन विषयेण सन्निकर्षादुत्पन्नम् 'अव्यभिचारि' भ्रमभिन्नं तद्वति तत्प्रकारकमिति यावत् ज्ञानं प्रत्यक्षमिति, तच्च द्विविधम् अव्यपदेश्य व्यवसायात्मकभेदात्, "अव्यपदेश्यं" निर्विकल्पकं "व्यवसायात्मकं" सविकल्पकमिति प्रत्यक्षप्रमितिलक्षणपक्षे, प्रमाणलक्षणपक्षे तु यत इत्यध्याहारेण तादृशज्ञानं यतस्तत्प्रत्यक्षप्रमाणमिति।

एकतरपक्षपातिनी युक्तिर्हि विनिगमना । अदृष्टद्वारकोपजीवक-त्वस्य तु उभयसाधारणत्वात् नैकतरमात्रनिष्ठत्वम् । प्रत्यक्षफले अदृष्टद्वारकानुमित्युपजीवकत्ववदनुमानफलेऽप्यदृष्टद्वारकोपादान-प्रत्यक्षोपजीवकत्वस्य च(१) सत्त्वादित्यर्थः । स्वरूपत उपजीवकतां विवृणोति "सर्व्वत्रे"ति "इन्द्रियापेक्षोत्पत्तिक"मिति, अनुमित्या-त्मकव्याप्तिज्ञानेऽपि परम्परयेन्द्रिय जन्यत्वमस्त्येवेति (२) भावः । वस्तुतस्तु सर्व्वत्र मनोरूपेन्द्रियजन्यत्वमस्त्येवेति भावः । ननु व्याप्ति-ज्ञानत्वेनैवानुमिति-करणता,तथाच करणीभूतेश्वरीय-व्याप्तिज्ञानं न किञ्चिदपेक्षोत्पत्तिकमत आह "अनुमिति"मिति, "अनुमितिं(३) भावयतः" उपदानप्रत्यक्षविषयोत्पादयतः, "तत्कारणे"ति, अनु-मिति-फलोपहितकरणतानिर्व्वाहिका प्रत्यासत्तिश्च विशेषणज्ञान-त्वेन स्वजन्यपरामर्शः सर्व्वत्रकारणस्य व्यापारसम्बन्धेनैव फलोप-धायकत्वात्, विशेषणज्ञानत्वेन जनकतायाश्च सामानाधिकरण्यं प्रत्यासत्तिरत ईश्वरीयव्याप्तिज्ञानं नास्मदीयपरामर्शसम्बन्धेन फलोपहितं, तथाच तादृशस्वजन्यपरामर्शात्मकप्रत्यासत्तिविरहेण ईश्वरज्ञानस्या"तत्त्वात्" अनुमितिकरणता शून्यत्वात् । नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावापत्ते-र्जन्यव्याप्तिज्ञानत्वेनैवानुमिकर-णता वाच्येत्याशयः । एतेनाप्रत्यासन्नस्याप्यरण्यस्थदण्डादेः करण-

---

(१) 'च' नास्ति ख पुस्तके ।

(२) इन्द्रियव्यापेक्षजीयत्वमस्त्येवेति इति ख पुस्तके ।

(३) अनुमितिं इति ख पुस्तके नास्ति ।

त्वात् प्रत्यासत्त्यभावो न करणत्वाभावे साधक इति प्रत्युक्तम्। सामान्यतोऽनभिधानात्(१)। यत्तु ईश्वरीयव्याप्तिज्ञानमपि स्वजन्य-व्यापारसम्बन्धेनानुमितिफलोपहितं भवत्येव, कार्य्यमात्रोपधाय-कस्य तस्य फलानुकूलव्यापारात्मकपरामर्श प्रत्युपधायकत्वादिति तदसत् एवं सति व्यधिकरणव्याप्तिज्ञानस्य कालोपाधिविधया परामर्शोपाधायकत्वेन स्वव्यधिकरणानुमितिफलोपहितकरणत्व-प्रसङ्गेन, विशेषणज्ञानत्वेन स्वजन्यपरामर्शस्यैव तत्प्रत्यासत्तितया ईश्वरीयव्याप्तिज्ञानस्यानुमितिफलोपहितकरणत्वस्यासम्भवात्। न च येन केनापि सम्बन्धेन फलोपहितत्वेऽपि "नित्यस्येत्यादि" व्याप्तेरबाध एवेति (२) वाच्यं स्वरूपयोग्यताघटकसम्बन्धेन फलोप-धानस्यैव (३) व्याप्तौ निवेशात्। अन्यथा कपालादेर्द्रव्यत्वेन रूपेण घटजनकत्वेऽप्याकाशादेः संयोगादिसम्बन्धेन घटाद्यात्मकफल-सम्बन्धसम्भवादेतद्व्याप्त्युपादानस्यैव निष्प्रयोजनकत्वापातात्। फला-योगव्यवच्छिन्नं कारणं करणं, तादृशानुमितिकरणञ्च परामर्शः, तस्य कारणतायां सामानाधिकरण्यं प्रत्यासत्तिः, अतः फलोप-हितकरणत्वमेव (४) निरूप्यमतएव वक्ष्यति "फलोपहितस्य लक्ष्यतये"ति। तथाचेश्वरज्ञानस्य फल-समानाधिकरणस्य विरहेण

(१) सामान्यतोहेतोरनभिधानात् इति ग पुस्तके।

(२) व्याप्तेरबाध इति, इति पाठः ग पुस्तके।

(३) तत्र इत्यधिकपाठः ग पुस्तके।

(४) करणमेव इति ख पुस्तके।

तादृशफलोपहितकरणत्वाभावादित्यर्थ इति तु(१) कश्चित् । अनु-
मितिकरणत्वावच्छेदेन प्रत्यक्षोपजीवकत्वं व्यवस्थाप्य, प्रत्यक्षकरण-
त्वावच्छेदेनानुमानोपजीवकत्वस्य व्यतिरेकमाह "सर्व्वं पुन"रिति
ननु व्याप्तिज्ञानत्वेनैवानुमितिकरणता अनित्यवन्नित्येऽपि, अदृ-
ष्टादिरूपसहकारि-विरहेण फलव्यतिरेकसम्भवात्, नित्यस्येति (२)
व्याप्तेरप्रयोजकत्वादत आह "दृष्टद्वारा वे"ति तथाच करण-
तावच्छेदकधर्म्मसामानाधिकरण्येन स्वजनकादृष्टाजनकेन्द्रिय-
जन्यत्वमेवानुमाने आनन्तर्य्याभिधाननियामकमिति भावः ।
इन्द्रियत्वसामानाधिकरण्येन स्वजनकादृष्टाजनकानुमानजन्यत्वं
नास्तीत्यत आह "न चोत्पत्तिमदपी"ति अपिना करणतावच्छे-
दकधर्म्मसमानाधिकरण्यं सूचितम् । न च यत्र चक्षुर्घर्षणेन पूर्व्व-
चक्षुर्नाशानन्तरं चक्षुरन्तरोत्पादस्तत्र घर्षणजनकप्रवृत्तिजनकस्य
कृतिसाध्यतानुमानस्योपजीवकमेव चक्षुरन्तरं, तथैवौषधपानानन्तरं
प्रकृष्टचक्षुरन्तरोत्पादोऽपीति वाच्यं तत्र घर्षणजनकानुमानस्य
औषधपानजनकानुमानस्य च प्रयोजकत्वेन जनकत्वाभावादिति
(तथाच करणतावच्छेदकधर्म्मसामानाधिकरण्येन स्वजनकादृष्टा-
जनकप्रतियोगिकं यज्जन्यत्वं यत्र, तदनन्तरनिरूपणविषयत्वं
तत्रेति सारः) (३) । न चैवमदृष्टाद्वारकत्वं व्यर्थम् अदृष्टद्वारका-

---

(१) तु नास्ति ग पुस्तके ।

(२) नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति व्याप्तेरित्यर्थः ।

(३) ( ) एतन्मध्यस्य पाठः ख पुस्तके नास्ति ।

नुमानस्येन्द्रियजनकत्वाभावादिति वाच्यम् ईश्वरज्ञानस्याप्ये-तत्कत्वे अनुमितिकरणतया (१) तद्वारणायैव तदुपादानादिति। अदृष्टद्वारकोपजीवकत्वस्योभयत्रापि (२) सत्त्वान्न विनिगमकमिति भावः।

## दीधितिः।

अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यत इति न नियमः, क्वचित् कार्य्यं निरूप्यापि कारण-निरूपणादिति चेत् किञ्चातो, न हि सङ्गतिरनन्तराभिधानव्याप्ता, आनन्तर्य्याभिधान-प्रयोजक-जिज्ञासाजनकज्ञानविषयो ह्यर्थः सङ्गतिं, जायते च कार्य्ये कारणे वा ज्ञाते कारणत्वस्य कार्य्यत्वस्य ज्ञानात्, किमस्य कारणं कार्य्यं वेति जिज्ञासा, अतस्तयोर्द्वयोरपि सङ्गतित्वमित्यस्योपजीवकतायास्तुल्यत्वेऽपि न क्षतिरिति मन्तव्यम्।

## दीधिति प्रकाशः।

“न नियम” इति तथाचोपजीवकत्वादिति हेतुपक्षस्यानुपपन्नैवेति भावः। “क्वचित् कार्य्यं निरूप्यापी”ति, यथात्रैवानुमिति-

(१) अनुमितिकरणीभूतेश्वरीयव्याप्तिज्ञानोपजीवकत्वस्य चक्षुरादौ सत्त्वेन तद्वारणायेत्यर्थः। तथाचेश्वरीयव्याप्तिज्ञानस्य स्वजनकादृष्टजनकतयाऽदृष्टाद्वारकानुमानोपजीवकत्वं चक्षुरादौ नास्तीति भावः।

(२) अपि इति नास्ति ग पुस्तके।

निरूपणानन्तरं तत्कारणनिरूपणमिति भावः । तज्ज्ञानजन्य-
जिज्ञासाप्रयोज्यत्वं पञ्चम्यर्थो न तु ज्ञानज्ञाप्यत्वमित्याशयेनाह
"किज्ञात" इति एतादृ(१)शनियमाभावे किमनिष्टमिति भावः ।
नन्वनन्तराभिधानाव्याप्यत्वे तस्य सङ्गतित्वमनुपपन्नमनन्तराभि-
धानव्याप्यत्वस्यैव तद्घटकत्वादत आह "न ही"ति सङ्गतिलक्षण-
पर्य्यालोचनेन(२) तस्यानन्तराभिधानाव्याप्यत्वं दर्शयितुं तल्लक्षण-
माह "आनन्तर्य्य"ति (३) अनन्तराभिधाने प्रयोजिका या जिज्ञासा
तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः । जिज्ञासाजनकज्ञानविषय-
घटादावतिव्याप्तिवारणाय प्रयोजकान्तम् । प्रत्यक्षस्य कारणत्वज्ञाने
कारणस्य कार्य्यमावश्यकमिति क्रमेण कार्य्यत्वरूपेण कार्य्यसामान्य-
ज्ञानं, ततः सामान्यधर्म्मप्रकारकज्ञानस्य विशेषधर्म्मप्रकारक-
जिज्ञासाजनकत्वात् किमस्य कार्य्यमित्याकारिका शिष्यजिज्ञासा,
ततः शिष्यस्य किमस्य कार्य्यमिति शब्दप्रयोगः, ततः शिष्य-
जिज्ञासाज्ञानं गुरोः, ततः शिष्यज्ञानगोचरेच्छा, तत इष्टसाधनता-
ज्ञानेनानन्तराभिधानमिति क्रमेण (४) जिज्ञासाया (५) अनन्तरा-
भिधानप्रयोजकत्वम् । न च ज्ञानगोचरेच्छा जिज्ञासा, तत्र

---

(१) तादृश इति पाठः ख, ग पुस्तके ।
(२) अपि इति अधिकपाठः ग पुस्तके ।
(३) अनन्तरमेवानन्तर्य्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् इति भावः ।
(४) शिष्य इति अधिकपाठः ग पुस्तके ।
(५) जिज्ञासायां इति ग पुस्तके ।

च (१) ज्ञाने इष्टसाधनताज्ञानं हेतुरिति तद्विषयेष्टसाधनत्वे (२) ऽतिव्याप्तिरिति वाच्यं तादृशजिज्ञासां प्रति समानविशेष्यत्व(३) प्रत्यासत्त्यनवच्छिन्ना या जनकता तदवच्छेदकं यत्प्रकारकज्ञानत्वं तत्त्वस्योक्तत्वात्। इष्टसाधनताज्ञानस्य हेतुतायां समानविशेष्यत्वं (४) प्रत्यासत्तिः, न तु कार्य्यत्वप्रकारकज्ञानत्वेन कार्य्यत्वावान्तरधर्म्मप्रकारकजिज्ञासात्वावच्छिन्नं प्रति (५) हेतुतायाम्। कार्य्यत्वेन वस्तुतो (६) घटज्ञानेऽपि कार्य्यत्वावान्तरधर्म्मप्रकारकज्ञाने एवेच्छोदयात्। अवच्छेदकत्वं तत्पर्य्याप्त्यधिकरणत्वं तेन कार्य्यत्वघटकैकदेशनिरासः। एतल्लाभायैव चार्थपदम्। यत्प्रकारकेत्यभिधानाच्च न कार्य्यादौ धर्म्मिण्यतिव्याप्तिरिति। यत्तु तादृशजिज्ञासात्वव्याप्यधर्म्मावच्छिन्नकार्य्यताप्रतियोगिककारणतायां यत्प्रकारकज्ञानत्वमवच्छेदकं तत्त्वमर्थं, उपायेच्छात्वावच्छिन्नं प्रत्येवेष्ट-साधनत्वज्ञानस्य हेतुत्वादुपायेच्छात्वस्य घटेच्छादिसाधारण्येन तादृशजिज्ञासात्वव्याप्यत्वाभावादिति तन्न कार्य्यत्वावान्तरधर्म्म-

---

(१) 'तत्र च' जिज्ञासायाञ्च तथाच ज्ञानधर्म्मिकेष्टसाधनताज्ञानं जिज्ञासां प्रतिजनकमितिभावः।

(२) तद्विषय इष्टसाधनत्वे इति ग पुस्तके।

(३) विशेष्यकत्व इति ग पुस्तके।

(४) विशेष्यकत्वं इति ग पुस्तके।

(५) "जिज्ञासात्वावच्छिन्न हेतुतायां" इति पाठः ख पुस्तके।

(६) वस्तुगत्या इति ख. ग पुस्तकयोः।

प्रकारकजिज्ञासात्वादीनामानन्तर्य्याभिधानप्रयोजकजिज्ञासात्वा-
व्याप्यत्वात्, तादृशकार्य्यकारणभावमादाय प्रकृतलक्षणगमनासम्भवात् । तत्तद्व्यक्तित्वावच्छिन्नकार्य्यताप्रतियोगिककारणतायाश्च
तत्तद्व्यक्तित्वस्यैवावच्छेदकतया कार्य्यत्वप्रकारकज्ञानत्वस्यानवच्छेदकत्वात् । यच्चेष्टसाधनत्वं कार्य्यकारणभावात्मकतया सङ्गतिरेवेति तत्रातिव्याप्तिर्न दोषायेति तत्तुच्छं प्रत्यक्षानुमानयोः
कार्य्यकारणभावो हि तयोः सङ्गतिर्नत्विष्टसाधनत्वं, तथाच
यदनन्तरं यदभिधानं तत्प्रयोजकजिज्ञासाजनकज्ञानविषयो यः स
तयोः सङ्गतिरित्येवं रूपे(१) प्रत्यक्षानुमानसङ्गतिलक्षणे इष्टसाधनत्वेऽतिव्याप्तेरपरिहारात् । यद्धर्म्मव्याप्यधर्म्मप्रकारकज्ञानमानन्तर्य्याभिधानप्रयोजकजिज्ञासाजनकं सधर्म्मः सङ्गतिः, अतएव सामान्यधर्म्मप्रकारकज्ञानस्य स्वातन्त्र्येण विशेषधर्म्मप्रकारकजिज्ञासां प्रतिजनकत्वाभावेऽपि न क्षतिर्न वा इष्टसाधनत्वेऽतिव्याप्तिरित्यपि
कश्चित्(२) । अत्र वदन्ति गेहे घटोऽस्तीत्यभिधानानन्तरं घटत्वसामान्यज्ञानात् को घट इति जिज्ञासायां, कम्बुग्रीवादिमान्
घट इत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये घटत्वे
अतिव्याप्तिरेवम् आधारत्वज्ञानानन्तरम् आधेयत्वसामान्यज्ञानात्
किमस्याधेयमिति जिज्ञासायाम् आधेयस्यानन्तराभिधानादाधेय-

(१) रूप इति ग पुस्तके ।

(२) अतिव्याप्तिरिति केचिदिति पाठः ग पुस्तके ।

त्वाद्यावपीति (१) अत्र ब्रूमः गेहे घटोऽस्तीत्यादौ घटत्वादिकं सङ्गतिरेव। उपोद्घातमध्ये निवेशात्। तथाहि चिन्ता प्रकृतसिद्ध्यर्थां उपोद्घातं विदुर्बुधा (२)। इत्यनेन प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छेदेन(३) प्रकृतानुकूलत्वमुपोद्घातः, प्रकृतत्वञ्च तत्र तत्र विशिष्योपादेयम्। अनुकूलत्वञ्च क्वचिद्घटकत्वं क्वचिज्ज्ञापकत्वमित्यादिक्रमेण बोध्यम्। घटकत्वं यथा, व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमित्यत्र अज्ञातव्याप्तिकस्य व्याप्तिपदवाच्यत्वेन ज्ञाते काव्याप्तिरित्याकारिकायां जिज्ञासायां व्याप्तिनिरूपणम्। एवमिन्द्रियासन्निकृष्टे पर्व्वतीय-धूमे व्याप्तिविशिष्टत्वधीर्न तदुपस्थापकं विनेति, किं तदुपस्थापकमित्याकाङ्क्षायां सामान्यलक्षणानिरूपणम्, एवं विशिष्टज्ञानस्यानुमितिहेतुत्वे किं ज्ञापकमित्याकाङ्क्षायां परामर्शस्यानुमितिहेतुत्व(४)व्यवस्थापनमिति तत्र तत्रोपोद्घातपद(५)प्रयोगः। प्रकृते चाज्ञातघटपदार्थस्य घटोऽस्तीत्यतो घटपदवाच्यत्वेन ज्ञाने, को घटपदवाच्य इति जिज्ञासायां, कम्बुग्रीवादिमान् घट इत्यादिक्रमेण निरूपणे (६) प्रकृतघटास्तित्व-

(१) अतिव्याप्तिरिति शेष इति भावः।

(२) चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा इति क, ग पुस्तके।

(३) कालावच्छेदेनेत्यत्र कालावच्छेदेनेति पाठः ग पुस्तके।

(४) हेतुता इति ग पुस्तके।

(५) पद इति नास्ति ग पुस्तके।

(६) कम्बुग्रीवादिमानिति निरूपणे इति ग पुस्तके।

सिद्धानुकूलचिन्ताकालीनस्य (१) घटास्तित्वघटकत्वेन घटत्वस्यो-पोद्घातत्वसम्भवाद्घटत्वादीनामुपोद्घातमध्ये निवेशः(२)। एवमाधेय-त्वादिकमपि सङ्गतिमध्ये निवेश्यते। आधारप्रसङ्गेन स्मृतस्या-धेयस्यानुपेक्षणीयत्वज्ञानेन जिज्ञासोदयात्। केचित्तु घटो-ऽस्तीत्यादौ घटपदवाच्यत्वम् आधेयत्वादिकञ्च प्रसङ्ग एव, अनुपेक्षणीयत्वं हि उपेक्षानर्हतावच्छेदकधर्मवत्त्वं, स च धर्मो घटपदवाच्यत्वाधेयत्वादिः, उक्तरूपेनैवानुगमान्नाधिक्यमित्याहुः। तन्न स्मृतिकालावच्छेदेनोपेक्षानर्हत्वं प्रसङ्गः, अत्र स्मृतिकालाव-च्छेदः स्वरूप सन्, इतरांशो ज्ञात उपयोगी, स्मृतिरनुपेक्षणी-यता चाभिधातुरेव, स्वयं स्मृतायां जिज्ञासानुदयात्, स्वीयानु-पेक्षणीयत्वज्ञानस्य जिज्ञासाजनकत्वाभावाच्च। केचित्तु श्रोतुरेव स्मृतिरनुपेक्षणीयता च वक्तुः अस्मिन् पृष्टे वक्तुरुपेक्षा न भव-तीति (३) प्रतिसन्धाय वक्तुर्जिज्ञासोदयादित्याहुः, (४) एवं प्रकृत-सिद्ध्यनुकूलचिन्ताकालावच्छेदेन प्रकृतानुकूलत्वमुपोद्घातः चिन्ता च वक्तुर्ग्राह्या। अत्रापि तादृशकालावच्छेदः स्वरूपसनुपोद्घातपद-

---

(१) कालीनस्य घटास्तित्वघटकत्वस्य सत्त्वेनोपोद्घातत्वसम्भवादिति क पुस्तके, कालीनस्येत्यत्र कालीन इति ख पुस्तके।

(२) घटत्वादीनामुपोद्घातमध्ये निवेशः इति नास्ति क ख पुस्तकयोः।

(३) वक्तुरुपेक्षा न भविष्यतीति ख पुस्तके। वक्तुरुपेक्षाज्ञानं भविष्यतीति क पुस्तके।

(४) प्राहुरिति ग पुस्तके।

नियामकः, इतरांशः ज्ञात उपयोगी (१)। एवं प्रतिबन्धकीभूत-शिष्यजिज्ञासानिवृत्तौ(२) अवश्यवक्तव्यत्वमवसरः, अत्रापि निवृत्त्यंशः स्वरूपसन्, इतरांशः ज्ञात(३) उपयोगी। यथा अनुमाननिरूपणानन्तरं तादृशजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वज्ञानात्, किं वक्तव्यमिति श्रोतुर्जिज्ञासानन्तरम् उपमाननिरूपणमिति। जिज्ञासितार्थसिद्धत्वमवसर इति कश्चित्, तस्यापि पूर्व्वोक्त एव पर्य्यवसानम्। भवति हि जिज्ञासाविषये सिद्धे (४) इदं ज्ञातं किमन्यद्वक्तव्यमिति जिज्ञासेति।

निर्व्वाहकत्वमेककार्य्यनिर्व्वाहकत्वं तच्च प्रयोजकत्वं कारण कारणतावच्छेदक-साधारणम्। यथा व्याप्तिपक्षधर्म्मतयोरनुमित्यजनकत्वेपि तज्जनकीभूतज्ञानविषयतावच्छेदकत्वेनैककार्य्यानुकूलत्वं, तत्र सामान्यतोऽनुकूलत्वज्ञाने किन्तदनुकूलमिति जिज्ञासायामनन्तरं पक्षधर्म्मतानिरूपणमिति। एककार्य्यत्वं एक(५) कार्य्यता, प्रयोज्यता, सा च जन्यता जन्यज्ञान-विषयता च, यथेश्वरशक्त्योरनुमानाजन्यत्वेपि तज्जन्यज्ञानविषयत्वलक्षणैककार्य्यत्वसङ्गत्या

---

(१) एवं हेतुतापदस्य लक्षणया कार्य्यत्वं कारणत्वञ्चार्थस्तदन्यतरत्वेन विभागाच्च षड्विधत्वभङ्ग इत्यधिकपाठः ग पुस्तके।

(२) सत्यां इत्यधिकपाठः ग पुस्तके।

(३) इतरांश एव ज्ञातः इति ग पुस्तके।

(४) जिज्ञासाविषयसिद्धत्वे इति ग पुस्तके।

(५) एकस्य इति ख, ग पुस्तके।

मीमांसकेन शक्तिराशङ्किता नैयायिकेनेश्वरसिद्ध्यनन्तरं शक्तिं निरस्य "परमप्रयोजनमनुमानस्यापवर्ग"(१) इत्यनेन ईश्वरसिद्ध्यपवर्गयोरनुमानजन्यत्वलक्षणैककार्य्यत्वसङ्गतिः सूचिता । सामान्यत एककार्य्यत्वज्ञाने किमस्यान्यत्कार्य्यमिति जिज्ञासायां विशिष्य कार्य्यान्तराभिधानेन सामान्यलक्षणमसम्भवात् । यत्तु निर्व्वाहकत्वं उपपादकत्वं तत्र उपपादकत्वं हि न ज्ञापकत्वं घटकत्वं वा, उपोद्घातेन गतार्थत्वात्, न कारणत्वं हेतुतया गतार्थत्वात् । एवं सर्व्वत्रोहणीयम् । अत्र च विभिन्नतात्पर्य्यके सङ्गतिव्यवहाराभावादेकवाक्यतापन्नत्वं सामान्यलक्षणे विशेषलक्षणे च देयम् । अतश्च तादृश-जिज्ञासा-स्वरूपयोग्यत्वस्यातिप्रसक्तत्वात् फलोपधानस्य च सर्व्वत्रासम्भवात् प्रसङ्गाद्यन्यतमत्वं तत्त्वमिति ध्येयम् । "जायते चे"ति कार्य्यज्ञाने कार्य्यं सकारणकमितिरीत्या कारणत्वस्य ज्ञानात् किमस्य कारणमिति जिज्ञासा, कारणे-ज्ञाते कारणं सकार्य्यमितिरीत्या कार्य्यत्वस्य ज्ञानात् किमस्य कार्य्यमिति जिज्ञासेत्यर्थः । "द्वयोरपी"ति तथाच सङ्गतेरनन्तराभिधानव्याप्यत्वं सुतरामसम्भवि तादृशवादिमते कारणत्वे (२) व्यभिचारादिति भावः । "इत्यस्य" सङ्गतेरनन्तरा-

---

(१) "तदत्यन्तविमोक्षोऽपवर्गः" इति न्यायसूत्रं अ १ आ १ सू २२ । अस्यार्थः 'तस्य' दुःखस्य 'अत्यन्तविमोक्षः' स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः, 'अपवर्गः' मोक्षः स्वपदं दुःखध्वंसपरं इति ।

(२) कारणे इति ग पुस्तके ।

भिधानाव्याप्यत्वे च, "एवञ्चोपजीवकत्वा"दिति पञ्चमी न हेतुतायां, किन्तु ज्ञानजन्य जिज्ञासा-प्रयोज्यतायामिति भावः।

दीधितिः।

लाघवादन्नैवोपमानस्य (१) सङ्गतिं दर्शयति "बहुवादी"ति सुप्रसिद्धतया निरसनीयाल्पवादि-विप्रतिपत्तिकत्वेन सुप्रतिपदतया चानुमान एव व्युत्पित्सोः प्रथमं जिज्ञासा नोपमानेऽप्रसिद्धत्वात्, निरसनीयबहुवादि विप्रतिपत्तिकत्वेनातिदुरूहत्वाच्च, औत्सर्गिकीं रीतिमनुरुध्य चेदं, तेन प्रथमं कस्यचिद्दुरूहे जिज्ञासोदयेपि न क्षतिः। तथा चात्रावसरसङ्गत्योपमान-निरूपणमिति भावः। यथा चावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे।

दीधिति प्रकाशः।

"लाघवादत्रैवेति"(२) यद्यपि उपमानेपि (३) सङ्गति प्रदर्शने (४) तादृशशब्देनैवाभिधातुं शक्यत्वान्न शब्दलाघवं तथापि प्रकरण-

(१) लाघवादात्रैवोपमानस्य इति क्वचित् पाठः।

(२) "लाघवात्रेति" इति ग पुस्तके।

(३) उपमान एव इति ख पुस्तके।

(४) प्रदर्शनस्य इति ख पुस्तके।

लाघवादित्यर्थः। प्रकरणस्य सङ्गतिप्रयोजिकाकाङ्क्षा, प्रत्यक्षा-नन्तराभिधाने उपमानात्प्रागभिधाने किं नियामकमिति जिज्ञा-साया औत्सर्गिकत्वेन, तामनादृत्य उपमानग्रन्थे तत्सङ्गतिप्रदर्शना-काङ्क्षान्तरकल्पने गौरवमिति भावः। ननु बहुवादि-सम्मतत्वं न सङ्गतिरत आह "सुप्रसिद्धतये"त्यादि अनुमानस्य सुप्रसिद्धत्वेन सामान्यधर्मप्रकारक-ज्ञानस्य विशेष-धर्मप्रकारक-जिज्ञासा जन-कस्य सम्भवादिति भावः। "सुप्रतिपदतये"त्यत्र हेतुः "निरस-नीये"ति निरसनीयाल्पवादि-विप्रतिपत्तियेन तत्तथेत्यर्थः। दुरूह-त्वेन बलवदनिष्टसाधनत्वज्ञानात् कदाचिदिच्छा-प्रतिबन्धः स्यादतः सुप्रतिपदत्वं प्रथमजिज्ञासायामुपयोगि। दुरूहत्वे हेतुः "निर-सनीय बहुवादी"ति ननु सुगमस्य स्वयमप्यूहयितुं शक्यत्वादिति न्यायेन सुगममुपेक्ष्य दूरूहे कस्यचित् जिज्ञासा प्रथमं भवत्येवेत्यत आह "औत्सर्गिकी"मिति। ननु प्रतिबन्धकीभूताया जिज्ञासाया निवृत्तिः प्रतिबन्धकाभावान्तरवत् स्वरूपसती हेतुर्न तु ज्ञाता, मानाभावादत आह "यथाचे"ति। "आकरे" प्रमाणतत्त्वबोधादौ। प्रतिबन्धकजिज्ञासानिवृत्तौ सत्या(१)मवश्यवक्तव्यत्वमेवावसरः। वक्तव्यत्वज्ञानादेव जिज्ञासन्ते इति (२) न लक्षणाव्याप्तिः। अतएव ग्रन्थशेषे अवसरसङ्गत्यभाव-सूचनाय प्राचां 'इति' शब्दस्य 'विरम्यते' इति शब्दस्य वा उपनिबन्धः।

---

(१) सत्यामिति नास्ति ग पुस्तके।

(२) वक्तव्यतज्ञानादेव जिज्ञासेति इति पुस्तके।

दीधितिः ।

शब्दान्तरसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकं-सामान्यतो दृष्टमन्ततोऽदृष्टजनक-प्रवृत्त्यौपयिकञ्चानुमानमपेक्षते निखिलमेवोपमानमितीहाप्युपजीवकत्वमेव सङ्गतिरित्यपि केचित् ।

---

दीधिति प्रकाशः ।

"शब्दान्तरे"ति उपमितिविषयीभूतगवयपदातिरिक्तगोसदृशपदादिशक्तिग्राहकमित्यर्थः । शब्दान्तरसमयग्राहकं केवलमतिदेशवाक्यार्थस्मृतिरूपव्यापारमात्रोपधाने उपयोगि,(१) न तूपमितौ, तत्र गोसादृश्यादीनामविषयत्वादत उपमितिविषयीभूतगवयपदे सप्रवृत्तिनिमित्तकत्व बोधक(२)मनुमानमुपजीव्यत्वेन दर्शयति "सप्रवृत्ती"ति । समानवित्तिवेद्यतया गवयपदप्रवृत्तिनिमित्तत्वविषयकं 'गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वा'दित्याकारकमित्यर्थः । गवयो गवयपदप्रवृत्तिनिमित्तवानित्युपमितौ गवयपदप्रवृत्तिनिमित्तत्वस्य विशेषणतया तद्ग्राहकस्यानुमानस्योपजीव्यत्वा(३)दितिभावः । इदञ्च चिन्तामणिकारमते । आचार्यमते तु गवयो गवयपदवाच्य इत्येवोपमितिस्वीकारादितिध्येयम् ।

---

(१) स्मृतिरूपव्यापारमात्रोपयोगि इति ग पुस्तके पाठः ।

(२) गवयपदप्रवृत्तिनिमित्तत्वबोधक इति ख ग पुस्तके ।

(३) ग्राहकस्योपजीव्यत्वादिति ख पुस्तके ।

अत्रोपमितावयं क्रमः, अगृहीत गवयपदशक्तिकस्य कीदृशो गवयपदवाच्य इति प्रश्नानन्तरं, गोसदृशो गवयपदवाच्य इत्याकारकातिदेशवाक्यार्थज्ञानं, (१) ततः सादृश्यविशिष्टपिण्डदर्शनं, तदेव करणं, ततोऽतिदेशवाक्यार्थ स्मृतिः, सैवव्यापारः (२) ततो गवयो गवयपदवाच्य इत्युपमितिरिति । नन्वेतावता उपमितिं प्रत्युपजीव्यत्वं दर्शितं, न तूपमानस्वरूपं प्रत्यपीत्यत आह "अन्तत" इति उपमितिकरणस्यापि कार्य्यत्वेना(३)दृष्टजन्यत्वात् तज्जनक-प्रवृत्त्यौपयिकानुमानसापेक्षमेवोपमानमित्यर्थः । अयं गवयपद-वाच्यगवयवान् गवयसंयोगादित्यनुमानव्यक्तिविशेषस्यापि गवयो गवयपदवाच्य इत्युपमानोपजीवकत्वादाह "निखिलमेवे"ति तत्रानुमानत्वावच्छेदेन नोपजीवकतेति न दोषः । केचिदित्य-स्वरसबीजं "बहुवादिसम्मतत्वा"दिति मूलेनैता(४)दृशसङ्गतेर-प्रदर्शनादुपन्यासन्दर्भः ।

दीधितिः ।

सम्भवति चेह निरूपणयोरपि कार्य्यकारणभावः, "अथ तत् पूर्व्वक"मित्यादिसूत्रे प्रत्यक्षपूर्व्वकत्वेनानु-

(१) इत्याकारकातिदेशवाक्यानन्तरमतिदेशवाक्यार्थज्ञानमिति ग पुस्तके ।

(२) सैवव्यापार इति नास्ति ख, घ पुस्तकयोः ।

(३) कार्य्यत्वेनेत्यत्र कार्य्यतयेति पाठः ग पुस्तके ।

(४) मूलेन तादृश इति ख, ग पुस्तके ।

माननिरूपणात् तच्छब्देन व्याप्त्यादिप्रत्यक्षपरामर्शात् । अत्रापि सहचारप्रत्यक्षजन्यत्वादिना तन्निरूपणात्, तस्य च प्रत्यक्षनिरूपणाधीनत्वात्, एवमनुमानभिन्नत्वेनोपमाननिरूपणमप्यनुमाननिरूपणापेक्षमिति संक्षेपः ।

दीधिति प्रकाशः ।

ननु सङ्गतेरनियामकत्वेऽनन्तराभिधाने किं नियामकमतआह "सम्भवति चे"ति एवञ्च निरूपणयोः कार्य्यकारणभावः सङ्गतिमुद्रया नोक्त इति न दोषः ।

निरूप्ययोरिव निरूपणयोरपि कार्य्यकारणभावो यथाकथञ्चिज्जिज्ञासाजननद्वारा सङ्गतिरेवेत्यपि कश्चित् । "इह" प्रत्यक्षानुमानस्थले "निरूपणयोः" प्रत्यक्षानुमानज्ञानयोः(१) । एवञ्च प्रत्यक्षपूर्व्वकत्वेनानुमानज्ञानजननार्थं प्रत्यक्षज्ञानस्य प्रथममपेक्षितत्वादादौ प्रत्यक्षमभिहितमिति भावः । "निरूपणयो"र्ज्ञानजनकशब्दयोः "कार्य्यकारणभावः" प्रयोज्य प्रयोजकभाव इत्यर्थं इति तु (२) कश्चित् । "अथ तत्पूर्व्वकमनुमानं त्रिविधं पूर्व्ववत् शेषवत् सामान्यतो दृष्टञ्चेति सूत्रं (३) "अथ" प्रत्यक्षलक्षणानन्तरं,

---

(१) प्रत्यक्षज्ञानानुमानज्ञानयोरिति ग पुस्तके ।

(२) तु इति नास्ति ग पुस्तके ।

(३) न्यायसूत्रं अः १ आ १ सू ५ ।

अनुमानमुच्यत इति शेषः । त्रैविध्यं दर्शयति "पूर्ववदि-
त्यादिना । "पूर्वं" कारणं तल्लिङ्गकं यथाव्यततन्तुसंयोगेन
महापटानुमानं, "शेषः" कार्यं तल्लिङ्गकं यथा नदी उपरिदेशे
वृष्टिमती विशिष्टप्रवाहवत्त्वादिति, "सामान्यतो दृष्टं" कार्य-
कारणभिन्नलिङ्गकं यथा इच्छा द्रव्याश्रिता गुणत्वादिति । यद्वा
"पूर्वव"दन्वयि, "शेषो" व्यतिरेकी, "सामान्यतः" सामान्येना-
न्वयव्यतिरेकसाधारणेन सहचारेण गृहीतं, एवञ्च केवलान्वयि-
साध्यकं, केवलव्यतिरेकिसाध्यकं, अन्वयव्यतिरेकिसाध्यकमित्यर्थः ।
अत्र चानुमानमनुमितिः कारणलिङ्गिकेत्येवं व्याख्येयम् । सूत्रे
तु (१) यत इत्यध्याहृत्य तादृशानुमितिर्यतस्तदनुमानमिति-
रीत्याऽनुमितिकरणस्यापि लक्षणं लब्धम् । फलायोगव्यवच्छिन्नं
कारणं करणमिति मते च तृतीयलिङ्गपरामर्श एवानुमानमिति,
अनुमानपदञ्च यथाश्रुतार्थकमेव, तद्यत इति नाध्याहर्त्तव्यमिति ।
"व्याप्त्यादी"त्यादिना साध्य-साधन-तत्सहचार-पक्षादिपरिग्रहः ।
अत्र च "तत्पूर्वक"मित्यत्र तत्पदेनेन्द्रियार्थसन्निकर्षोत्पन्नत्वेन
प्रत्यक्षस्य "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान"मित्यादिपूर्वसूत्रेण
प्रक्रान्तस्य परामर्शः । तेन स्वरूपनिरूपणयोः फलनिरूपणयोश्च
कार्यकारणभावागमः । अन्यथा प्रत्यक्षफलनिरूपणानुमिति-
करण(२)निरूपणयोरेवोपजीव्योपजीवकभावलाभेनासङ्गतिः स्या-

(१) यतस्तु इति पाठः क पुस्तके ।
(२) करण इति नास्ति ग पुस्तके ।

दिति ध्येयम्। नन्वेवमपि (१) सौत्रक्रमोपपादनेपि अत्रत्य क्रमो नोपपादित इत्यत आह "अत्रापी"ति "अत्रापि" अनुमानखण्डेपि। "सहचारप्रत्यक्षे"ति यद्यपि व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकमित्युक्तं तत्र च (२) प्रत्यक्षं विशेष्यमिति कथं तन्निरूपणस्य हेतुत्वं तथापि प्रत्यक्षमप्रतिपाद्य प्रत्यक्षं व्याप्तिग्राहकमिति(३)बोधयितुं पुरो (४) न शक्यते (५) तत्रापि प्रत्यक्षनिरूपणं हेतुरिति बोध्यं (६) तत्रापि (७) प्रत्यक्षखण्डे इन्द्रियत्वेनेन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति लक्षणकरणात् करणनिरूपणयोः कार्य्यकारणभावावगमः। "तस्य" तेन रूपेणानुमाननिरूपणस्य। अनुमानोपमानयोरपि क्रमनियामकमाह "एव"मिति अनुमानस्योपमानान्तर्गतत्वमप्रसक्ततया न निराकृतं, उपमानस्य चानुमानान्तर्गतत्वं प्रसक्तं, एकदेशिनामनुमानेनैवोपमानकार्य्यान्यथासिद्ध्युपगमादत उपमानखण्डे अनुमानभिन्नत्वेनोपमानं निरूपितमिति तदर्थं अनुमानं प्राङ् निरूपितमितिभावः।

---

(१) अपि इति नास्ति ग पुस्तके।

(२) च इति नास्ति ग पुस्तके।

(३) परेण इत्यधिकपाठः ग पुस्तके।

(४) पुरो इति नास्ति ग पुस्तके।

(५) न शक्यत इति, इति पाठः ख पुस्तके।

(६) बोध्यमित्यत्र ध्येयमिति ख, ग पुस्तकयोः पाठः।

(७) अत्रापि इति क, ख पुस्तकयोः पाठः।

नन्वनुमानलक्षणे कर्त्तव्येऽनुमितिः किमिति लक्ष्यत इत्यत आह "लक्षणस्वरूपे"ति।

दीधितिः।

*तत्र लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये* करणस्य क्रियाभेदभिन्नमूर्त्तिकतया क्रियालक्षणपूर्व्वकं तल्लक्षणमाह "व्याप्ती"त्यादिना।

तत्त्वचिन्तामणिः।

तत्र व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानम्। तच्च लिङ्गपरामर्शो न तु परामृश्यमाणं लिङ्गमिति वक्ष्यते।

---

दीधिति प्रकाशः।

लक्षणं "तत्करण"मित्यादिना, स्वरूपं "तच्चे"त्यादिना, प्रामाण्यं "अनुमानं न प्रमाण"मित्यादिना निरूपितम्। आदिना "तच्चानुमानं त्रिविध"मिति विभागादिसंग्रहः। एतेषु सर्व्वेषु अनुमितेर्विशेषणत्वादिति भावः। "प्रामाण्यादिभि"रिति तृतीया प्रकारितायां,(१) निरूपणं शब्दः, तथाच लक्षणस्वरूपप्रामाण्यादिप्रकारकशब्दविषयेऽनुमाने विशेषणत्वेन प्रविष्टा यानुमिति(२)रित्य-

(१) प्रामाण्यादेर्निरूपणेऽहेतुत्वादाह तृतीयाप्रकारितायामिति एतेन हेतौ तृतीयेति भ्रमो निरस्त इति भावः।

(२) विशेषणत्वेनानुप्रविष्टेयमनुमितिरिति न पुस्तके पाठः।

र्थात् न प्रथमान्तान्वयविरोधः। तथाचाधारसप्तमी, स्वविषयक-निरूपणप्रकारत्वं सम्बन्धः। प्रकारत्वं विषयत्वस्य व्यापारानुबन्धितया बोध्यम्। "अनुमाने निरूपणीये" इति सति सप्तमी अनुमाननिरूपणे कर्त्तव्ये इति तु कश्चित्। "अनुमाने निरूपणीये" अनुमाननिरूपणार्थं तथाच निमित्तसप्तमी, अनुमानस्य विशेष्यतया निरूपणस्य विशेषणतया पूर्व्ववाक्येन बोधितत्वात् (१) अनुमाननिरूपणे इति परामर्शस्यासम्भवात् विशेषणस्य निरूपणस्य निमित्ततया विशिष्टे निमित्तत्वस्य विवक्षितत्वात्तथोक्तमित्यन्ये। अत्रोभयत्राप्यनुमितिर्निरूप्यत इत्यन्वयः। ननु भवतु सर्व्वत्रानुमितेरनुप्रवेशः, अनुमितिघटितमेवानुमानलक्षणं किमिति कृतं अन्यथापि (२) तल्लक्षणसम्भवादत आह "करणस्ये"ति अत्र मूर्त्तिः करणत्वं, तच्च क्रियाभेदेन भिन्नं, भेदो वैजात्यं तथाच प्रत्यक्षादिकरणतातोऽनुमिति करणताया विभिन्नत्व एव प्रत्यक्षानुमानयोर्विभिन्नप्रमाणत्वं, व्याप्तिशब्दोभयविषयकस्यैकस्य करणस्याभिन्नत्वेऽपि शब्दानुमानत्वेन पृथक् प्रामाण्यव्यवहारात्, तथाच प्रत्यक्षादिप्रमितितोऽनुमितिप्रमितेर्वैलक्षण्यज्ञानार्थम् अनुमितिलक्षणमिति भावः।

दीधितिः।

अत्र व्याप्तिविशिष्टत्वपक्षधर्म्मत्वसामानाधिकरण्या-

---

(१) तच्छब्देन इत्यधिकं क पुस्तके।

(२) अपीति नास्ति क पुस्तके।

वगाहिज्ञानजन्यत्वमर्थः । कर्म्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् । ज्ञानपदोपसन्धानेन च बाधिताबाधितसाधारणज्ञानलाभात्, न भ्रान्तानुमित्यव्याप्तिरित्याहुस्तन्न परामर्षेण नियमतो व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहे मानाभावात्, गौरवेण तद्विषयत्वेनाहेतुत्वात् सम्बन्धसम्बन्ध्यग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात् । भ्रमस्थले तादृशसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानस्याभावात् । असत्ख्यातिनिरासात् ।

---

दीधिति प्रकाशः ।

"तत्र" क्रियालक्षणवाक्ये । "कर्म्मधारयोत्तरे"ति ननु भावप्रत्ययस्य शक्तिः सामानाधिकरण्यत्वेन तत्तत्पदार्थतावच्छेदकद्वय सामानाधिकरण्यत्वेन वा, आद्ये नीलत्वोत्पलत्वयोः (१) सामानाधिकरण्यालाभ, स्तयोः पदार्थतावच्छेदकत्वेन सामानाधिकरण्येऽनन्वयात् । न च तत्तत्पदे नीलत्वोत्पलत्वयोरेव लक्षणा, गौरवात्, नीलत्वोत्पलत्वयोरभेदस्य बाधितत्वात्, नीलोत्पलपदान्नीलाभिन्नोत्पलानुभवापलापाच्च (२) द्वितीये नीलोत्पलीयं नीलत्वोत्-

(१) नीलोत्पलत्वयोरिति च पुस्तके ।

(२) पदान्नीलाभिन्नमुत्पलमित्यभेदानुभवापलापापत्तेश्च इति ग पुस्तके ।

पलत्वसामानाधिकरण्यमित्येवं रीत्या प्रत्ययार्थे (१) सामा-
मानाधिकरण्ये अवच्छेदकतासम्बन्धेन प्रकृत्यर्थनीलोत्पलस्यान्वयोप-
पादनेनैकदेशान्वयाभावेप्यनन्तशक्तिकल्पनापत्तेः। एवं घटत्व-
मित्यादौ प्रकृत्यर्थतावच्छेदकधर्मस्य प्रतिपादनं नीलोत्पलत्वमि-
त्यत्र (२) तादृशसामानाधिकरण्यस्येति व्युत्पत्तिभेदकल्पनमपीति।
अत्र वदन्ति घटत्वमित्यादौ लक्षणशक्तेरेवैतादृशसामानाधिकरण्य-
लाभः। तत्र हि घटेतरावृत्तित्वेसति सकलघटवृत्तित्वेन प्रका-
रेण घटत्वमुपस्थाप्यते, तत्र प्रकृतित एव घटस्य लाभः, इतरा-
वृत्तित्वादौ भाव-प्रत्ययस्य शक्तिः, तत्र इतरत् वृत्तित्वं अभावः
साकल्यं वृत्तिम- (३) श्चेति विशकलितमर्थः। इतरवृत्तित्व-
प्रतियोगिकाभावस्यातिप्रसक्तत्वादितरवृत्तित्वत्वावच्छिन्नाभावस्या-
प्रसिद्धत्वाद्घटत्वादौ त- (४) द्घाधाञ्च विशिष्टस्य शक्यत्वासम्भवाद्-
व्युत्पत्तिवैचित्र्यादेकपदोपात्तानामपि तावतां परस्परोपश्लेषेण
बोधः। तत्र प्रकृतिजन्यबोधे येन सम्बन्धेन यत् (५) प्रकृत्यर्थ-
तावच्छेदकधर्मस्य प्रकारता तेन सम्बन्धेन इतरावृत्तित्वं त-(६)

---

(१) तादृश इत्यधिकपाठः ग पुस्तके।

(२) मित्यादौ इति ख पुस्तके।

(३) वृत्तिमदिति ख पुस्तके नास्ति।

(४) तदिति ग पुस्तके नास्ति।

(५) यदिति ग पुस्तके नास्ति।

(६) तदिति ग पुस्तके नास्ति।

वृत्तित्वञ्चार्थः । तेन घटत्वमित्यादौ (१) घटेतरस्मिन् कालादौ कालिकसम्बन्धेन घटत्वस्य वृत्तित्वेऽपि न क्षतिर्न वा (२) कम्बु-ग्रीवादिमत्त्वादेर्भानम् । नीलोत्पलत्वमित्यादौ नीलाभिन्नमुत्पलं प्रकृत्यर्थः, तत्र प्रकृत्यर्थतावच्छेदकं नीलाभिन्नोत्पलत्वं, तच्च नीलत्व (३) समवाय्यभिन्नसमवेतोत्पलत्वं तस्य चोपाधि(४)तया स्वरूपसम्बन्धेनैव प्रकृतिजन्यबोधे प्रकारता, तेन सम्बन्धेन तद्वत्त्व-भिधाने च सामानाधिकरण्यस्यापि भानं अभेदस्याधिकस्य भानेपि नीलत्वसमवायिसमवायस्यापि भानादिति । प्रमेयत्वमित्यादौ-घेतरावृत्तित्वांशो न भासतेऽप्रसिद्धत्वात्, किन्तु सकलप्रमेयवृत्ति-त्वम् । न च गुणान्यत्वविशिष्टसत्त्वमित्यादौ विशिष्टस्यानति-रेकितया तदितरासमवेतत्वस्य, महत्त्वमित्यादौ सकलमहद्वृत्ति-त्वस्य महत्परिमाणे बाधादनन्वय प्रसङ्ग इति वाच्यं तदितरत्व-व्यापकात्यन्ताभाव (५) प्रतियोगितावच्छेदक तद्वृत्त्यत्यन्ताभाव–प्रतियोगितानवच्छेदकधर्म्मवत्त्वस्यैव तदुभयदलेन (६) विवक्षित-त्वात्, तदितरत्वव्यापकेतिकरणाच्च घटत्वमित्यादौ न द्रव्यत्वादे-

(१) घटत्वमित्यादौ इति क ख पुस्तकयोर्नास्ति ।

(२) घटत्वमित्यादौ इत्यधिक पाठः क ख पुस्तकयोर्वर्त्तते ।

(३) त्व इति नास्ति ख पुस्तके ।

(४) स्वरूप इत्यधिकपाठः ख पुस्तके ।

(५) व्यापकीभूतात्यन्ताभाव इति क पुस्तके ।

(६) तदुभयपदेन इति ख पुस्तके ।

भानमिति। अत्र नव्याः, एवं सत्येकत्वमित्यादौ परिमाणादेः कथं न लाभः, न च प्रकृत्यर्थतावच्छेदकनिरूपितत्वविशिष्टसम्बन्धेनैव तदितरावृत्तित्वं तद्वृत्तित्वञ्च प्रतीयते तत्रैकत्वनिरूपितसमवायेन (१) परिमाणादिकं अस्तीति न तत्र परिमाणादेर्भान(२)-मितिवाच्यं एवं सत्यनन्तशक्ति-कल्पनावश्यकत्वे घटत्वादिषु (३) प्रातिस्विकरूपेणैव शक्तिरस्तु किमितरावृत्तित्वादि (४) गौरव-सहिष्णुतया। यद्वा धर्म्मत्वेनैव शक्तिरस्तु, प्रकृत्यर्थतावच्छेदक-निरूपितसम्बन्धेन तत्र प्रकृत्यर्थस्यान्वयः तेन घटत्वमित्यादौ न द्रव्यत्वादेर्बोधः। अतएव गुणकिरणावल्यां पृथक्त्वमित्यादौ प्रकृत्यर्थतावच्छेदकानेवगुणान् भाव-प्रत्ययः प्रतिपादयति (५) प्रतीतिस्तु ताद्रूप्येण धर्म्मत्वेन वेत्यन्यदेतदिति दीधितिकृतः। विशिष्य शक्तौ च नीलत्वोत्पलत्व सामानाधिकरण्यं प्रकृते भाव प्रत्ययार्थः। नीलोत्पलस्य प्रकृत्यर्थस्य तादृशसामानाधिकरण्ये अवच्छेदकत्वे-नान्वयः। घटपटत्वमित्यत्र द्वन्द्वोत्तरस्येव नीलोत्पलत्वमित्यत्र कर्म्मधारयोत्तरस्यापि भाव-प्रत्ययस्य सामान्यशक्त्युपस्थितयोर्नील-त्वोत्पलत्वयोः कर्म्मधारयोत्तर-भाव-प्रत्ययत्वावच्छिन्नया विशेषशक्त्या

---

(१) निरूपितत्वविशिष्ट समवायेन इति क पुस्तके।

(२) न तत्र तद्भानं इति ख पुस्तके। न तत्रैकपदवाच्यतेति क पुस्तके।

(३) घटत्वादिषु इत्यत्र घटत्वमित्यादौ इति ख पुस्तके।

(४) इतरत्वादि इति क पुस्तके।

(५) भावप्रत्ययाः प्रतिपादयन्ति इति ग पुस्तके।

उपस्थितौ सामानाधिकरण्ये विशेषणत्वेनान्वयः। नीलाभिन्नोत्पलस्य प्रकृत्यर्थस्याधेयत्वसम्बन्धेन, नीलत्वोत्पलत्वयोरवच्छेदकतासम्बन्धेन तत्सामानाधिकरण्ये वान्वय इत्यपि कश्चित् (१)। "बाधिते"ति बाधिताबाधितताद्दृशसामानाधिकरण्यविषयकेत्यर्थः। "भ्रान्तानुमितौ"ति भ्रान्तं भ्रमः, न च ह्रदो वह्निमानित्यादौ व्याप्तिविशिष्टत्व-पक्ष (२) वृत्तित्वसामानाधिकरण्याप्रसिद्ध्या कथं तज्ज्ञानलाभ इति वाच्यं तत्र ह्रदवृत्तित्वे व्याप्तिविशिष्टत्वसामानाधिकरण्यावगाहिज्ञानमेव तदुभयसामानाधिकरण्यावगाहिज्ञानपदार्थ इत्याशयात्। अतएवानेनैव (३) दोषेणेदं निराकरिष्यति। केचित्तु पर्व्वतो वह्निमान् धूलीपटलादित्यादौ व्याप्तिविशिष्टत्व-पर्व्वतवृत्तित्वसामानाधिकरण्यं यदालोकादौ प्रसिद्धं तस्य धूलीपटले आरोपात् यथार्थानुमितिस्तत्र नाव्याप्तिरित्यर्थः। "भ्रान्तानुमितौ"ति भ्रान्तस्यानुमितिः भ्रमजन्यानुमितिरित्यर्थ इत्याहुस्तत्सन्दर्भविरोधादुपेक्षितम्। "नियमत" इति यत्र वह्निव्याप्यवान् वह्निव्याप्तिविशिष्टपर्व्वतवृत्तिधूमवान् पर्व्वत इत्याकारकः परामर्शस्तत्र तत्सत्त्वेऽपि यत्र वह्निव्याप्यवानित्येव परामर्शस्तत्र तदभावादित्यर्थः। ननु तेन रूपेण हेतुत्वपक्षाद् यत्र ताद्दृशबोधाभावस्तत्रानुमितिरपलप-

---

(१) केचित् इति ख पुस्तके।

(२) पक्ष इत्यत्र ह्रद इति पाठः क ख पुस्तकयोः।

(३) एव इति नास्ति ख पुस्तके।

नीयेत्यतो "गौरवेणे"ति । ननु सामानाधिकरण्यमेकाधिकरण-सम्बन्ध एवञ्च समूहालम्बनादिविशिष्टज्ञानस्य भेदान्यथानुपपत्त्या विशेषणप्रतियोगिकविशेष्यानुयोगिकसम्बन्धो विशिष्टधीविषय-त्वेनाभ्युपेयस्तथाच वह्निव्याप्यधूमवान् पर्व्वत इत्यत्र धूमे वह्निव्याप्तिवैशिष्ट्यानुयोगित्वपर्व्वतवृत्तित्वप्रतियोगित्वरूपतदुभय-सामानाधिकरण्यं भासत एवेत्यत आह "सम्बन्धसम्बन्धे"ति समूहालम्बनादिविशिष्टज्ञानस्य भेदान्यथानुपपत्त्या अनुयोगित्वप्रति-योगित्वादिरूपसम्बन्धभानवत्सामानाधिकरण्यभानमपि भविष्य-तीत्यत "सम्बन्ध(१)सम्बन्धे"ति कश्चित् । सम्बन्धसम्बन्धाविषयक-त्वेऽपि समूहालम्बनव्यावृत्तस्य विशिष्टज्ञानत्वस्योपपादितत्वादि-त्यर्थः । समूहालम्बने सर्व्वत्र विशेष्यता, विशिष्टज्ञाने च विशेषणे प्रकारता संसर्गे च सम्बन्धता विशेष्ये च विशेष्यताख्य-विषयतेति, विषयावैलक्षण्येऽपि विषयतावैलक्षण्यादेव वैलक्षण्यं विशिष्टज्ञानस्येति भावः । ननु विषयावैलक्षण्येऽपि विषयताविशे-षात् ज्ञानवैलक्षण्ये जितं साकारवादिना (२) तथाचार्थेनैव धियां

---

(१) सम्बन्ध इति नास्ति ग पुस्तके ।

(२) "साकारवादिना" विज्ञानवादिना योगाचारबौद्धेनेत्यर्थः एतन्मते क्षणिकविज्ञानमेव पदार्थस्तदतिरिक्तं किमपि न वस्तु सत् । विषयस्तु विज्ञानस्यैवाकारविशेषस्ततो न भिद्यते । तादृशाकारविशेषे चानाद्यविच्छिन्नप्रवाह-विज्ञानानतिरिक्तवासनैव नियामिका । तथाचोक्तं माधवाचार्य्यैः "बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासत" इति तादृशाकारविशेष एव विज्ञान-वैलक्षण्यप्रयोजको न तु विषयविशेषस्तन्मते तस्यानङ्गीकारादेवञ्च न्यायमतेऽपि

विशेष इत्यनुरोधात् समूहालम्बनाविषयोऽनुयोगित्वं प्रतियोगित्वञ्च विशिष्टधी-विषय इत्यभ्युपेयमत आह "भ्रमस्थले चे"ति ह्रदो वह्निमानिति भ्रमानुमिति-स्थले चेत्यर्थः। नन्वसदेव तत्र सामानाधिकरण्यं सिद्ध(१)मत आह "असदि"ति असतो वैशिष्ट्यस्य सदुपरागेणापि भानस्य निरासादित्यर्थः। न च प्रतियोग्यप्रसिद्धिः शुक्तिविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वस्य रजतत्वप्रकारतासामान्यस्य वा यत्किञ्चित्प्रमात्वघटकप्रकारतानियामकसम्बन्धनिरूपितत्वनियमबलेन अर्थतस्तन्निरासात्, असद्वैशिष्ट्यभाने तु रजतत्वप्रतियोगिकशुक्त्यनुयोगिकवैशिष्ट्यस्य यत्किञ्चित्प्रमात्वघटकप्रकारत्वानियामकतया शुक्तौ रजतत्वप्रकारतायास्तादृशसम्बन्धनिरूपितत्वाभावेन तादृशनियमभङ्गादिति।

ननु पक्षवृत्तित्वे व्याप्तिविशिष्टत्वसामानाधिकरण्यावगाहिज्ञानमेव व्याप्तिविशिष्टपक्षवृत्तित्वसामानाधिकरण्यज्ञानपदप्रतिपाद्यं तत्र सामानाधिकरण्ये व्याप्तिविशिष्टत्वपक्षधर्मत्वयोरन्वयबाधेऽपि

---

विषयभेदस्य विज्ञानभेदाप्रयोजकत्वे तद्विभेदेऽनुपपादत्वेन विज्ञानवादिनामेव जयो भवतीति। वस्तुतो न्यायमते विषयभेद एव विज्ञानवैलक्षण्ये प्रयोजकः, अतएवोक्तं उदयनाचार्यैः "अर्थेनैव विशेषो हि निराकारतया धिया"मिति। तथाच विज्ञानवैलक्षण्यानुरोधेन तदतिरिक्तविषयाङ्गीकारस्यावश्यकत्वे विज्ञानवादिनां पराजय इति भावः।

(१) प्रसिद्धमिति क ख पुस्तकयो पाठः।

तादृशज्ञानान्वयेऽबाधात् तथाच तादृशज्ञानजन्यत्वं लक्षणं नाव्याप्त-मत आह "अवान्तरे"ति ।

दीधितिः ।

अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् विषाणे शशसम्बन्धस्याभावनिश्चयदशायां शशविषाणजन्यमिदं कार्मुकमिति शाब्दबुद्धेर्ब्रह्मणापि दुरुपपादत्वात् । न चात्र प्रमाणप्रस्तावात् प्रमैव लक्ष्या, यदि च सल्लिङ्गपरामर्शादपि भ्रान्तानुमिति स्तदा चरमज्ञानपदं प्रमापरमिति वाच्यम् अव्याप्यापक्षधर्म्मयोस्तत्त्वावगाहिना परामर्शेण जनितायां वस्तुतः साध्यवत् पक्षावगाहितया प्रमायामव्याप्तेर्लिङ्गोपहित-लैङ्गिकभाननिरासेनांशिकभ्रमत्वास्याप्ययोगात् ईश्वर-तादृशज्ञानजन्यत्वस्य चातिप्रसञ्जकत्वात्, अतएव व्याप्ति विशिष्टे पक्षधर्म्मता तज्ज्ञानं वेत्यादिकमपास्तम् ।

दीधिति प्रकाशः ।

(१) तथाचैतादृशलक्षणं नैतादृशलक्षणवाक्यप्रतिपाद्यमित्यर्थः । लक्षणाव्याप्तिमुक्ता लक्षणवाक्यजन्यशाब्दबोधानुपपत्तिमाह "अवा-

(१) अयोग्यतानिर्णयेन प्रतिबन्धाल्लक्षणवाक्याद्बोधासम्भवेन तादृशार्थस्य वाक्यादलाभेन लक्षणत्वासम्भवाल्लक्षणस्याव्याप्तिर्दुर्वारेति भावः । इति न पुस्तके अधिकपाठः ।

स्तरे"ति कश्चित् । "विषाणी" विषाणत्वावच्छेदेन । "गोसम्बन्धे"ति गोविषाणीत्यत्र षष्ठ्यर्थलक्षणया गोसम्बन्धभिन्नं विषाणमिति शाब्दबोधे गोसम्बन्धिभेदस्येव गोसम्बन्धाभावस्यापि विषाणे निर्णयो विरोधीत्यर्थः । "प्रमाणप्रस्तावा"दिति—"प्रमाणतत्त्वमथ विविच्यते" इत्यतः प्रमाकरणलक्षणस्यैव प्रस्तुतत्वेन तदर्थं प्रमाणलक्षणस्यैवोचितत्वा(१)दित्यर्थः । "प्रमेवे"ति न तु प्रमाकरणलक्षणानुपयोगिनी भ्रान्तिरपीत्यर्थः । उपाध्यायमतं पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यं सर्व्वत्रानुमिति विषयः, न तु पक्षतावच्छेदकावच्छेदेनापि अवच्छेदकत्वस्य व्यापकत्वाघटकत्वेन साध्यसम्बन्धविधया भानासम्भवात् तथाच गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यनुमितिः प्रमेवेत्यत आह "यदि चे"ति पक्षतावच्छेदकावच्छेदेन साध्यभानस्यानुभविकत्वादसंसर्गाग्रहादिरूप(२)सामान्यसामग्रीसत्त्वा(३)दनुमितावप्यवच्छेदकत्वं भासत एवेति भावः(४) । "चरमे"ति प्रथमज्ञानपदस्य तत्परत्वे तत्रैवातिव्याप्तिरिति भावः । "प्रमापर"मिति यावत् भ्रमभिन्नत्वं प्रमात्वम् (५) । "अव्याप्ये"ति अव्याप्ये व्याप्यत्वावगाहिना अपक्ष-

(१) लक्षणस्यैवौचित्यादिति क पुस्तके ।

(२) रूप इति नास्ति ख, ग पुस्तकयोः ।

(३) सत्त्वादित्यत्र बलात् इति ख, ग पुस्तकयोः ।

(४) यदि चेत्यनेन सूचित इति शेषः ।

(५) यावद्भ्रमभिन्नत्वं निखिलज्ञानवृत्तिविषयितान्यूनत्वं प्रमाविषयितानां निखिलज्ञानविषयितातो भेदानङ्गीकारादिति भावः ।

धर्म्मे पक्षधर्म्मत्वावगाहिनीत्यर्थः। "वस्तुतः" वस्तुगत्या साध्यवान् यः पक्षस्तदवगाहितया। ननु तस्या अनुमितेर्लिङ्गोपधानांशे भ्रमत्वेनालक्ष्यत्वमत आह "लिङ्गोपहिते"ति प्रमाणाभावादिति शेषः। ननु साध्यवान् यः पक्षस्तन्नेश्वरस्यैव (१) तादृशज्ञानं प्रसिद्धमतस्तज्जन्यत्वस्य तदनुमितावपि सत्त्वान्नाव्याप्तिरत आह— "ईश्वरे"ति "अतिप्रसञ्जकत्वा"दिति तादृशपरामर्शत्वेन तस्य हेतुत्वाभावात् उपादानप्रत्यक्षत्वेन तज्जन्यत्वस्य प्रमामात्रेऽतिप्रसक्तत्वादिति भावः। "अतएव" तादृशप्रमाणुमितावव्याप्तेरेव, "तज्ज्ञानं वे"ति व्याप्तिविशिष्टे पक्षधर्म्मताज्ञानमित्येवं रूपः सप्तमी तत्पुरुषोऽपि नेत्यर्थः।

दीधितिः।

व्याप्तिविशिष्टस्य पक्षधर्म्मस्येति द्वन्द्वाश्रयणाद्व्याप्ति-विशिष्टत्वपक्षधर्म्मत्वावगाहिज्ञानजन्यत्वं लभ्यते, पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव "प्रमाणप्रमेये"-त्यादिसूत्रे (२) अन्यत्र च द्वन्द्वस्य दर्शनात्। पदार्थ-

---

(१) एव इति नास्ति ख पुस्तके।

(२) प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्तावयव तर्कनिर्णय वाद जल्प वितण्डा हेत्वाभास च्छल जाति निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। इति न्यायसूत्रं अ १ आ १ सू १। अत्र पदार्थतावच्छेदकप्रमाणत्वादीनां भेदाद् द्वन्द्वस्य साधुत्वमङ्गीकृतमिति।

द्वयाभेदबोधकाच्च कर्म्मधारयाद्भेदाभेदोदासीनपदार्थ-द्वयबोधजनकत्वेनैव द्वन्द्वस्य भेदात्, विशिष्टपदस्य धर्म्म-परतया वा व्याप्तिवैशिष्ट्यपक्षधर्म्मतयोर्लाभात्। न चैवमालोको वह्निव्याप्यो धूमवान् पर्व्वत इति ज्ञान-जन्येऽतिप्रसक्तिः, एकत्र तदुभयावगाहित्वस्योक्तत्वा-दिति केचित्। तदप्यसत् एवमपि धूमोवह्निव्याप्यो द्रव्यं पर्व्वतवृत्तिरिति ज्ञानजन्येऽतिप्रसङ्गात्। एक-रूपेण तदुभयावगाहित्वस्योक्तौ च मीमांसकमतानु-प्रवेशात्, मिथस्तदुभयोपश्लेषावगाहित्वस्य च परामर्शा-व्यापकत्वात्। न च तदुभयविषयत्वनियतधर्म्मावच्छिन्नकारणत्वप्रतियोगिककार्य्यताशालित्वमर्थः पक्ष-धर्म्मतापदोपादान-वैयर्थ्यात्।

---

दीधिति प्रकाशः।

"पदार्थतावच्छेदके"ति न चैवं सरूपैकशेषस्य द्वन्द्वापवाद-कत्वानुपपत्तिरेकविषयकत्वाभावादिति वाच्यं पदजन्यप्रतीति विशेष्य-रूपस्य पदार्थस्य भेदापेक्षया पदजन्यप्रतीतिविषयभेद एव द्वन्द्वस्य लाघवेन कल्पनात्। एवञ्च नीलघटयोरित्यत्र पदजन्य-प्रतीतिप्रकारभेदात्, घटा इत्यत्र विशेष्य भेदात् द्वन्द्वस्य प्रसक्तिः। अथवा इत्यादि नानार्थ एव वा सरूपैकशेषस्य सार्थकत्वाद यथा

श्रुतेऽपि नानुपपत्तिरिति केचित् (१)। ननु नीलघटयोरभेद इत्यत्र द्वित्वं कुत्रान्वेति? न तावद्विशेष्ये तस्यैकत्वात्, न विशेषणे तयोः पदार्थतावच्छेदकत्वेन निराकाङ्क्षत्वात्। न च प्रकृत्यर्थवृत्तिसंख्याबोधकत्वं सुपां न तु तन्मात्रवृत्तिसंख्याबोधकत्वं, अतएव "एकस्मिन् पाथः परमाणावापः" इत्यत्र तद्गुणानादाय बहुवचनं समर्थितं वर्द्धमानोपाध्यायैरिति वाच्यं एकस्मिन् घट एको घटा इत्यत्रासाधुत्वप्रज्ञाभावदशायां शाब्दबोध प्रसङ्गात्। तत्र द्विवचनं पदसाधुतायैवेतिचेत् तर्हि कर्मधारय एवास्तु किमर्थं पदार्थभेदमनादृत्य द्वन्द्वकल्पनमिति चेत् नीलघटयोरित्यत्र कर्मधारये नीलाभिन्नघटत्वेनोपस्थितौ अभेद इत्यस्य निराकाङ्क्षत्वादनन्वयप्रसङ्गात्। ननु पदार्थयोरभेदस्थलेपि द्वन्द्वस्य साधुत्वे कर्मधारयः किमर्थं पृथगङ्गीक्रियत इत्यत आह "पदार्थद्वये"ति तथाच यत्राभेदसंसर्गकबोधे तात्पर्य्यं तत्र द्वन्द्वस्यासाधुत्वात् कर्मधारयादेव तादृशबोध इति भावः। "भेदाभेदौदासीने"ति भेदाभेदाविषयकेत्यर्थः। इदञ्च (२) तादृश (३) पदार्थद्वयबोधे विशेषणम्। पदार्थयोरभेदे कर्मधारयवत् पदार्थयोर्भेद एव द्वन्द्व इत्यनुशासनस्वरससिद्धं मतमनुसृत्याह "विशिष्टपदस्ये"ति। यत्तु एकस्मिन्नेव

---

(१) केचित् इति नास्ति क, ख पुस्तकयोः।

(२) च नास्ति ग पुस्तके।

(३) तादृश इति नास्ति ख पुस्तके।

चैत्रे (१) चैत्र-चैत्रत्वसम्बन्धानां पदजन्यप्रतीतिविषयाणां भेदेन (२) द्वन्द्वापत्तिरतो "विशिष्टे"ति तदसत् एकपदे द्वन्द्वस्य तदपवादकैक-शेषस्य चापादयितुमशक्यत्वात् । किञ्च समस्यमानयोः प्रत्येकपदा-र्थयोर्विशेष्ययोर्विशेषणयोर्वा भेदस्तयोर्द्वन्द्वापादको नत्वेकपदार्थ-योरेव विशेषणविशेष्ययोर्भेद इति नायं पन्थाः । "धर्म्मपरतये"ति, नपुंसके भावे क्त इत्यनुशासनात् व्याप्तिवैशिष्ट्यमेव व्याप्तिविशिष्ट पदार्थः । तथाच व्याप्तिविशिष्ट पक्षधर्म्मतापदयोर्द्वन्द्व इति भावः । एतेन वैशिष्ट्यशक्तधातूत्तर-क्त-प्रत्ययस्याश्रयोपस्थापकस्याश्रयत्वे लक्ष-णायां व्याप्तिवैशिष्ट्याश्रयत्वोपस्थितौ व्याप्तिवैशिष्ट्याश्रयत्व-पक्ष-धर्म्मत्व-ज्ञानजन्यत्वमर्थः स्यात्तथाच व्याप्यवानिति परामर्शस्य सम्बन्धसम्बन्धाविषयकत्वात् सैवाव्याप्तिरिति परास्तम् । "एव-मपि" एकत्र धर्म्मिणीति विशेषणेऽपि (३) "मीमांसके"ति तथाच व्याप्यवानिति शाब्दपरामर्शस्थलीयानुमित्यव्याप्तिः, धूमत्वावच्छिन्न-व्याप्तिवैशिष्ट्यज्ञानं धूमत्वावच्छिन्नपक्षधर्म्मताज्ञानञ्च कारणमिति कारणताद्वयकल्पने गौरवम् । स्वप्रमाणव्याप्यवच्छेदकधर्म्मप्रका-रकपक्षधर्म्मताज्ञानत्वेन हेतुत्वोक्तौ च तत्कालीनत्व-तत्पुरुषीयत्व-प्रवेशादनन्तकार्य्यकारणभावापत्तिरिति । "मिथ" इति "तदु-भयं" व्याप्तिविशिष्टत्व पक्षधर्म्मत्वोभयं "उपश्लेषः" परस्परसामाना-धिकरण्यम् । "अव्यापकत्वात्" व्याप्यवानिति परामर्शे तद-

---

(१) एतस्मिन् चैत्रपदे इति न पुस्तके ।

(२) भेदादिति न पुस्तके ।

(३) विशेषणेऽपि इति न पुस्तके ।

भावादि (१)त्यर्थः। "न च तदुभये"ति तदुभयविषयकत्व नियत-धर्म्मः परामर्शत्वं (२) परामर्शप्रत्यक्षे परामर्शत्वेन हेतुतायां माना-भावादित्याशयः। न च तत्प्रत्यक्षे तत्त्वेन हेतुत्वात् वह्निव्याप्यो-धूमो द्रव्यं पर्व्वतवृत्तीति (३) ज्ञानप्रत्यक्षेऽतिव्याप्तिरिति (४) वाच्यं अनेकवृत्तित्वेन धर्म्मस्य विशेषणीयत्वात् (५) तत्तद्व्यक्तित्वस्य चैक-मात्रवृत्तित्वात्। विषयस्य तत्त्वेन कारणत्वं नास्तीत्याशयेनेद-मिति (६) कश्चित्। "पक्षधर्म्मते"ति पक्षधर्म्मताविषयकत्व-नियतधर्म्मावच्छिन्नेत्यर्थो च पक्षधर्म्मतायाः पर्व्वतसंयोगादिरूपतया धूम-धूमाभावसहचरितवह्निमान् पर्व्वत इत्येवमाकारकज्ञानत्वा-वच्छिन्नजनकतानिरूपितजन्यताश्रये पर्व्वतोधूमवान्नवेति संशयेऽति व्याप्तिः स्यादतस्तद्वारणाय व्याप्तिविषयकत्वमावश्यकम्। न चैव-मपि धूमव्याप्य-धूमव्याप्याभाव-सहचरितवह्निमानित्येवं रूप-साधा-रणधर्म्मवद्धर्म्मिज्ञानजन्ये पर्व्वतो धूमव्याप्यवान्न वेति संशयेऽति-व्याप्तिरिति वाच्यं पक्षधर्म्मताविषयकत्वदलेनापि तद्वारणात्, तथाच व्याप्तिविषयकत्वदलस्यैव संशयविशेषातिव्याप्तिवारकतया व्यावर्त्तकत्वमस्ति न तु पक्षधर्म्मतापदस्येत्याशयात्। धूमवत्पर्व्वत-संयोगप्रत्यक्षे सम्बन्धितावच्छेदकधूमप्रकारकपर्व्वतज्ञानत्वेन हेतु-

---

(१) तदसम्भवादिति क, ख पुस्तकयोः।

(२) परामर्शप्रत्यक्षेऽतिव्याप्तिनिरासार्थमाह परामर्शप्रत्यक्ष इति।

(३) वृत्तीत्यादि इति ख पुस्तके।

(४) अतिव्याप्तिरेवेति ख पुस्तके।

(५) धर्म्मस्य विशेषणात् इति ख, ग पुस्तकयोः।

(६) मित्यपि इति क पुस्तके।

त्वादतिव्याप्तिरतः पक्षधर्म्मतापदोपादानवैयर्थ्यमुक्तमित्यपि (१) कश्चित् । व्याप्तिज्ञानत्वपरामर्शत्वावच्छिन्न(२)कारणताद्वयलाभाय व्याप्तिविषयकत्वनियतत्वं विकाशकतयोक्तमित्यन्ये । वस्तुतस्तु पक्षधर्म्मताविषयकत्वनियतेत्युपादाने धूमवान् पर्व्वतो नास्तीत्यभावलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकधूमप्रकारकपर्व्वतज्ञानजन्येऽतिव्याप्तिरतो व्याप्तिवैशिष्ट्यविषयकेत्यावश्यकम् । न च तथापि वह्निव्याप्यवान् पर्व्वतो नास्तीत्यभावप्रत्यक्षे(३)ऽतिव्याप्तिरिति वाच्यं निष्कृष्टमते व्याप्तेरतीन्द्रियतया तदवच्छिन्नप्रतियोगिताकाभावस्याप्यतीन्द्रियत्वात् तत्र न तेन रूपेण हेतुता, (४) अभावलौकिकप्रत्यक्षं प्रत्येव तथा हेतुत्वात् । एवं व्याप्तिपदस्याभाव(५)मात्रपरत्वे अभावप्रकारकत्वनियतधर्म्मावच्छिन्नकारणताप्रतियोगिककार्य्यताशालित्वविवक्षणेऽनुमितिमात्रे (६) लक्षणमायाति, परन्तु स्थलविशेषेऽतिव्याप्तिर्भवति, पक्षधर्म्मतापदोपादाने त्वव्याप्तिरतिव्याप्तिश्चेत्यतोऽपि पक्षधर्म्मतापदोपादानवैयर्थ्यमुक्तमिति ध्येयं(७) । वस्तुतस्तु विशिष्टवैशिष्ट्यबोधादावतिव्याप्तेर्वारणाय (८) व्याप्य-

---

(१) अपि इति नास्ति ख पुस्तके ।

(२) अवच्छिन्नत्वेन अवच्छेदेन इति पाठः ग पुस्तके ।

(३) वह्निव्याप्यो धूमो नास्तीत्यभावप्रत्यक्षे इति क, ख पुस्तकयोः ।

(४) तत्र तेन रूपेणाहेतुत्वात् इति ख पुस्तके ।

(५) व्याप्तिपदस्याप्यभाव इति ख पुस्तके ।

(६) एव इत्यधिक पाठः ख पुस्तके ।

(७) वैयर्थ्यमितिध्येयं इति ग पुस्तके ।

(८) अतिव्याप्तिवारणाय इति क ख पुस्तकयो.

विषयकत्वेन अन्यं ज्ञानं विशेषणीयमिति वक्ष्यति, तथाच पक्ष-धर्म्मताविषयकत्वनियतेत्यादिविवक्षणे धूमवत्पर्व्वतवानिति विशिष्ट-वैशिष्ट्यविषयकबोधे व्याप्यविषयकेऽतिव्याप्तिरतो व्याप्तिविषयक-त्वनियतेत्यादि-विवक्षणमावश्यकम् (१)। न च पक्षधर्म्मतापद-मुपादाय तत्र पक्षधर्म्मत्वाविषयकत्वेनैव अन्यं ज्ञानं विशेष्यतां तावतापि विशिष्टवैशिष्ट्यबोधादावतिव्याप्तिवारणसम्भवादिति वाच्यं तथासत्यसम्भवापत्तेः पर्व्वतो वह्निमानित्यनुमितेरपि वह्निनिष्ठ-पक्षधर्म्मताविषयकत्वात्, हेतुतावच्छेदकरूपेण हेतुनिष्ठपक्षधर्म्मत्वा-विषयकत्वोक्तौ च वह्निव्याप्यवत्पर्व्वतवानिति विशिष्टवैशिष्ट्यबोधे-ऽतिव्याप्तिः, व्याप्तिप्रकारकपक्षधर्म्मत्वाविषयकत्वोक्तौ च व्याप्य-विषयकस्यैव लघुत्वेन विवक्षणौचित्यादिति तु (२) सारम्।

दीधितिः।

व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्म्मताज्ञानं तज्जन्यमिति तु स्यात्। यद्यप्यत्रापीन्धनसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-समानाधिकरणेन्धनवानित्यादिपरामर्शजन्येऽव्याप्तिरख-ण्डव्याप्तेरप्रसिद्धेः। भ्रमानुमितेर्लक्ष्यत्वे चावाकाशमा-त्मन इत्यादौ सुतरां तथा, तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वमात्रं विवक्षितम्।

(१) नियतेत्याद्यावश्यकत्वे पक्षधर्म्मतोपादान वैयर्थ्यमेव इति क पुस्तके।

(२) तु नास्ति ग पुस्तके।

दीधिति प्रकाशः ।

व्याप्तिविशिष्टपद-पक्षधर्मताज्ञानपदयोः कर्मधारयः, विशिष्ट-पदञ्च प्रकारक पर (१) मित्याशयेनाह "व्याप्ती"ति । यद्यपि वह्निव्याप्योधूमो द्रव्यवान् पर्व्वत इति ज्ञानस्यापि व्याप्तिप्रकारकत्वात् पक्षधर्मताज्ञानत्वाच्च तज्जन्यानुव्यवसायेऽतिव्याप्तिः, उक्त-रूपेण(२) जनकत्वोक्तौ चासम्भव एव धूमोवह्निव्याप्योधूमवान् पर्व्वत इति ज्ञानसाधारणत्वात् तथापि पक्षधर्म्मत्वांशे व्याप्तिप्रकारकत्वं विवक्षितं, तच्च पक्षनिष्ठ (३) विशेष्यतानिरूपितप्रकारतावच्छिन्न विशेष्यतानिरूपित व्याप्तिप्रकारताकत्वं, धूमोवह्निव्याप्यो धूमवान् पर्व्वत इत्यत्र पर्व्वतविशेष्यतानिरूपितधूमनिष्ठप्रकारता न व्याप्ति-प्रकारतानिरूपितविशेष्यतावच्छेदिका, किन्तु धूमस्य मुख्यविशे-ष्यतैवेति न तत्साधारण्यमिति ध्येयम् । "अत्रापि" तादृशविव-क्षणेपि, वह्निव्याप्येन्धनवानित्युक्तौ च वह्निमदन्यावृत्तित्वरूपव्याप्ति-प्रकारकत्वसम्भवना स्यादतो विशिनष्टि "इन्धनसमानाधिकरणे"ति । "भ्रमानुमिते"रिति पूर्व्वं भ्रमात्मकपरामर्शजन्यायां विषयाबाधेन प्रमानुमितात्वव्याप्तिर्दर्शितेति भावः । वृत्त्यनियामकसंयोगेन-साध्यतायां हेतुतायाञ्चाकाशानुमितिः परामर्शश्च प्रमैव स्यादतो वृत्तिनियामकसम्बन्धेन हेतुतासाध्यता-प्रतिपत्त्यर्थमाह "यत्रे"ति सप्तम्या आधेयत्व प्रतिपादनात्। "सुतरा"मिति साध्ये व्यापकत्व-

---

(१) प्रकार परमिति न पुस्तके ।

(२) एतद्रूपेणेति न पुस्तके ।

(३) निष्ठ इति नास्ति क, ख पुस्तकयोः ।

प्रकारकं साधने च साध्यसामानाधिकरण्यप्रकारकमित्येवं व्याप्ति-प्रकारकत्वोक्तौ पूर्व्वोक्ताव्याप्तिनिरासःस्यादत्र तु व्यापकत्व-सामानाधिकरण्ययोरुभयोरप्रसिद्ध्याऽव्याप्तिवारणं न सम्भवतीति भावः । "तथा" अव्याप्तिः । "तावत्पदार्थानां" व्याप्तिशरीरनिविष्टानां (१) पदार्थानां, "तथाविधे"ति व्याप्तिभाने (२) यस्य यत्र येन सम्बन्धेन प्रकारता तत्र तेन सम्बन्धेन तत्प्रकारकत्वमित्यर्थः तथा-धिकरणे हेतुप्रकारकं अभावे तादृशाधिकरणावृत्तित्व-प्रकारकं प्रतियोगितायां तादृशाभावप्रकारकमित्यादिक्रमेण बोध्यम् ॥

दीधितिः ।

न च व्यतिरेकिण्यव्याप्तिः, व्यभिचारधीविरोधिधी-विषयत्वेनान्वयव्यतिरेकव्याप्तेरनुगमात् । भवति हि धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमाना-धिकरणधूमत्वे, वह्न्यभावव्यापकीभूताभावप्रतियोगित्वे वा गृहीते नियमतो वह्निव्यभिचारधीप्रतिरोधः । तथा-विधधूमसमानाधिकरणत्वादिकन्तु न तथा रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहात् व्यतिरेकसहचारेणान्वय-व्याप्तिग्रहणाश्रयणाद्वा ।

---

(१) तावत् इति अधिकपाठः ख पुस्तके ।

(२) भाने इत्यत्र भामे इति पाठः ग पुस्तके ।

दीधिति प्रकाशः ।

"व्यतिरेकिणी"ति तत्र पक्षधर्म्मतांशे वह्न्यभावव्यापकाभाव प्रतियोगिधूमत्वस्यैव प्रकारत्वादिति भावः। ननु धूमव्यापक-वह्निसमानाधिकरणधूमत्वस्य वह्न्यभावव्यापकाभावप्रतियोगिधूम-त्वस्य ज्ञानं वह्न्यभाववद्वृत्तित्वरूपव्यभिचारधियं प्रति ग्राह्याभावा-नवगाहितया तदभावव्याप्यवत्त्वानवगाहितया वा न विरोधीत्यत आह "भवति ह्री"ति तथाचातथाभूतस्याप्यगत्यैव मणिमन्त्रादि-न्यायेन प्रतिबन्धकत्वं कल्पत इति भावः। ननु धूमव्यापकवह्नि-समानाधिकरणधूमसमानाधिकरणरासभवानिति ज्ञाने धूमसमा-नाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक वह्नित्ववानिति ज्ञाने च वह्न्यभाववद्वृत्तिर्धूम इति व्यभिचारधीविरोधित्व-सत्त्वात् तज्जन्यप्रत्यक्षेऽतिव्याप्तिः, उक्तरूपेण जनकत्व विवक्षणेत्वसम्भव एव, उक्तरूपस्य तादृशधूमसमानाधिकरणरासभवानिति ज्ञानसाधा-रणतया जनकतायामनवच्छेदकत्वादत आह "तथाविधे"ति "न तथा" न पक्षधर्म्मतांशे व्यभिचारधीविरोधिधीविषयः। "रासभादा"विति तथाच पक्षधर्म्मतया ज्ञाते तद्विशिष्टे व्यभिचा-रधीविरोधिधीविषयधर्म्मप्रकारक-तद्विशिष्टपक्षधर्म्मताज्ञानजन्यत्व-मर्थः। उक्तज्ञानन्तु पक्षधर्म्मतया ज्ञाते रासभत्वविशिष्टे न व्यभिचारधी-विरोधि, धूमत्वविशिष्टे तथात्वेऽपि न तस्य पक्षधर्म्मतया भानमिति भावः। ननु धूमसमानाधिकरणेत्यादि ज्ञानेरेवोक्त-रूप-व्यभिचारधी-विरोधिधीविषयत्वे मानाभावः कैव कथा व्यति-रेकव्याप्तौ। न च वह्नित्वं धूमसमानाधिकरणाभाव-प्रतियोगिता-

वच्छेदकं, धूमाभावत्वं वह्न्यभावसमानाधिकरणाभाव प्रतियोगितावच्छेदकमित्येवं समूहालम्बनात्मक व्यभिचारधीविरोधिधीत्वं वाच्यं (१) तथापि धूमव्यापकवह्निकालीनधूमवान् पर्व्वत इति ज्ञानस्य सामानाधिकरण्याविषयकतयाऽनुमित्यजनकस्य संग्राहकतया उक्तरूपस्यानुमितिजनकतानवच्छेदकत्वात्। न च धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्व्वतः, वह्न्यभावव्यापकीभूताभाव (२) प्रतियोगिधूमवान् पर्व्वत इति ज्ञानयोरन्यतरत्वमेव हेतुतावच्छेदक-मतस्तथैव लक्षणे निवेश्यतामिति वाच्यं अन्यतरत्व घटकभेदानां विशेषणविशेष्यभावे विनिगमना-विरहेण नानाकार्य्यकारणभावावश्यकत्वेन तदपेक्षया लाघवात् प्रत्येकरूपेणैव हेतुत्वकल्पनाया न्याय्यत्वादत आह "व्यतिरेकसहचारेणे"ति। ननु मणिमन्त्रादि न्यायेन विरोधित्वेमानाभावः, ज्ञापकत्वान्वयव्यतिरेकानुविधानस्य तादृशव्यभिचाराद्युन्नायकत्वेनाप्युपयोगा(३)दित्यस्वरसादाह "व्यतिरेकसहचारेणे"ति कश्चित्।

दीधितिः।

न च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुतामते, तत्रातिव्याप्तिः, तथाविधनिश्चयत्वेन हेतुताया विवक्षितत्वात्। विशेषदर्शनस्य भ्रमादिविरोधित्वेन तत्त्वमित्युक्तत्वात्।

---

(१) विरोधित्वं वाच्यं इति पाठः न पुस्तके।

(२) व्यापकाभाव इति पाठः न पुस्तके।

(३) उन्नायकत्वेनोपयोगात् इति न पुस्तके।

दीधिति प्रकाशः ।

“भ्रमसंशयोत्तरे”ति भ्रमसंशययोर्विपरीतज्ञानत्वेनानुगमः । विपरीतत्वञ्च व्यावर्त्तकमात्रं, तेन स्थाणुत्वभ्रमोत्तरस्य पुरुषत्वाभाव-भ्रमोत्तरस्य च पुरुषत्वप्रत्यक्षस्य नासंग्रहः । तदुत्तरप्रत्यक्षत्वञ्च अव्यवहितोत्तरत्वसम्बन्धेन तादृशविरोधिज्ञानवत्प्रत्यक्षनिर्णयत्वं, तेनाव्यवहितोत्तरत्वस्य तत्तद्व्यक्तिविश्रान्तत्वेऽपि न क्षतिर्न वा तत्संशयोत्तरसंशये व्यभिचार इति । उपाध्यायमते तन्निर्णयं प्रति तदभावज्ञानत्वेनैव विरोधिता, तत्र चाप्रामाण्यनिर्णयस्येव विशेष-दर्शनादेरप्युत्तेजकत्वम्, एवं व्यञ्जकासमवधानकालीनान्धकार-कालीनतत्संशयोत्तरं तन्निर्णये व्यञ्जकसमवधानालोकसमवधान-मप्युत्तेजकं वाच्यम् । न चैवं यत्र पर्व्वतो वह्निमान् नवेति संशया-नन्तरं वह्निव्याप्यधूमवान् पर्व्वतो भावि वह्न्यनुमितिरप्रमा चेति समूहालम्बनात्मकापेक्षाबुद्ध्यात्मको मानसपरामर्शः, ततः पर्व्वतो वह्निमानित्यनुमिति, ततः पर्व्वतो वह्न्यभाववानित्यभावलौकिक-प्रत्यक्षं, ततः(१) परामर्शेन पुनरनुमित्यापत्तिः, एवम् अन्धकारस्थ-घटसंशयानन्तरम् (२) आलोकसमवधाने घटनिश्चयानन्तरं पुन-र्विशेषादर्शनप्रयुक्तघटसंशयानन्तरं विनैव विशेषदर्शनं घटनिश्चया-पत्तिः, पूर्व्वोत्तेजकस्यालोकसमवधानस्य सत्त्वादिति वाच्यं तत्तत्-कालावच्छिन्नविशेषदर्शनाद्यभाव(३) विशिष्ट-तद्विपरीतज्ञानाभाव-

---

(१) अपेक्षाबुद्ध्यात्मक इत्यधिक पाठः क पुस्तके ।

(२) एव इत्यधिकपाठः क पुस्तके ।

(३) विशेषदर्शनज्ञानाभाव इति क पुस्तके ।

त्वेन तन्निर्णयत्वावच्छिन्नं प्रति हेतुत्वादिति। बाधनिश्चयस्य स्वातन्त्र्येण विरोधितायान्तु विशेषदर्शने तत्कालावच्छिन्नत्वं न देयम्। स्वमते तु संशयोत्तरप्रत्यक्षत्वावच्छिन्नं प्रति विशेषदर्शनस्य न हेतुता अन्धकारस्थघटसंशयोत्तरप्रत्यक्षे व्यभिचारात्। न च तादृशविपरीतज्ञानविरोधित्वेन हेतुता, विशेषदर्शनालोकादि-साधारणविरोधित्वस्यैकस्याभावात्। किञ्च विशेषादर्शनप्रयुक्त-संशयानन्तरम् आलोकसमवधानस्य पुरुषान्तरीयान्धकारस्थघट-संशयविरोधिनः सत्त्वात् तत्प्रत्यक्षापत्तिः, तत्पुरुषीयतादृशविपरीत-ज्ञानोत्तरप्रत्यक्षत्वावच्छिन्नं प्रति तत्पुरुषीयतादृशविपरीतज्ञान-विरोधित्वेन हेतुत्वोक्तौ चातिगौरवं,पुरुषान्तरीयविशेषदर्शनस्यापि तादृशविरोधित्वस्वरूपयोग्यत्वादतिप्रसङ्गः; एवं तादृशविपरीत-ज्ञानवत्प्रत्यक्षनिर्णयत्वं न कार्य्यतावच्छेदकम् आर्थसमाजग्रस्त-त्वात्। किञ्च भ्रमसंशयानुत्तरनिर्णयसामान्यसामग्रीसत्त्वे भ्रम-संशयोत्तरमपि सामान्यनिर्णयापत्तिर्दुर्व्वारैव, तदनुत्तरप्रत्यक्षेऽपि सामग्र्यन्तरकल्पनेऽतिगौरवं मानाभावश्च। एवञ्च विशेषदर्शनम् इतरकोटिज्ञानविरोधितया संशयोत्तरतादृशप्रत्यक्षे उपयुज्यत इत्य-भिसन्धायाह "हेतुतामत" इति न च सर्वमत एव विशेषदर्शनस्य विशेषणधीत्वेन हेतुत्वात् हेतुतामत इति न युक्तं, विशेषदर्शन-त्वेनैव तस्य हेतुतया परामर्शत्वेन हेतुत्वविवक्षणेऽपि तन्नातिव्याप्ति-रिति पूर्व्वपक्षिण (१) आशयात्। विशेषणधियोऽहेतुत्वाभिप्राये-

---

(१) एव इत्यधिकं क पुस्तके।

नैवेदमित्यपि (१) कश्चित् । "तथाविधे"ति व्याप्तिप्रकारकपक्ष-धर्म्मतानिश्चयत्वेनेत्यर्थः । "भ्रमादौ"ति अन्यथा व्यावर्त्तकधर्म्म-दर्शनव्यञ्जकदर्शनालोकादिसाधारण्याभावेन व्यभिचारप्रसङ्गा-दिति । श्वैत्यव्याप्यशंखत्ववानयमिति विशेषदर्शनस्य न पीतत्व-भ्रमविरोधीति न ततः श्वैत्यप्रत्यक्षम् । केचित्तु विशेषदर्शनाद्य-तिरिक्तयावत्कारणकालीनतादृशसंशयोत्तरप्रत्यक्षं प्रति तादृशसंशय-विरोधिदर्शनत्वेन व्यावर्त्तकधर्म्मदर्शनादिसाधारणरूपेण हेतुना, आलोकाद्यभावप्रयुक्तसंशयोत्तरप्रत्यक्षे आलोकादिसमवधानं हेतु-रित्याहुः ।

दीधितिः ।

अतएव लिङ्गवत्त्वादिलक्षणातिदेशवाक्यार्थज्ञान-जन्योपमितौ नातिव्याप्तिस्तथाविधवाक्यार्थप्रतिसन्धान-त्वेन तस्य हेतुत्वात् । न चोपनयार्थज्ञानजन्य-न्यायार्थ-ज्ञाने ; तच्छब्देन सङ्केतितशब्दान्तरेण वा व्याप्त्यादि-विशिष्टोपस्थितिद्वारा जनिते शाब्दबोधेऽतिव्याप्तिः, व्यु-त्पादयिष्यते च महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थधी-जन्यत्वं, तदादेश्च विशेषरूपेणोपस्थापकत्वमिति वाच्यं तथातिरिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनु-प्रवेशान्निश्चयत्वस्याप्रवेशाच्च ।

(१) अपि इति नास्ति क पुस्तके ।

दीधिति प्रकाशः ।

"अतएव" तथाविधनिश्चयत्वेन हेतुत्वविवक्षणादेव, लिङ्गवत्त्वादिकं "लक्षणं" स्वरूपं यस्य एवम्भूतो योऽतिदेशवाक्यार्थस्तस्य यज्ज्ञानं (१) वह्निव्याप्यधूमवत्पर्व्वतसदृशं महानसपदवाच्यमित्याकारकं तज्जन्यायामित्यर्थः । "तथाविधे"ति वह्निव्याप्यधूमवत्पर्व्वतसादृश्यविशिष्टमहानसपदवाच्यत्वज्ञानत्वेनेत्यर्थः । "न्यायार्थे"ति पञ्चवाक्यैरेकवाक्यतया बोधो जन्यत इति चिन्तामणिकारमत(२)रीत्या इदमुक्तं, स्वमते तु (३) उपनयार्थविशेष्यकनिगमनार्थविशेषणकशाब्दबोधेऽतिव्याप्तिर्बोध्या । ननूपनये न वह्निव्याप्यधूमस्य पर्व्वते साक्षात् प्रकारतया भानं, किन्तु मत्वर्थसम्बन्धिनोऽभेदसम्बन्धेन प्रकारतया भानमिति, तादृशनिश्चयत्वेन हेतुत्वविवक्षयैव तत्र नातिव्याप्तिः, तथाचायमित्युपनयोऽसिद्ध एवेत्यत आह "तच्छब्देने"ति यत्र वह्निव्याप्यधूमवत्पर्व्वतमेव बुद्धिस्थीकृत्य सोऽस्तीति शब्दोऽभिहितस्तत्र वह्निव्याप्यधूमवत्पर्व्वतोपस्थित्यादिजन्ये वह्निव्याप्यधूमवत्पर्व्वतोऽस्तीति शाब्दबोधेऽतिव्याप्तिः । ननु तच्छब्दाद्बुद्धिस्थत्वेनैवोपस्थितिः शाब्दबोधश्च, विशेषधर्म्मप्रकारकधीर्नास्तीति न तत्रातिप्रसङ्ग इत्यत आह "सङ्केतिते"ति यत्र वह्निव्याप्यधूमवत्पर्व्वते एव घटपदस्य सङ्केतग्रहे, घटोऽस्तीति वाक्येन वह्निव्याप्यधूमवान् पर्व्वतोऽस्तीति शाब्दबोधो जनित-

(१) यदिति नास्ति ग पुस्तके ।

(२) मत इति नास्ति ख पुस्तके ।

(३) तु नास्ति ग पुस्तके ।

स्तत्रातिव्याप्तिरित्यर्थः । ननु महावाक्यार्थज्ञानं नावान्तरवाक्यार्थ-ज्ञानजन्यम् अतः कथं न्यायार्थज्ञानेऽतिव्याप्तिरत आह "व्युत्पाद-यिष्यत" इति । "पदजन्यत्वस्ये"ति घटादिपदादाश्रयत्वादिसम्ब-न्धेनाकाशोपस्थितावपि शाब्दबोधानुदयात् पदजन्यपदार्थोप-स्थितित्वेनैव हेतुत्वमित्यर्थः । ननु घटशाब्दबोधं प्रति द्वारा घटोप-स्थापकपदज्ञानत्वेन कारणता, द्वारा स्वजन्यघटोपस्थितिर्व्यापारः, व्यापारस्य हेतुता च घटत्वप्रकारकज्ञानत्वेनैवावच्छिद्यते । न चैवं प्रत्यक्षोपस्थिते घटे पटोपस्थितिव्यापारके घटपदज्ञाने सति घट-शाब्दबोधापत्तिर्घटशाब्दबोधे पटोपस्थितेरजनकत्वेनाव्यापारत्वात् । न चैवमपि घटपदजन्यघटोपस्थितौ सत्यां प्रकारान्तरेण घटोपस्थिते-रपि शाब्दबोधजनकतापत्तिरिष्टत्वात् । पदजन्यपदार्थोपस्थित्य-भावकाले शाब्दबोधानुत्पादस्य तावता (१) व्युपपन्नत्वात्, तथाच पदार्थोपस्थितेर्हेतुतायां पदजन्यत्वाप्रवेशात्तथैवातिव्याप्तिरतत्याह "निश्चयत्वस्ये"ति (उद्बोधकविधया पदज्ञानस्य द्वारा पदजन्य-पदार्थो-पस्थितेर्हेतुत्वेन ) (२) तस्य कारणरूपतया शाब्दबोधरूपतया वा निश्चयभिन्नत्वासम्भवेन तद्वारणाय संशयान्यज्ञानत्वस्य प्रवेशा-नर्थक्यादिति भावः । केचित्तु पदार्थोपस्थितिकारणतायां पद-जन्यत्वमधिकं निविष्टं निश्चयत्वञ्चानिविष्टमित्यतिव्याप्तेरत्यन्ता-सत्त्वात् प्रदर्शनार्थमिदमित्याहुः ।

---

(१) तावता इत्यस्य तथा इति क पुस्तके ।

(२) ( ) एतन्मध्यस्य पाठः क पुस्तके नास्ति । तत्र च "उद्बोधकविधया द्वारापदजन्य पदार्थोपस्थितेर्व्यापारत्वेन" इति पाठो वर्त्तते ।

दीधितिः।

न च तथापि तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्तद्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात् तादृश प्रत्यक्षे शाब्दबोधे (१) चातिव्याप्तिः, दण्डो रक्तो नवेति संशये रक्तदण्डवानिति ज्ञानानुदयादितिवाच्यं ज्ञानोपरमेपि विशिष्ट-विषयोपधानेनेच्छाद्वेषयोः कृतेश्च साक्षात्काराद्विशेषणविषयकाद्विशिष्टसंस्कारादेव विशिष्ट स्मरणाच्च, तद्विषयकगुणानां तत्र हेतुत्वे न्यूनवृत्तेर्ज्ञानत्वस्य तत्राप्रवेशादिच्छादितः संस्काराच्चानुमितेरनुदयात्, संस्काराद्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात्।

दीधिति प्रकाशः।

"तथापि" पदार्थोपस्थितिकारणतामादायातिव्याप्तिवारणेऽपि, "तादृशप्रत्यक्षे" वह्निव्याप्यधूमवत्पर्व्वतवानिति प्रत्यक्षे इत्यर्थः। "शाब्दबोधे" इति वह्निव्याप्यधूमवत् पर्व्वतं बुद्धिस्थीकृत्यतद्वानिति शब्दप्रयोगे वह्निव्याप्यधूमविशिष्टस्य (२) पर्व्वतस्य तच्छब्दार्थतया तादृशविशिष्टवैशिष्ट्यधीसम्भवादित्यर्थः। तादृशविशिष्टवै–

(१) तादृशशाब्दबोधे प्रत्यक्षे इति सोसाइटिमुद्रित पुस्तके पाठः। तादृश पाठो न प्रकाशकृत् सम्मतः।

(२) स्य इति नास्ति क पुस्तके।

शिष्ट्यावगाहिशाब्दबोधे पदजन्यविशेषणतावच्छेदकप्रकारकधियो विशिष्य हेतुत्वाकल्पनेपि तादृशविशिष्टवैशिष्ट्यबोधत्वावच्छिन्नं प्रति तादृशविशेषणतावच्छेदकप्रकारकनिश्चयत्वेन या हेतुता प्रत्यक्षादिसाधारणी तामादाय शाब्दबोधेऽप्यतिव्याप्तिरिति भावः। चकारात् वह्निव्याप्यवत् पर्व्वताभिन्नः पर्व्वतः पर्व्वतपदवाच्य इत्युपमिति-संग्रहः। ननु तत्कारणतायां निश्चयत्वं न निविष्ट-मत आह "दण्डीरक्तोनवे"ति रक्तदण्डवानिति ज्ञानं द्वेधा, एकं विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या, अन्यद्विशिष्टस्य वैशिष्ट्यमिति रीत्या, तत्राद्यं पुरुषनिरूपितदण्डनिष्ठविशेषणता-निरूपितरक्तत्वविशेषणताशालि, निरूपितत्वं विशेषणतायां स्वरूप सम्बन्धविशेषः प्रतीतिसाक्षिकः। दण्डीरक्तो दण्डवानिति ज्ञाने च दण्डनिष्ठविशेषणतानिरूपिता न रक्तत्वनिष्ठविशेषणतेति तदुद्-दासः, कारणञ्च तत्र तावद्विशेषणज्ञानं असंसर्गाग्रहश्च, अतएव निर्व्विकल्पकानन्तरं दण्डी रक्तो नवेति संशयानन्तरञ्च तादृशधीः सार्व्वलौकिकी। यदि च तादृशसंशयकाले विशेष्ये विशेषण-मिति रीत्यापि रक्तदण्डवानिति न धीस्तदा रक्तो दण्ड इति निश्चयाभावविशिष्टस्तादृशसंशयः प्रतिबन्धको वाच्यः। न च दण्डी रक्तो नवेति संशयानन्तरं इह भूतले रक्तो दण्डो नास्तीति मानसधीर्विशेष्ये विशेषणमिति रीत्या स्यात् अभावे प्रतियोगिताव-च्छेदकविशिष्टप्रतियोगिनो विशेष्ये विशेषणमिति रीत्या भानस्या-प्रसिद्धत्वेन तदवच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनाया अयोगादिति वाच्यं लौकिकप्रत्यक्षे इन्द्रियसम्बद्धविशेषणताया इवाभावे रक्त-

दण्डीयत्वासंसर्गाग्रहस्यापि अभावे रक्तत्वविशिष्टदण्डत्वविशिष्ट-
वैशिष्ट्यावगाहिबोधत्वस्यैव कार्य्यतावच्छेदकतया तादृशबोधवार-
णात्। वस्तुतस्तु अभावनिरूपितदण्डनिष्ठविशेषणतानिरूपित-
रक्तत्वनिष्ठविशेषणताशालित्वमेव विशेष्ये विशेषणमिति रीत्या तद-
वगाहित्वं तच्च रक्त-(१) दण्डो नास्तीति विशिष्टवैशिष्ट्यबोधे प्रसिद्धं
तदवच्छिन्नं प्रति तादृशनिश्चयाभावविशिष्टसंशयस्य (२) प्रतिबन्धक-
त्वाच्च, संशयानन्तरं निश्चये न तादृशविशिष्टवैशिष्ट्यबोधानुपपत्तिः,
अतएव विशेष्ये विशेषणमिति रीत्या विषयतैव विशिष्टवैशिष्ट्यबोध-
साधारणी प्रवृत्त्यादिजनकतावच्छेदिका। न च प्रवृत्त्यादिनियाम-
मिका एका विषयता तद्व्याप्यस्य विशेष्ये विशेषणमिति विशिष्टस्य
वैशिष्ट्यमिति च विषयताद्वयमिति वाच्यं मानाभावात्, विशिष्ट-
वैशिष्ट्यबोधेऽपि विशेष्ये विशेषणमिति रीत्या बोधनियामकसत्त्वेन
तदावश्यकत्वे, तत्र विशिष्टस्य वैशिष्ट्यमिति विषयतानियामक-
सामग्र्याः प्रतिबन्धकत्वकल्पनेऽतिगौरवाच्च। एवं खञ्जी शूर इत्यादौ
एकत्र द्वयमिति एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यमिति च
विषयताद्वयं, तत्राप्युक्तरीत्या चरमबोधे तु (३) अनुयोगितावच्छेदक
प्रकारकधीर्हेतुः, एकत्र द्वयमिति विषयता च व्यापिकेत्ययमास्मा-
कीनः पन्थाः। अधिकञ्च शब्दालोकसारमञ्जर्य्यामस्माभिः
प्रपञ्चितं (४)। रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधे च (५) रक्तत्व-

---

(१) रक्तो इति क पुस्तके।
(२) स्यैव इति क पुस्तके।
(३) तु नास्ति ग पुस्तके।
(४) प्रपञ्चितमस्माभिरिति क पुस्तके।
(५) बोधे तु इति क पुस्तके।

विशिष्ट (१) दण्डत्वविशिष्ट दण्ड (२) निष्ठा प्रकारता व्यासज्यवृत्ति-रेवा, रक्तत्ववैशिष्ट्यादिकञ्च वैज्ञानिकं, तेन रक्तवह्निमानित्यादौ न विशिष्टवैशिष्ट्यबोधासम्भवः। अन्यथा चाव्यासज्यवृत्तिः, रक्तत्वादि-प्रत्येकनिष्ठा (३) प्रकारता, तामादायरक्तत्वादिप्रकारकत्व (४) व्यवहारः। तत्र रक्तत्वविशिष्टदण्डत्वविशिष्टप्रकारक ज्ञानत्वाव-च्छिन्नं प्रति दण्डत्वविशिष्टांशे रक्तत्वाभावाप्रकारकदण्डत्वविशिष्टा-वच्छिन्न (५) रक्तत्वप्रकारक ज्ञानत्वं(६) कारणतावच्छेदकं, तेन द्रव्यं रक्तं न वा दण्डोरक्त इति ज्ञानस्य नासंग्रहः, न वा द्रव्यं रक्तं दण्डः प्रमेय इति ज्ञानस्य संग्रहः। एवं दण्डरक्तवानिति बोधेऽपि रक्तत्व-विशिष्टे दण्डत्वाभावाप्रकारकरक्तत्वविशिष्टावच्छिन्न (७) दण्डत्व-प्रकारकत्वावच्छिन्नज्ञानत्वेन हेतुतेति यथानुभव मूहनीयम् (८)। अतएव विशिष्टद्वयज्ञानमेव विशिष्टज्ञानं तत्वञ्च न कार्य्यताव-च्छेदकं अर्थसमाजग्रस्तत्वादिति मिश्रमतमपास्तं, दण्डोरक्त इति निषयानुविधायि-ज्ञानविशेषस्यानुभवसिद्धतया दुरपह्नवत्वादिति।

---

(१) विशिष्ट इति नास्ति क पुस्तके।

(२) दण्ड इति नास्ति क, ख पुस्तकयोः।

(३) निष्ठा इति नास्ति क पुस्तके।

(४) प्रकारताकत्व इति ग पुस्तके।

(५) विशिष्टावच्छिन्ने इति क पुस्तके।

(६) दण्डत्वविशिष्टावच्छिन्नरक्तत्वप्रकारकज्ञानत्वनिष्ठस्य दण्डत्वविशिष्टनिष्ठ-विशेष्यता निरूपितरक्तत्वप्रकारताशालिज्ञानत्वमित्यर्थः। "विशिष्टावच्छिन्ने" इति पाठे तु विशिष्टपदस्य वैशिष्ट्यपर्य्यवसायि दण्डत्ववैशिष्ट्यावच्छिन्नदण्डनिष्ठविशेष्यता-निरूपितरक्तत्वप्रकारताशालिज्ञानत्वमिति पूर्वोक्त एवार्थः।

(७) विशिष्टावच्छिन्ने इति क पुस्तके। (८) अनुमिनिति क पुस्तके।

एवमनुमितावपि पर्व्वतत्वादिविशिष्ट-विशेष्यक-व्याप्यप्रकारक निश्चयत्वेन हेतुत्वमिति, तद्व्याप्यविशिष्टपर्व्वतत्वविशिष्ट-वैशिष्ट्य-बोधेऽतिव्याप्तिरेवं पर्व्वतोवह्निव्याप्यवान्नवेति संशये वह्निव्याप्य-वान् पर्व्वतोद्रव्यमिति ज्ञानानुदयात् एकविशिष्टेऽपरवैशिष्ट्यबोधेऽ-प्यतिव्याप्तिर्द्रष्टव्या। दण्डवानित्यादौ तु दण्डत्वविशिष्टवैशिष्ट्य-बोधे दण्डत्वप्रकारकधीत्वेन हेतुत्वं, तत्र धर्म्मितावच्छेदकाभिन्न-तस्य संशयस्याप्रसिद्धया निश्चयत्वस्याप्रवेशात्। रक्तो दण्डो न-वेति संशयानुव्यवसायश्च न रक्तत्वविशिष्टदण्डत्वावगाही, किन्तु रक्तत्व रक्तत्वाभावप्रकारकदण्डधर्म्मिकज्ञानवत्त्वावगाही, विशेष्ये विशेषणमिति रीत्या वा रक्तदण्डज्ञानवत्त्वावगाहीति न तत्र व्यभिचार इति भावः। "विशिष्टविषयोपधानेने"ति तृतीया प्रकारे। घट (१) मिच्छामीत्यादौ घटत्व (२) विशिष्टविषयित्व (३) रूपस्यैव तदुपधानस्य इच्छादौ प्रकारत्वादिति। प्रतियोगित्वा-भावत्ववत् विषयित्व प्रकारित्वादेरनुपस्थितस्यैव प्रकारत्वाभ्युप-गमात्। तथाच विषयितायां निरूपितत्वसम्बन्धेन घटत्व-विशिष्ट वैशिष्ट्यावगाहि-तादृशेच्छादि-साक्षात्कारे व्यभिचाराच्च ज्ञानत्वं तादृशकारणतावच्छेदकमिति भावः। विनश्यदवस्थज्ञानादिच्छाद्वे-षयोः साक्षात्कारः सम्भवति, विनश्यदवस्थज्ञानजनितयोरिच्छाद्वेष-योश्च साक्षात्कारो नाभ्युपेयत इत्यत आह (४) "ज्ञाते"ति साक्षात्-

(१) कार्य्यमिति ग पुस्तके। (४) नाभ्युपेयत इत्यद्वेषेराह इति ख. ग पुस्तके।

(२) कत्व इति ग पुस्तके।

(३) विषयत्व इति क पुस्तके।

कारोऽत्र ज्ञानत्वांशे निर्व्विकल्पकरूप: । अन्यांशे सविकल्पकस्य विषयांशे सविकल्पकत: ज्ञानत्वांशे निर्व्विकल्पक(१) त एव सम्भवादिति । न च ज्ञानसाक्षात्कारात् पूर्व्वं प्रत्यासत्त्यर्थं विषयस्मृतेरावश्यकत्वे कथं व्यभिचार इति वाच्यं सविषयक-सप्रकारकत्वेनैव संस्कारादिसाधारणेन प्रत्यासत्तित्वादिति । ननु तत्तद्विशिष्ट (२) बुद्धौ तत्तद्विशेषण(३) धीत्वेन हेतुत्वात् ज्ञानसाक्षात्कारात् पूर्व्वं विशेषणधीनिमित्तविषयस्मृतेरावश्यकत्वे कथं व्यभिचार इत्यत: तत्रापि ज्ञानत्वस्याप्रवेशं दर्शयति "विशेषणविषयका"दिति इदञ्च विशिष्टज्ञानकारणतावच्छेदकप्रदर्शनाय (४) विशेषणविषयकत्वेनैव तत्र हेतुत्वात्, तत्र (५) विशेषणाविषयक संस्कारेण न विशिष्टस्मृति:, समानविषयक समानप्रकारकत्वेनैव संस्कारस्मृत्यो: कार्य्यकारणभावादतस्तदुपदर्शनायाह "विशिष्टसंस्कारा"दिति "तद्विषयकगुणानां" तादृशविशिष्टविषयकगुणानां "तत्र" तादृशविशिष्टवैशिष्ट्यबोधे, अत्रच (६) गुणानामिति स्वरूपनिर्द्देशमात्रम् । विशेषणतावच्छेदकप्रकारक संशयान्यत्वेन प्रकारतया विशेषणतावच्छेदकवत् संशयान्यत्वेन वा हेतुतेति ध्येयम् । न च रजतत्वांशेऽनुद्बुद्धसंस्कारवत: पुरुषांशेऽलौकिक

(१) ज्ञानत्वांशेनिर्व्विकल्पकत इति नास्ति क पुस्तके ।

(२) तद्विशिष्ट इति न पुस्तके ।

(३) तद्विशेषण इति न पुस्तके ।

(४) इदञ्च विशेषणज्ञाने कारणतावच्छेदकप्रदर्शनाय इति क पुस्तके ।

(५) तत्र इति नास्ति न पुस्तके ।

(६) च नास्ति न पुस्तके ।

सन्निकर्षवतो रक्तदण्डवान् पुरुषइति विशिष्टवैशिष्ट्यबोधापत्तिः (ज्ञानस्य प्रत्यासत्तित्वे रक्तो दण्डो नवेति संशयदशायां तादृशानुद्बुद्धसंस्कार-सत्त्वात् तादृशबोधापत्तिः (१)) एवं रक्तदण्डादौ लौकिकसन्निकर्षदशायामपीति वाच्यं तत्तत् प्रत्यक्षव्यक्तिविशेषं प्रति तत्तदुद्बोधकानामपि तत्तद्व्यक्तित्वेन हेतुत्वात्। भवतामपि तत्र तत्तदुद्बोधकव्यक्तिविशेषाणां स्मृतिविशेष-हेतुत्वस्यावश्यकल्प्यत्वे संस्कारप्रयोज्य तादृशविशिष्टवैशिष्ट्यबोधात् पूर्व्वं स्मृतिव्यक्तिविशेष-कल्पनाया एव गौरवपराहतत्वात्। न च यत्र पुरुषसन्निकर्ष-दशायां नोद्बोधकसमवधानं किन्तु तदभावदशायां उद्बोधकसम-वधानेन स्मृतिस्तत्र तादृशोद्बोधकस्य प्रत्यक्षव्यक्तिं प्रत्यपि हेतुत्व-कल्पने गौरवं, अकल्पने च पुरुषसन्निकर्षदशायां रक्तदण्डगोचरानुद्बुद्धसंस्कारसत्त्वात्तादृशप्रत्यक्षापत्तिरिति वाच्यं यत्र पुरुषसन्निकर्ष-दशायामेव तादृशसंस्कारोद्बोधकसमवधानेन तादृशविशिष्टवैशिष्ट्य प्रत्यक्षं जनितं तत्र (२) तादृशसन्निकर्षाभावकाले स्मृतिवारणाय तादृशोद्बोधकव्यक्तेः स्मृतिहेतुत्वकल्पनाया भवतामपि तुल्यत्वा-दिति। अतएव तत्ता संस्कार एव प्रत्यभिज्ञायां हेतुरिति प्राचीनाः। मणिकारमते तु प्रतिबन्धकाभावे सति चोद्बुद्धसंस्कारेऽवश्यं स्मृति-रिति तत्ता स्मृतिरेव प्रत्यभिज्ञायां हेतुरिति। ननु असम्भवः (३) अनुमितावपि ज्ञानत्वस्य हेतुतावच्छेदकेऽप्रवेशादत आह "इच्छा-

(१) ( ) एतच्चिह्नमध्यस्थ पाठो नास्ति ग पुस्तके।

(२) तत्र इति नास्ति क पुस्तके।

(३). असम्भवः इति नास्ति क पुस्तके।

दित" इति, नन्विच्छादितोऽनुमितिरुत्पद्यत एव अयाहयान्तर्भावे-
नानुमित्यभावस्य निर्वतुमशक्यत्वादत आह "संस्काराद्ये"ति, अपच
स्थूलकालान्तर्भावेनानुमित्यभावः सुनिश्चित (१) इति भावः।
ननु तथाप्यनुमितौ ज्ञानत्वेनैव कथं हेतुत्वं संस्काराद्यन्यत्वेनापि
हेतुत्वस्य वक्तुं शक्यत्वादत आह "संस्काराद्यन्यत्वस्ये"ति "तत्र"
अनुमितौ "ज्ञानत्वेनैव" निश्चयत्व घटकतया।

दीधितिः।

न च परामर्शानुव्यवसायेऽतिव्याप्तिः सामान्यतः
प्रत्यक्षे विषयत्वेन तत् (२) प्रत्यक्षे तत्त्वेन, कदाचित्
ज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं, न तु यावानेव
तत्तदितरत्वादिर्विषयनिष्ठो धर्म्मस्तेन तद्विषयत्वेन
कार्य्यकारणभावः। मैत्रावलोकित चैत्रनिर्म्मितनीले-
तरघट-तद्विषयकत्वादिना तत्त्वेऽनन्तकार्य्यकारणभाव-
प्रसङ्गात्, मानाभावादन्यथोपपत्तेश्च।

---

दीधिति प्रकाशः।

"विषयत्वेने"ति अथेदं पश्यामीत्यनुव्यवसायसाक्षिको लौकि-
कत्वनियामको विषयताविशेष एव कार्य्यकारणतयोरवच्छेदकः,
तदभावात् सुरभिचन्दनमित्यादौ सौरभं न पश्यामीति धीः।

---

(१) सुनिश्चीयत इति न युज्यते।

(२) तत्तद्विषयत्व इति क्वचित् पाठः, मावो प्रथमकल्प् स्पष्टतः।

अतएव कुसुमाञ्जलिप्रकाशे साक्षात्कारत्वावच्छिन्न विषयता-घटितमेव लौकिकप्रत्यक्षलक्षणमुक्तं वर्द्धमानोपाध्यायैः। तत्र तादृशविषयतया प्रत्यक्षवत्त्वं कारणतावच्छेदकं, तेन न परमाण्वादिसाधारण्यं, तादृशविषयतावत् प्रत्यक्षत्वं कार्य्यतावच्छेदकं, तेन विषयाजन्य सर्व्वांशोपनीतभानव्यावृत्तिः। न च सर्व्वांशोपनीतभानाप्रसिद्धिः सर्व्वत्रात्म-प्रत्यक्षसामग्री-सत्त्वादिति वाच्यं कामिनीजिज्ञासादिवदात्माद्यविषयकत्व-सम्भवात्, तादृशप्रत्यक्षस्य च तादृशविषयतासम्बन्धेन कार्य्यता तादृशविषयस्य च तादात्म्येन हेतुतेत्यतो न व्यभिचारः। "तत्प्रत्यक्षे" तद्विषयकप्रत्यक्षे। अनन्त-वक्ष्याभ्युपेय-विशेष-कार्य्यकारणभावैनैवातिप्रसङ्ग-भङ्गे ज्ञानप्रत्यक्षे ज्ञानत्वादिना हेतुत्व-कल्पनमेवाप्रामाणिकमित्याशयेनाह "कदाचि"दिति। "तदितरत्वादि"रिति द्वन्द्वात्परः श्रूयमाणः त्व-प्रत्ययः प्रत्येकमन्वयी (तेन तत्त्व तदितरत्वादिरित्यर्थः (१)) तेन तत्त्व तदितरत्वादिना विषयस्य कारणता, "तद्विषयकत्वेन" तत्त्व तदितरत्वादिधर्म्मविषयकत्वेन प्रत्यक्षस्य कार्य्यता। तथाच व्याप्तिप्रकारक पक्षधर्म्मताविषयक संशयान्यज्ञानत्वेन तादृशतद्विषयक-प्रत्यक्षत्वेन गौरवेण (२) न कार्य्यकारणभाव इति भावः। परामर्शत्वघटकदलचतुष्टयस्य साम्यप्रदर्शनाय "चैत्रावलोकिते"त्यादि चतुष्कं, "नीलेतरघट-तद्विषयकत्वादिने"त्यत्रापि द्वन्द्वात्पर-त्व

---

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति क, ख पुस्तकयोः।

(२) गौरवेण इति नास्ति ग पुस्तके।

प्रत्ययस्य घटेनापि सम्बन्धः । ननु प्रामाणिकतया (१) गौरवं न दोषायेत्यत आह "मानाभावा"दिति । ननु तादृशकार्य्यान्यथानुपपत्तिरेव मानमत आह "अन्यथोपपत्तेश्चे"ति ।

दीधितिः ।

अथ विशिष्ट स्मरणेऽतिव्याप्तिः । नचोपेक्षान्यत्वेन तत्र हेतुत्वं, उपेक्षात्वं हि न जातिस्तासुषत्वादिना सङ्करप्रसङ्गात्, आंशिकत्वोपगमाच्च । नापि प्रवृत्तिनिवृत्त्यजनकत्वं, अजिज्ञासितविषयत्वं वा, तादृशादपि स्मृत्युत्पादात् । नापि संस्काराजनकत्वं, तज्जनकतावच्छेदकरूपान्तरापरिचयात्, अन्योन्याश्रयप्रसङ्गात्, संस्कारानुत्पत्त्यैवास्मरणसम्भवे स्मृतिजनकतायां तदप्रवेशाच्च । नाप्यनुभवत्वेन तथात्वं संस्कारस्य फलनाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात्, समानाकारस्यैव फलस्य नाशकत्वात्, समूहालम्बनादितो नैकैकगोचरक्रमिकस्मरणानुपपत्तिः ।

---

दीधिति प्रकाशः ।

"विशिष्टस्मरण" इति व्याप्तिप्रकारकपक्षधर्मतास्मरण इत्यर्थः ।

---

(१) प्रामाणिकमिति क पुस्तके ।

यद्यपि अप्रामाण्यज्ञानास्कन्दितेनापि स्मृतिजननात्तदनास्कन्दितत्वं न स्मृतिजनकतावच्छेदकं, परामर्शस्यानुमितिजनकतायान्तु तदवच्छेदकमेवेति नातिव्याप्ति-सम्भावना, तथापि तज्ज्ञानीयाप्रामाण्य ज्ञानाभावस्य सर्व्वत्र निश्चयकारणतावच्छेदकत्वे विनिगमना-विरहेण, स्वातन्त्र्येण हेतुत्वस्योचितत्वमित्याशयात्। अप्रामाण्यं भ्रमत्वं प्रामाण्याभावश्च। न चैवमेकस्मिन् ज्ञाने अप्रामाण्यज्ञाने सति प्रतिबन्धकसत्त्वात् तदनास्कन्दितज्ञानान्तरादपि नानुमितिः स्यात्, इष्टत्वात्। अतएवाप्रामाण्यज्ञानानामननुगमेऽपि न क्षतिः। यादृशाप्रामाण्यज्ञानसत्त्वे परामर्शसत्त्वे नानुमितिस्तादृशज्ञानाभावकूटस्यैव हेतुत्वात्। अन्यथा तत्पुरुषीयाप्रामाण्यज्ञानाविषयपरामर्शत्वादिना हेतुत्वे अनन्तकार्य्यकारणभावप्रसङ्गात्। प्रमेयज्ञानमप्रमेत्यप्रामाण्यधीसत्त्वे अनुमित्यनुदयप्रसङ्गाच्च। यत्र विषयविशेषे परामर्शेऽप्रामाण्यज्ञानाभाव-स्तदभिप्रायेणेदमित्यपि कश्चित्। यदि उपेक्षात्वं चेदेकं नियन्तुं शक्यते, तदा तदन्यत्वेन हेतुत्वं वक्तुं युज्यत इत्यतस्तदेव दूषयति "उपेक्षात्व"मिति, "जातिसङ्करे"ति जगन्नाथादि-चाक्षुषे उपेक्षात्वं विहाय चाक्षुषत्वं, चाक्षुषत्वं विहायोपेक्षात्वं त्वाचादौ वर्त्तमानम्, एकत्र चाक्षुषोपेक्षाज्ञाने सङ्कीर्णमित्यर्थः। ननु चाक्षुषत्वादिव्याप्यं नानैवोपेक्षात्वं तावच्छेदकूटः कारणतावच्छेदकोऽतो न दोष इत्यत आह "आंशिकत्वे"ति एकमेवज्ञानं किञ्चिदंशे अपेक्षात्मकं किञ्चिदंशे उपेक्षात्मकं चानुभूयते, उपेक्षात्वस्य जातित्वे तन्न स्यात्, जातेरनांशिकत्वादिति भावः। प्रवृत्ति-निवृत्त्यजनकस्यापि जिज्ञासितविषयस्या-

नुपेक्षितत्वा(१)दाह "अजिज्ञासिते"ति तद्विषयकजिज्ञासाऽजनक-ज्ञानत्वमित्यर्थः। तेन कालान्तरे जिज्ञासितविषयस्यापि ज्ञानस्य नोपेक्षात्व-क्षतिः। "तादृशात्" तद्रूपावच्छिन्नात्। "संस्काराजनकत्वम्" उपेक्षात्वमिति शेषः। "तज्जनकतावच्छेदके"ति जनकतावच्छेदकाग्रहे जनकताग्रह एवासम्भवी, जनकतावच्छेदकान्तरञ्च नास्त्येवेति भावः। ननूपेक्षान्यत्वमेवावच्छेदकं स्यादत आह "अन्योन्याश्रयात्" इति, संस्कारजनकभिन्नत्वरूपोपेक्षान्यत्वेन संस्कारजनकत्वज्ञानं, संस्कारजनकत्वे ज्ञाते तदन्यत्वरूपोपेक्षात्वं ज्ञातव्यमित्यन्योन्याश्रय इत्यर्थः। "रूपान्तरापरिचया"दिति पाठे अन्योन्याश्रयादित्यत्र हेतुः। "रूपान्तरम्" उपेक्षान्यत्वादतिरिक्तम्। ननु घटत्वप्रकारकैतद्घटविषयकज्ञानस्य तादृशसंस्कारं प्रति तत्तद्व्यक्तित्वेन जनकतां गृहीत्वा तादृशसंस्कारजनक-यावद्भेदकूटवत्त्वमुपेक्षात्वं सुवचमेव, अतएवाग्रिमकल्पेऽपि न क्षतिः, एतद्घटांशे उपेक्षात्मकस्यापि ज्ञानस्य पटादौ घटान्तरे वा अपेक्षात्वसम्भवात्। न च तद्व्यक्तित्वेन संस्कारं प्रति प्रतिबन्धकत्वमेव कल्पनीयमिति वाच्यं तथा सति उपेक्षाज्ञाने विद्यमाने अपेक्षात्मकज्ञानान्तरादपि तादृशसंस्कारानुत्पत्त्यापत्तेः। तथाच घटत्वप्रकारकैतद्घटविषयकस्मृतिं प्रति घटत्वप्रकारकैतद्घटविषयकसंस्कारजनकयावद्भेदकूटवद्भिन्नत्वेन जनकत्वे न कोऽपि दोष इत्यत आह "संस्कारानुत्पत्त्यैवे"ति "अकारणसम्भवे" उपेक्षणीया-

---

(१) अनुपेक्षणीयत्वादिति क पुस्तके।

स्मरण-सम्भवे। "तदप्रवेशात्" उपेक्षान्यत्वाप्रवेशात्। न च स्मृतिं प्रत्येव तत्त्वेन हेतुत्वमस्तु, संस्कारं प्रति सामान्यरूपेण तदस्त्विति वाच्यं तथा सति उपेक्षास्थले संस्कारव्यक्तेः तन्नाशकस्य च कल्पनायां गौरवात्। न चैवं तुल्यन्यायतया संस्कारानुत्पत्त्यैव संशयात् स्मृत्यनुत्पत्तिसम्भवे स्मृतिजनकतायामपि न निश्चयत्वप्रवेश इति वाच्यम् अत्यन्ताजनकव्यावृत्तरूपे सम्भवति तत्साधारणरूपेण कारणताया अन्याय्यत्वात्। अन्यथा ज्ञानत्वेनैव हेतुतास्तु संस्काराभावादेव स्मृत्यभाव इत्यस्यापि सुवचत्वात्। न चैवं तुल्यन्यायेन उपेक्षान्यत्वस्यापि प्रवेश इति वाच्यम् उपेक्षात्वस्य तावद्भेदकूटरूपस्यासर्व्वज्ञापरिच्छेद्यतया (१) तदन्यत्वस्य दुर्ज्ञेयत्वात्, तथाचेदन्त्वावच्छेदेन घटत्वप्रकारकसंस्कारं प्रति स्मृतिं प्रति चेदन्त्वावच्छेदेन विरोधसम्बन्धेन घटत्वाभावाप्रकारकेदन्त्वावच्छिन्ने (२) घटत्वप्रकारकज्ञानत्वरूपं निश्चयत्वं जनकतावच्छेदकम्, अतएव द्रव्यं घटो न वा अयं घट इति समूहालम्बनस्यायं घटो घटत्वाभाववांश्चेति समुच्चयस्यापि संग्रहः। संशयस्थले तूक्तरूपजनकतावच्छेदकाभावात् तादृशसंस्कारस्य स्मृतेश्चानुत्पाद इति। यत्तु स्मृतिं प्रत्येवोक्तरूपेण हेतुता, संस्कारं प्रति त्विदन्त्वावच्छेदेन घटत्वप्रकारकधीत्वेनैव हेतुता, अन्यथा अयं घटो नवेति संशयानन्तरं केवलधर्म्मिस्मरणानुपपत्तिस्तथाच संशयस्थले इदन्त्वावच्छे-

---

(१) रूपस्य सर्व्वज्ञपरिच्छेद्यतया इति क पुस्तके।

(२) इदन्त्वावच्छिन्न इति ग पुस्तके।

देन घटत्वप्रकारकसंस्कार-सत्त्वात् तथा स्मृतिवारणाय तज्जनकतायां निश्चयत्वं निवेश्यत इति तन्न धर्म्मिस्मरणान्यथानुपपत्त्या धर्म्मितावच्छेदकप्रकारेण धर्म्मिविषयकत्वेऽपि संस्कारस्य धर्म्मितावच्छेदकावच्छेदेन घटत्वप्रकारकत्वकल्पने मानाभावात् । अन्यथा संस्कार एव निश्चयत्वेन हेतुतास्तु स्मृतौ तु ज्ञानत्वेनेत्येव किं न स्यात् । (१) शुद्धधर्म्मितावच्छेदकप्रकारकसंस्कारं प्रति शुद्धधर्म्मितावच्छेदकप्रकारकज्ञानत्वेनैव पृथगेव हेतुतायाः सर्व्वसम्मतत्वेनैव धर्म्मिस्मरणोपपादनात् । न चैवम् अयं घटो नवेति संशयात् केवलधर्म्मिण इव (२) केवलघटस्यापि स्मरणापत्तिः, तत्रापि धर्म्मितावच्छेदकामिश्रितघट इत्येवमाकारकघटत्वप्रकारकज्ञानानुरोधेन घटत्वप्रकारकज्ञानत्वेन, सप्रकारकजन्यज्ञानत्वेन वा पृथगेव हेतुताया अवश्यं वाच्यत्वादिति वाच्यम् इष्टत्वात् । यदपि संस्कारस्यापूर्व्वस्येव सविषयकत्वे मानाभावः, स्मृतित्वेन संस्कारत्वेनैव कार्य्यकारणभावः संस्कारत्वावच्छिन्नं प्रति ज्ञानत्वेन सप्रकारकजन्यज्ञानत्वेनैव वा हेतुत्वात्, उपेक्षाव्यावृत्तये तत्तद्व्यक्तित्वेन हेतुत्वस्योभयमतेऽप्यादरणीयत्वाच्च नातिप्रसङ्गः । इदन्त्वावच्छेदेन घटत्वप्रकारकस्मृतिं प्रति इदन्त्वावच्छेदेन घटत्वाभावाप्रकारकेदन्त्वावच्छिन्नघटत्वप्रकारकज्ञानत्वेन संस्कारद्वारा हेतुत्वाच्च नातिप्रसङ्गः । व्यापारव्यापारिणोरैक्यमेव जन्यतावच्छेदक-

(१) तस्मात् इत्यधिक पाठः क पुस्तके ।

(२) केवलधर्म्मिस्मरण इव इति न पुस्तके ।

मित्यत्र मानाभावात्। केवलघटत्वादिप्रकारक-स्मृतिं प्रति घटत्वप्रकारकधीत्वेन हेतुत्वं, न तु तत्र विषयत्वस्यापि प्रवेश इत्युभयसिद्धमेव। न च ज्ञानत्वेन स्मृतित्वेनैव कार्य्यकारण-भावोऽस्तु, संस्कारस्येदन्त्वावच्छेदेनेत्युक्तरूपेण हेतुत्वाच्च नाति-प्रसङ्ग इत्येव किं न स्यादितिवाच्यं संस्कारस्य सविषयकत्वा सिद्धेर्ज्ञान (१) सविषयकत्वस्यानुव्यवसायेनैवग्रहादिति तत्र घट-पटसमूहालम्बनस्य पटांशे उपेक्षात्मकस्य घटांशे अपेक्षात्मकस्य स्वजन्यसंस्कारसम्बन्धेन सत्त्वात् पटस्मरणापत्तिः। न च तदुद्बोधका-भावादस्मरणं, यस्य पुरुषस्य पटसंस्कारानन्तरं पटसदृश-विलक्षण-वस्तुज्ञानानन्तरमेवावश्यं पटस्मृतिस्तत्र तत्पुरुषीयपटस्मृतिं प्रति तादृशवस्तुज्ञानत्वेन हेतुत्वे उद्बोधकाभावस्यासम्भवात्। एवमे-कस्मिन्नेव घटे घटत्वद्रव्यत्वोभयप्रकारकज्ञानात् घटत्वांशेऽपेक्षात्म-कात् द्रव्यत्वांशे उपेक्षात्मकात् द्रव्यत्व-प्रकारकस्मृत्यापत्तिवारणाय संस्कारस्य सप्रकारतापि कल्पनीयेति, एवञ्चोक्तस्थलेऽतिप्रसङ्ग-वारणाय संस्कारस्य तत्प्रकारक-तद्विशेष्यादिघटितरूपेण जन-कत्वस्यावश्यकत्वे ज्ञानत्वेन स्मृतित्वेनैव कार्य्यकारणभावः कल्प्यते, न तु विशेषरूपेणापि प्रयोजनाभावादिति तु युक्तः पन्थाः। "तथात्वं" स्मृतिजनकत्वं। "सत्त"दिति असत्तदनुभवे चैकसंस्कार-नाशेऽपि संस्कारान्तरं सम्भवतीति भावः। ननु संस्कारस्य फल-नाश्यत्वेन (२) प्रथमस्मरणेनैव समूहालम्बनसंस्कारस्य नाशात्तदुत्तरं

---

(१) ज्ञानस्य इति न पुस्तके।

(२) नाश्यत्वे इति न पुस्तके।

तद्विषयकस्मरणान्तरानुपपत्तिरत आह "समानाकारस्ये"ति घटत्व प्रकारकसंस्कारं प्रति घटत्वप्रारकस्मृतित्वेन पटत्वप्रकारसंस्कारं प्रतिपटत्वप्रकारकस्मृतित्वेन नाशकत्वकल्पनात्, घटत्वप्रकारक-स्मृतिसत्त्वेपि पटत्वप्रकारकस्मृत्यभावात् तदुभयप्रकारकसंस्कारस्य न नाश (१) इत्यर्थः । अत्र च स्मृतिजन्यसंस्कारस्य अचिरकालापत्ति-वारणाय तत्तत् स्मृतिजनकत्वं तत्तत् स्मृतिनाश्यतायां प्रत्यासत्ति-रिति ध्येयम् । "समूहालम्बनादौ"त्यादिना एकधर्म्मिविशेष्यका-नेकप्रकारकज्ञान-परिग्रहः (२) । ननु यत्र क्रमिकमेव स्मरणं न तु समूहालम्बनात्मकं तत्र तादृशसंस्कारस्यानाशापत्त्या कालादेरेव नाशकत्वं कल्प्यं, तथाच फलनाश्यत्वे व्यभिचारः, तत्तद्व्यक्तित्वेन नाशकत्वकल्पने च सकृदनुभूतस्थलेऽपि चरमफल-मेव नाशकमस्तु । वस्तुतस्तु कालादेरेव तत्तद्व्यक्तित्वेन नाशकत्व-मनन्यगतिकत्वात्, स्मृतौ तु संस्कारनाशकतावच्छेदकत्वेन एका जाति(३)रेव चरमफलमात्रवृत्तिः स्मृतित्वव्याप्या कल्प्यते, तथा-चोपधायकतासम्बन्धेन विजातीयस्मृतिविशिष्टसंस्कारनाशं प्रति विजातीय स्मृतित्वेन हेतुता, अतएव विजातीयस्मृतिजन्य-संस्कारस्य कालान्तरे विजातीयस्मृत्युपधायकस्यापि न चिर-स्थता, तदानीन्तनस्य तदुपधायकत्वाभावेन तद्विशिष्टत्वाभावात्,

---

(१) संस्कारस्यानाशात् इति ख पुस्तके ।

(२) संग्रहः इति ख पुस्तके ।

(३) एकजाति इति ग पुस्तके ।

अतएवात्र नाशतायां तत्तत् स्मृतिजनकत्वमपि न प्रत्यासत्ति-रुक्तस्यैवानतिप्रसक्तत्वादत आह—"जायते चे"ति ।

दीधितिः ।

जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः ।

दीधिति प्रकाशः ।

अस्ति हि झटिति स्मरणादिना कार्य्येणानुमितो दृढतरत्व-नामा (१) संस्कारवृत्तिर्जातिविशेषः । तदवच्छिन्ने चान्वयव्यति-रेकाभ्यां पुनः पुनः स्मरणमेव कारणं, तत्र पूर्व्वपूर्व्वस्मरणं संस्कार-द्वारा, इतरच्च साक्षादेव । अतएव भावनाया पटुतरभावना-जनकत्वं मेनिरे भाष्यकृतः । न च कस्यचित् स्मृतिद्वयेन कस्यचित् स्मृतित्रयेण दृढतरसंस्कार इत्यननुगमः, तत्पुरुषीय तादृशसंस्कारं प्रति तत्तत्-स्मृतीनामपि तत्त्वेन हेतुत्व-कल्पनादिति । स्मृतिनिष्ठो जातिविशेष एव तादृशसंस्कारजनकतावच्छेदक इत्यपि (२) कश्चित् । नन्वेकस्य (३) संस्कारस्य पुनः पुनः स्मृतिजननानन्तरं झटित्युद्बोधकसमवधानमेव दार्ढ्यं तावतैव झटिति स्मरणसम्भवात् तथाच तादृशजातौ मानाभाव इत्यत आह "परित्यज्य चे"ति ।

दीधितिः ।

परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाण-

---

(१) नाम इति न पुस्तके ।

(२) अपि इति नास्ति न पुस्तके ।

(३) एकस्यैव इति ख, न पुस्तकयोः ।

व्यभिचारकेण कारणत्वकल्पनानुदयात् । इदमेव चान्यत्र सामान्यस्य च हेतुतावच्छेदकत्वे वीजम् ।

---

दीधिति प्रकाशः ।

अनुभवं विनाऽपि स्मृतितः संस्कारसम्भावनया अनुभवत्वं संदिग्धव्यभिचारकं, ज्ञानं विना संस्कारसम्भावना-विरहात्, ज्ञानत्वं निश्चिताव्यभिचारकमिति, व्यभिचारज्ञानरूपप्रतिबन्धका-भावात् तदवच्छेदेनैव हेतुतानिश्चय इति भावः । "इदमेव" निश्चिताव्यभिचारकत्वमेव ; "हेतुतावच्छेदकत्व" इति, कार्य्य-तावच्छेदकं तु विशेषरूपमेव, निश्चिताव्यभिचारकत्वात्, न तु सन्दिग्धव्यभिचारकं सामान्यरूपं, अतएव विशेषधीजन्यताव-च्छेदकं विशिष्टानुभवत्वमित्युपाध्यायाः । नन्वयमपसिद्धान्त इत्यत आह "अभिहितं चेति ।"

दीधितिः ।

अभिहितं च तात्पर्य्यटीकायां प्रथमसूत्रेऽवयव-विवेचनप्रस्तावे मिश्रैः (१) "स्मृतीनां स्वकार्य्यसंस्कार-विरोधिनीनामसहभावा"दिति चेन्न चरमज्ञानपदस्या-नुभवपरत्वात्, साक्षात्तज्जन्यत्वस्य वा विवक्षितत्वादि-त्यपि कश्चित् ।

---

(१) मिश्रैः षड्दर्शनटीकाकृद्वाचस्पतिमिश्रैः । एतदर्थं वाक्यं उद्धृतायां तात्पर्य्यटीकायां विशेषतोऽनन्वयम् । तात्पर्य्य टी-पृः ९० पः २१ ।

दीधिति प्रकाशः ।

तत्र पूर्व्ववर्णसंस्मृतिसहितान्त्यवर्णानुभव एव पदप्रत्यक्ष(१)हेतु-रित्याक्षेपे "स्मृतीना"मित्यादि समाधानफक्किका ; स्वकार्य्यो यः संस्कारः तत्कृतो यो "विरोधो" नाशः तद्वतीनामित्यर्थः । "अनु-भवपरत्वा"दिति । केचित्तु यत्र एकस्मिन्नेव घटे अयं घट इति प्रत्यक्षानन्तरं दिवसादिविलम्बेन नायं घट इत्यनुमित्यादिकमुत्पन्नं, तत्र तादृशसंस्कारं प्रति स्मृतिं प्रति च (२) विषयत्वेन हेतुत्वविव-क्षणेऽपि तादृशविषयद्वय(३)जनितसंस्कारद्वय-सत्त्वात् संशयात्मक-स्मृत्यापत्तिरतस्तथाविधस्मृति-वारणाय इदन्त्वावच्छेदेन घटत्व-प्रकारकस्मृतिं प्रति इदन्त्वावच्छेदेन घटत्वाभावप्रकारकस्मृति-सामग्र्या, एवं तादृशघटत्वाभावप्रकारकस्मृतिं प्रति तादृशघटत्व-प्रकारकस्मृति-सामग्र्याः प्रतिबन्धकत्वमवश्यं वाच्यम् । तथाच स्मृतिजनकतायां संस्कारजनकतायां च विषयत्वाऽप्रवेशेऽपि न क्षतिः । न च तत्रानुमित्यादिना पूर्व्वसंस्कारो नाश्यते, अनुमित्या-देस्तादृशप्रत्यक्षाविरोधित्वेन तज्जनितसंस्काराणाशकत्वादित्याहुः । "साक्षाज्जन्यत्वं"स्वाव्यवहितप्राक्क्षण(४)वृत्तित्वप्रत्यासत्त्या तादृश-परामर्शजन्यत्वं, तेन सिद्ध्यादिनाशकालीनेन विशेषणज्ञानतया परामर्शजन्येन धर्म्यन्तरे वह्निमत्त्वादि-प्रत्यक्षेण जनितायामनु-

---

(१) प्रत्यक्षे इति क, ग पुस्तकयोः ।

(२) संस्कारं स्मृतिञ्च प्रति इति क, ख पुस्तकयोः ।

(३) द्वय इति नास्ति ख पुस्तके ।

(४). क्षण इत्यत्र काल इति ग पुस्तके ।

मितौ नाव्याप्तिः । कस्याश्चित् स्मृतेः स्वाव्यवहितप्राक्कालवृत्ति-परामर्शजन्यत्वसम्भवेऽपि तत्र संस्कार एव प्रत्यासत्तिर्न तु तादृश-प्राक्कालवृत्तित्वमिति नातिप्रसङ्गः । तत्रानुभवत्वापेक्षया गौरव-मेवास्वरसः । प्रकारान्तरेणापि स्मरणातिव्याप्ति-वारण-प्रकारं दर्शयति ; "किञ्चे"ति,

दीधितिः ।

किञ्च व्याप्यविशेष्यकात् पक्षविशेष्यकाच्च परा-मर्शादनुमिति-दर्शनाच्च तदुभयवैशिष्ट्यावगाहि-निश्चय-त्वेन तत्र हेतुत्वं, लक्षणाघटकमपि तदेव ; एकतर-विशेष्यकज्ञानादन्यतरविशेष्यकस्मरणाभावात् । अन्यथा ऽनियमेन स्मृतेरुभयविशेष्यकत्वप्रसङ्गात् ।

---

दीधिति प्रकाशः ।

"तदुभयवैशिष्ट्ये"ति । व्याप्तिप्रकारेण धूमे पर्व्वतनिरूपिता-धेयतायाः पर्व्वतत्वरूपेण पर्व्वते व्याप्यनिरूपिताधारताया वाऽव-गाहित्वं वाच्यं, तेन प्रमेयमिति ज्ञानस्य व्याप्ये पर्व्वत,इत्यादेश्च वारणम् । आधेयत्वाधारत्वयोश्च समानसम्विद्वेद्यत्वाददोषः (१) । व्याप्तिप्रकारेण धूमे पर्व्वताधेयत्वावगाहित्वस्य पर्व्वतत्वरूपेण पर्व्वते वह्निव्याप्याधारत्वावगाहित्वस्य चान्यतरदेव वा (२) हेतुतावच्छेद-

---

(१) समानसंविद्वेद्यत्वाददोषः इति च पुस्तके ।

(२) वा इति नास्ति च पुस्तके ।

कम्। "लक्षणघटकमपी"ति अन्यथा असम्भवापातात्। "तदेव" तादृशवैशिष्ट्यावगाहित्वावच्छिन्नहेतुत्वमेव, ननु स्मृतावप्युक्तरूपेण कुतो न हेतुतेत्यत आह—"एकतरे"ति, पर्व्वते वह्निव्याप्य इति ज्ञानात् पर्व्वतो वह्निव्याप्यवानित्यस्मरणादित्यर्थः।

"अन्यथा" अनुमिताविव स्मृतावपि उभयवैशिष्ट्यावगाहित्वेन हेतुत्वे। "अनियमेन," विशेष्यतानियामककार्य्यकारणभावरूप-नियामक-(१)विरहेण; एकविशेष्यकस्मृति सामग्र्या एवान्य-विशेष्यकस्मृतिसामग्रीत्वानियमत उभयविशेष्यकत्वापत्तेरित्यर्थः।

दीधितिः।

समानप्रकारकत्वेनैव ज्ञान-स्मरणयोः कार्य्यकारण-भावाच्च, तत्र विशिष्यैव कार्य्यकारणभावः, न तूक्तरूपेण, गौरवान्मानाभावाच्च इत्यपि केचित्। एवञ्च विशिष्ट वैशिष्ट्य-बोधादौ क्वापि नातिप्रसङ्ग-शङ्कापि, वक्ष्याद्य-नुमितौ वक्ष्यादिव्यभिचार-धी-विरोधि-धी-विषयधर्म्म-प्रकारकपक्ष-धर्म्मता-ज्ञानत्वेन हेतुता मते तु नितरां, तथैव लक्षणे निवेशात्, अतएव व्याप्यवत्-पक्षाद्यभाव-ग्रहं प्रति व्याप्यवत्पक्षादि-ज्ञानत्वेन हेतुत्वेऽपि न क्षतिः।

---

(१) नियम इति क, ग पुस्तके।

दीधिति प्रकाशः ।

ननु तत्प्रकारकतद्विशेष्यकस्मृतिं प्रति तत्प्रकारक तद्विशेष्यकधीत्वेन हेतुत्वं, अतएव स्मृतेर्नोभयविशेष्यकत्वं, एवं उभयवैशिष्ट्यावगाहित्वेनापि(१) सामान्येन हेतुता, यद्विशेषयोरिति न्यायादत आह "समानप्रकारकत्वेनैवे"ति तथाच तादृश सामान्यहेतुतयैव यद्विशेषयोरिति व्याप्तेश्चरितार्थत्वान्न तद्वापि बलादुभयवैशिष्ट्यावगाहित्वेन हेतुत्वमिति भावः। केचित्तु एकतरविशेष्यकज्ञानादपर(२)विशेष्यक-स्मृति-स्वीकारे, समानप्रकारत्वेन ज्ञानस्मरणयोः कार्य्यकारणभाव-भङ्ग इत्याशयेनाह "समानप्रकारकत्वेनैवे"ति व्याचख्युः। "तत्र," स्मृतौ; "विशिष्येव" तत्प्रकारकतद्विशेष्यकत्वादिनेव। एवकारव्यवच्छेद्यमाह "ततूज्ञरूपेणे"ति, तदुभयवैशिष्ट्यावगाहित्वेनेत्यर्थः। "एवञ्च"उभयवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वविवक्षणे च; "विशिष्टवैशिष्ट्य बोधादा"वित्यादिना तादृशपदार्थोपस्थितिजन्य-शाब्दबोध-परिग्रहः। "हेतुतामत" इत्यनेन पूर्व्वोक्ताऽस्वरसः सूचितः। "नितरा"मिति, "नातिव्याप्ति-शङ्कापी"त्यनेनान्वयः। तत्र हेतुमाह "तथैवे"ति तादृशरूपावच्छिन्न हेतुत्वस्यैवेत्यर्थः। पर्व्वते वह्निव्याप्य इत्यनुभवस्य पर्व्वतोवह्निव्याप्यवानिति स्मृति-समानविषयत्वसत्त्वात्ततस्तदुत्पत्ति-सम्भावनयातिव्याप्ति-शङ्का कदाचित् स्यात्, वह्न्यभावव्यापकी भूता-

---

(१) अपि इति नास्ति ख पुस्तके ।

(२) अन्यतर इति क, ख पुस्तकयोः ।

भाव (१) प्रतियोगिधूमवान् पर्व्वत इत्यनुभवस्य वह्निव्याप्यवान् पर्व्वत इति स्मृति-भिन्नविषयकतया ततस्तदुत्पत्तेरत्यन्तासम्भवि-त्वेन स्मृतौ तेन रूपेण हेतुत्वस्यासम्भवादतिव्याप्तिः शङ्कास्पदमपि नेति भावः। "अतएव" उक्तरूपेण हेतुत्वस्य लक्षणे निवेशादेव, "व्याप्यवत् पक्षादौ"त्यादिना पक्षविशिष्टव्याप्यस्य परिग्रहः। व्याप्यविशेष्यकपरामर्शस्य हेतुत्ववादि-नये (२) पर्व्वते वह्निव्याप्य इति ज्ञानत्वेनैव हेतुत्वादिति भावः। येषां मते विशिष्टवैशिष्ट्य बोधत्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन न हेतुत्वं, तन्मतेऽप्यभावप्रत्यक्षत्वावच्छिन्नं प्रति प्रतियोगितावच्छेदक प्रकारकप्रतियोगि-निश्चयत्वेन हेतुत्वं वाच्यं, तथाच तदादाय तादृशप्रत्यक्षेऽतिव्याप्तिः स्यात्, सापि प्रकृतविवक्षायां न सम्भव-तीति भावः। "हेतुत्वेऽपी"त्यपिकारोऽस्वरस-सूचनाय। तद्बीजं तु प्रतियोगि-धियो जन्यतायां नाभाव-प्रत्यक्षत्वमवच्छेदकं, द्रव्यत्वा-दिना तत्प्रत्यक्षे व्यभिचारात्। नापि प्रतियोगिता सम्बन्धेन सप्रकारकाभाव-प्रत्यक्षत्वं तथा, पटाभावत्वेन घटाभावप्रत्यक्षे घटत्वप्रकारकधियो व्यभिचारात्। नापि घटत्वरूपेण प्रति-योगिता-सम्बन्धेन घटप्रकारकाभाव-प्रत्यक्षत्वं तथा, माना-भावात्। वस्तुतस्तु प्रतियोगिज्ञानाभावदशायां, तत्त्वेऽपि वा अभावत्वावच्छेदेन घटीयत्वासंसर्गग्रहे "न" इत्याकारक प्रत्यक्ष(३)

---

(१) वह्न्यभाव व्यापकाभाव इति ख, ग पुस्तकयोः।

(२) हेतुताभये इति ग पुस्तके।

(३) प्रत्यक्ष इति ख, ग पुस्तकयोः।

प्रसङ्गः। तथाच तदिन्द्रिय-सम्बद्धविशेषणताया घटत्वविशिष्ट-वैशिष्ट्यावगाह्यभावत्वप्रकारकप्रत्यक्षत्वं (एवं घटत्वविशिष्टवैशिष्ट्यावगाह्यभावत्वप्रकारकप्रत्यक्षत्वं) (१) इदन्त्वेनाभावप्रत्यक्षोपगमे च, इदं त्वप्रकारकाभावप्रत्यक्षत्वं नानैव कार्य्यतावच्छेदकम्। अतएव विशेष्ये विशेषणमिति न्यायेनापि नाभावधीः। अतएव विशिष्टवैशिष्ट्यबोधसामान्यहेतोरेव तदुपपत्तौ न पृथक् कार्य्यकारणभाव कल्पनेति ध्येयम्।

दीधितिः।

व्याप्त्यविषयकत्वेन वा जन्यं ज्ञानं विशेषणीयं, एतेन स्मृतिं प्रति संस्कारद्वाराऽनुभवं प्रति च साक्षात् विशेषणधियो हेतुत्वस्य निर्व्विकल्पकात्मकस्य च्या स्मरणस्यानुभवं प्रत्येव वा तस्या हेतुत्वस्य नियमतः ज्ञातिसाक्षात्कारपूर्व्वं विषयस्मृतेश्च कल्पनात्; व्याप्यवत्पक्षवत्त्वादि-ज्ञानेऽतिव्याप्तिरित्यपि परास्तम्। साध्यादेरननुगमात्, एकोपादानेऽन्यानुमितौ हेत्वाद्याप्तिविषयिण्याञ्च तस्यामव्याप्तिः परमवशिष्यते, सापि तादृशज्ञानहत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरस-

(१) ( ) एतच्चिह्नमध्यस्थः पाठो नास्ति क पुस्तके।

नीया, एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम्। एवं चान्वयव्यतिरेकव्याप्त्योः पृथक् प्रयोजकत्वेऽपि न क्षतिः। पर्व्वत-वह्निव्याप्य-वैशिष्ट्यावगाहिनिश्चय-त्वावच्छिन्नकारणताप्रतियोगिककार्य्यतया, वह्निव्याप्य-वत् पर्व्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिक-व्याप्त-विषयकवृत्तिकार्य्यतया वा अवच्छेदिका ज्ञान-वृत्तिः सामानाधिकरण्येनावच्छेदिका वा या जाति-स्तद्वत्त्वं वा बोध्यम्। व्याप्तिभानेऽवश्यं भासमानो यस्तादृशानुमित्यविषयस्तदविषयत्वमात्रं वा ग्राह्यम्। यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभव-त्वान्यानुभवान्यासमवेत-धर्म्मसमवायित्वं वा वक्तव्यम्। अनुभवत्वजात्यनङ्गीकारे तु तद्व्यक्तिसमवेतस्मरणा-सममेतधर्म्मसमवायित्वं वक्तव्यम्। व्याप्तिज्ञानत्वाव-च्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारणताप्रतियोगिककार्य्यता तत्समानाधिकरणानुभवत्वव्याप्यजातिमत्त्वं तत्त्वमि-त्यपि केचित् (१)।

---

(१) केचिदिति कचित्पाठः ख घ न मध्यपाठात् बध्यतः।

दीधिति प्रकाशः।

ननु आधारत्वाधेयत्वयोः समानसम्बिद्वेद्यत्वे(१) मानाभावः। तादृशान्यतरत्वञ्च गौरवादेव न जनकतावच्छेदकं, अतो वह्निव्याप्यवान् पर्व्वतः पर्व्वते वह्निव्याप्य इति ज्ञानयोः प्रातिस्विक-रूपेणैव हेतुत्वं वाच्यं, तथा चातिप्रसङ्गस्तदवस्थ एवेत्यत आह "व्याप्तविषयकत्वेने"ति "एतेन" व्याप्तविषयकत्व-विवक्षणेन। अन्य-विशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणधियो हेतुत्वव्यवस्थापनेऽव-श्याभ्युपेय विशेषणज्ञानस्यैव विशेषणतावच्छेदकप्रकारकत्व-सत्त्वात्तादृशविशिष्टवैशिष्ट्यावबोधत्वावच्छिन्नं प्रत्यपि (२) विशेषणताव-च्छेदकप्रकारकधियो हेतुत्वं व्यवस्थापितं स्यादित्याशयेन तथैव व्यभिचारं वारयति "स्मृति"मित्यादिना। क्वचित् स्वतः क्वचित् व्यापारतो वा अन्यविशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञान-स्याव्यवहित-पूर्व्ववर्त्तित्वमित्यर्थः। "विशेषणधियोहेतुत्वस्ये"त्यादि-षष्ठ्यन्तचतुष्टयस्य "कल्पना"दित्यपेतनेनान्वयः। ननु सम्बन्धभेदेन व्यापकताभेदात् हेतुताभेदाच्च(३)नैकं हेतुत्वम्। संस्कारस्य व्यापा-रताऽपि न सम्भवति संस्कारमजनयित्वाऽपि (४) विशेषणज्ञानेन विशिष्ट-ज्ञानजनन-सम्भवादत (५) आह "निर्विकल्पकात्मके"ति तथाच सर्व्वत्रैव विशेषणधियः साक्षाद्धेतुत्वमिति भावः। ननु

---

(१) संवेद्यत्वे इति न पुस्तके। (४) अपि इति नास्ति क पुस्तके।
(२) अपि इति नास्ति ग पुस्तके। (५) अत इति नास्ति ग पुस्तके।
(३) हेतुताभेदाच्च इति नास्ति क पुस्तके।

समानप्रकारकत्व(१)समानविशेष्यकत्वेनैव स्मृतिं प्रति कारणत्वं ज्ञानस्य क्लृप्तं, निर्विकल्पात्मकस्मृतिं प्रति कारणत्वान्तरस्य कार्य्यतावच्छेदकान्तरस्य वा भवन्मते(२) कल्पनं गौरवपराहतम्। न च घटत्वांशे अन्याप्रकारकघटत्वविषयकस्मृतिं प्रति तादृशघटत्व-धीत्वेन, सम्बन्धविधया-समवायविषयक(३) स्मृतिं प्रति तादृश-समवायविषयकधीत्वेन, घटविषयकस्मृतिं प्रति घट-धीत्वेन च कार्य्यकारणभावकल्पनात्, घटत्वप्रकारकघटविशेष्यकस्मृतित्वं न कार्य्यतावच्छेदकमतो निर्विकल्पकात्मकस्मरणं नानुपपन्नमिति वाच्यं एकस्य घटस्य घटत्वेन, घटान्तरस्य द्रव्यत्वेनैव ग्रहे घटान्तरविशेष्यकघटत्वप्रकारकस्मृतेरापत्ते(४)रत आह "अनुभव"मिति तथाच विशिष्टवैशिष्ट्यानुभवत्वं तज्जन्यतावच्छेदकमिति न स्मृतौ व्यभिचार इति भावः। "तस्याः" विशेषणधियो। "नियमतो विषयस्मृते"रिति; अपेक्षाबुद्ध्यात्मकज्ञानेन चेच्छादिकं न जन्यत इत्याशयः। "साध्यादे"रित्यादिना पक्षहेतु हेतुतावच्छेदकसम्बन्ध-साध्यतावच्छेदकसम्बन्धपरिग्रहः। "दैवा"दिति सत्यां वह्निव्याप्यानुमितीच्छायां वह्निव्याप्यवान् वह्निव्याप्यधूमवांश्च पर्व्वत इत्याकारात्तु परामर्शाज्जातायां (५). पर्व्वतो वह्निव्याप्यवान् वह्निमां-

---

(१) त्व इति नास्ति ख, ग पुस्तकयोः।

(२) भवन्मते इति नास्ति ख, ग पुस्तकयोः।

(३) विषयक इति नास्ति ख पुस्तके।

(४) रत्यापत्ते इति ख, ग पुस्तकयोः।

(५) इत्याकारकपरामर्शजन्यायां इति ग पुस्तके।

येत्यनुमितावित्यर्थः । “तस्यां” तद्व्याप्तिप्रकारकपक्षधर्म्मता-
निश्चयजन्यायां “सापि” अव्याप्तिरपि, अनुभवत्वव्याप्यत्वं तन्न्यून-
वृत्तित्वं, तच्चानुभवनिष्ठभेद-प्रतियोगितावच्छेदकत्वम् । “एवञ्च”
अनुभवत्वव्याप्यजातिमत्व-विवक्षणे च, अनुभवत्वव्याप्यत्व-प्रवेशा-
पेक्षया लाघवार्थमाह “पर्व्वतवह्नी”ति । प्रागुक्तयुक्त्या उभय-
वैशिष्ट्यावगाहित्वस्य कारतानवच्छेदकत्वादाह “वह्निव्याप्यवत्पर्व्व-
ते”ति । प्रतियोगिकान्तं वृत्यन्तञ्च कार्य्यताया विशेषणम् । अव-
च्छेदकत्वम् अवच्छेदकत्वाश्रयत्वं, न तु अवच्छेदकत्वपर्य्याप्त्यधि-
करणत्वम् । अवच्छेदकत्वाश्रयश्च तादृशविशिष्टशरीर-घटकपदार्थ-
स्तोम एव ; तथाच पर्व्वतविशेष्यकवह्निप्रकारकानुमितित्वस्याव-
च्छेदकत्वे वह्नित्वादेरपि तद्घटकतया, तद्दत्वमतिव्याप्तिरतो “ज्ञान-
वृत्ति”रिति, ज्ञान-समवेतेत्यर्थः । ननु आलोकलिङ्गकानुमिति-
व्याहतस्य वह्निव्याप्यधूमवान् पर्व्वत इत्येतादृशपरामर्शाव्यवहि-
तोत्तर-तादृशवह्न्यनुमितित्वस्य कार्य्यतावच्छेदकत्वे, तद्घटकज्ञानत्व-
मादाय ज्ञानमात्रेऽतिव्याप्तेराह “सामानाधिकरण्येने”ति, ज्ञान-
त्वस्य कार्य्यतासामानाधिकरण्य-सत्त्वेऽपि सामानाधिकरण्यसम्बन्धेन
नावच्छेदकत्वं, किन्तु अव्यवहितोत्तरत्व-परिचायक-परामर्शघटक-
तया, अनुमितित्वस्य च तादृशसम्बन्धेनैवावच्छेदकत्वं, तादृशानु-
मितिः कार्य्येति, कार्य्यतासामानाधिकरण्येनैव तच्चावच्छेदक-
त्वावगाहनादिति भावः । व्याप्यविषयकेत्यत्राक्षकाभावतया
वैयर्थ्याभावेऽपि तदपेक्षया लाघवादाह । “व्याप्तिभान” इति
व्याप्तिभाने अवश्यं भासमानं साध्यमपीति, तदविषयकत्वोपादाने-

ऽसम्भव इत्यत "स्तादृशानुमित्यविषय" इति; तद्दशामिपरामर्शा-धीनानुमित्यविषयो घटादिस्तदविषयक-तादृशविशिष्ट-वैशिष्ट्य-बोधेऽतिव्याप्तिरतस्तत्पूर्व्वं (१) प्रतीकं; तथाचाभावाविषयकत्वं हेत्वविषयकत्वं वा वाच्यमित्यर्थः। ननु पर्व्वतो वह्निमानित्यनु-मितित्वावच्छिन्नं प्रति पर्व्वतो वह्निव्याप्यधूमवानिति परामर्श त्वेन न हेतुता; वह्निव्याप्यैतद्रूपवान् पर्व्वत इति ज्ञानजन्ये व्यभिचारात्। नापि वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शा-व्यवहितोत्तरतादृशानुमितित्वं तत्कार्य्यतावच्छेदकम्, अव्यवहितो-त्तरत्वं हि तादृशपरामर्शाधिकरणकालध्वंसाधिकरणत्वे सति तादृश-परामर्शध्वंसाधिकरणकाल-ध्वंसानधिकरणत्वं, तच्चाप्रसिद्धं, काल-मात्रस्यैव तादृशपरामर्श-ध्वंसाधिकरणकाल-ध्वंसाधिकरणत्वात्, अनादिसंसारे अनन्तानामेव तादृशपरामर्शानां नाशात्। तत्परा-मर्शव्यक्त्यधिकरणकाल-ध्वंसाधिकरणत्वे सति तत्परामर्शव्यक्ति-ध्वंसाधिरणकालध्वंसानधिकरणत्वरूपेऽव्यवहितोत्तरत्वे, कार्य्यता-वच्छेदकस्य तत्तद्व्यक्तिविश्रान्तत्वात्, तद्व्यक्तित्वमेव तत्तद्व्यक्ति-त्वावच्छिन्नकार्य्यता(२)वच्छेदकमतःपरामर्शत्वस्यानुमितित्वस्य च कारणकार्य्यत्वयोरवच्छेदकत्वे मानाभावः। न च तत्तदव्यवहि-तोत्तरत्व-सम्बन्धेन सामानाधिकरण्यविशेषितेन परामर्शविशि-ष्टानुमितित्वं (३) तथा, तादृशानेकपदार्थघटिताव्यवहितोत्तरत्वस्य

---

(१) अतः पूर्व्वं इति न पुस्तके।

(२) अन्यता इति न पुस्तके।

(३) एव इत्यधिकं न पुस्तके।

सम्बन्धत्वे मानाभावात्। न चैककालावच्छेदेनैकात्मवृत्तित्व-प्रत्यासत्त्या परामर्शविशिष्टानुमितित्वं तथा; क्षणद्वयात्मकः कालो धर्म्मोऽतो न विनश्यदवस्थपरामर्शजन्यानुमित्यसंग्रह इति वाच्यं एतद्रूपलिङ्गकवह्न्यनुमिति-द्वितीयक्षणे तृतीयक्षणे वा धूमपरामर्शोत्पादे तादृशानुमितावपि तेन सम्बन्धेन धूमपरा-वदनुमितित्व-सत्त्वेन, तत्र धूमपरामर्शस्याहेतुत्वेन(१) व्यभिचारात्; स्वप्रागभावाधिकरणक्षण (२) वृत्तिपरामर्शाधिकरणक्षण-द्वयाव-च्छेदेन एकात्मवृत्तित्वस्य च सम्बन्धत्वे मानाभाव, इत्यस्वरसा-न्मूलोक्तलक्षणमुपेक्ष्य लक्षणान्तरमाह "यां काचि"दिति; केचित्तु यत्र विषयविशेषे एकेनैव व्याप्येन व्यापकस्यानुमितयस्तत्र तद्व्याप्यविशिष्टताद्दशपक्षज्ञानत्वेन तत्पक्षकताद्दशविषयविशेषानु-मितित्वेन कार्य्यकारणभावे वाधकाभावात् तदनुमितिमादाय जातिघटितं मूलोक्तलक्षणमनाकुलमित्याहुः।

लिङ्गोपहितलैङ्गिकभानपक्षे, वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शस्य, वह्निव्याप्यधूमवान् पर्व्वतो वह्निमानित्यनुमितित्वमेव कार्य्यतावच्छेदकं, अतएवालोकलिङ्गकपरामर्शजन्यानुमितौ न व्यभिचारः। तत्र वह्निव्याप्यालोकवान् पर्व्वतो वह्निमानित्या-कारानुमितेरङ्गीकारात्। लिङ्गानुपधानपक्षेऽपि पर्व्वतो वह्निमा-नित्यनुमितित्वेन कार्य्यता, वह्निव्याप्यधूमवान् पर्व्वत इति परा-

(१) धूम परामर्शत्वेन इति न पुस्तके।

(२) क्षण इति नास्ति न पुस्तके।

मर्शत्वेन जनकता। वह्निमत्पर्व्वतत्वानुमितेश्च धूमलिङ्गकतत्तदनु-
मिति-स्वरूपा विषयतैव कार्य्यतावच्छेदकसम्बन्धः, अव्यवहितोत्त-
रत्वापेक्षयालघुत्वात्, स्वरूपस्य सम्बन्धत्वेन क्लृप्तत्वाच्च। अत (१)
आलोकादिलिङ्गकानुमितौ न व्यभिचारः। एवमालोकादिलिङ्ग-
कानुमितावपीत्यपि वदन्ति। मानसत्वव्याप्य-जातिविशेष एव
परामर्शत्वं अनुमितित्वावच्छिन्नजनकतावच्छेदकमित्यपि (२)
कश्चित्। तन्न क्वचिदेव पक्षे किं चिदेवसाध्यं अनुमितिविषयो
नापरइत्यत्र नियमकाभावे वह्निव्याप्यधूमवान् पर्व्वत इति
परामर्शादपि घटानुमिति-प्रसङ्गात्। न च घटानुमितौ घट-
परामर्शः (३) कारणं, तादृशपरामर्शे घटस्यापि विषयत्वसम्भवात्;
तदनुमितौ तद्व्याप्यवत्पक्षज्ञानत्वेन विशिष्यहेतुत्वकल्पने च किं
परामर्शत्वजात्या? न चानुमितित्वावच्छिन्नस्याकस्मिकत्वापत्तिः,
ज्ञानत्वेनैव तदवच्छिन्नं प्रति हेतुत्वस्य सुवचत्वादिति।
"तद्व्याप्ती"ति शृङ्गग्राहिकयाऽनुमिति-व्यक्तिविशेषोग्राह्यः। "सम-
वेता"न्तं "अन्या"न्तं "असमवेता"न्तं च धर्म्म-विशेषणम्। एतदभि-
प्रायेण धर्म्मपदम्। तत्र प्रत्यक्षत्वादिवारणायाद्यं, प्रत्यक्षत्वादे-
रपि कालिकसम्बन्धेनानुमिति—वृत्तित्वात् "समवेते"ति। अनु-
भवत्व-वारणाय द्वितीयम्। तत्रानुभवत्वं तद्व्यक्तित्वेनोपादाय

---

(१) अत इति नास्ति ख पुस्तके।

(२) अपि इति नास्ति ख पुस्तके।

(३) परामर्श एव इति ग पुस्तके।

तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताको-भेदो विवक्षित:। अन्यथा अनु-
भवान्यासमवेत-सकलानुभवसमवेतत्वरूपानुभवत्वत्व-प्रविष्ट-सकला-
नुभवसमवेतत्वावच्छिन्नप्रतियोगिताकभेदस्य विवक्षितत्वे सत्तादी-
नामपि वारणेऽनुभवान्यासमवेतेत्यस्य वैयर्थ्यापातात्। ज्ञानत्वादि-
वारणाय तृतीयं विशेषणम्। अनुमितित्वस्यापि कालिकादि-
सम्बन्धेन अनुभवान्यस्मिन् कालादौ वृत्तेरप्रसिद्धिरतोऽसमवेतेति।
तादृशधर्म्मस्य कालादावतिप्रसक्तत्वादाह, "समवायित्व"मिति।
तथाच समवायसम्बन्धेन तादृश-धर्म्म एव लक्षणमिति भाव:।
स्वर्गादि-शाब्दबोधादौ स्वर्गादिकमनुभवामीत्यनुव्यवसायाभावात्,
प्रत्यक्षत्वाद्यन्यतमानुभवत्वम्, स्मृतिव्यावृत्तोऽनुभव-व्यवहार: स्मर-
णान्यज्ञानत्व-निबन्धन इति मतेनाह (१) "अनुभवत्वजातो"ति,
तथाच निष्प्रयोजनतया अनुभवत्वान्येति विहाय स्मरणान्यज्ञाना-
न्यासमवेतत्वे गौरवात् स्मरणासमवेतत्वमेवोपादेयमिति भाव:।

यद्यपि अनुभवत्व जात्यङ्गीकारेऽपि तद्व्यक्तिसमवेत-प्रत्यक्षा-
समवेतधर्म्मसमवायित्वं लक्षणं सुवचमेव, तथापि प्रत्यक्षादि-
प्रमितिचतुष्कस्यैव लक्षणमनेनोक्तं, तद्व्यक्तिपदेन प्रत्यक्षव्यक्ति (२)
परिग्रहे प्रत्यक्षप्रमिते:, एवं शाब्दव्यक्ति (३) परिग्रहे शाब्दस्यापि
अनेन लक्षण-करण-सम्भवादेवमुपमितावपीति भाव:। व्याप्तिज्ञानं
करणं परामर्शोव्यापार: व्यापारव्यापारिणोरैक्यमेव जन्यताव-

(१) मतेनाह इति क, ग पुस्तकयोः।
(२) व्यक्ति इत्यत्र प्रमिति इति पाठः ग पुस्तके।
(३) शाब्दप्रमितेव इति ग पुस्तके।

च्छेदकं, तथैव व्यापार-व्यापारि-भावसम्भवादिति मतानुसारेणाह "व्याप्तिज्ञानत्वावच्छिन्ने"ति, वह्निव्याप्यधूमवत् पर्व्वतवानिति विशिष्टवैशिष्ट्यबोधत्वावच्छिन्न-कार्य्यता-वारणाय व्याप्तिज्ञानत्वावच्छिन्नेत्यादि, व्याप्तिज्ञानत्वावच्छिन्ना या कारणता तन्निरूपिता कार्य्यताया यदवच्छेदकं तदवच्छिन्नेत्यर्थः। व्याप्तिज्ञानत्वावच्छिन्न-कारणताप्रतियोगिक-प्रत्यक्षवृत्ति-कार्य्यता-वारणाय "विशिष्टपरामर्शत्वावच्छिन्ने"त्यादि। तत्र हि व्याप्तिज्ञानत्वावच्छिन्नस्य कार्य्यतावच्छेदकं व्याप्तिविशिष्टज्ञानत्वं, परामर्शस्य तु तादृशविशिष्ट-वैशिष्ट्यज्ञानत्वमिति नैकमुभयोः कार्य्यतावच्छेदकमिति तदादाय प्रत्यक्षादौ नातिव्याप्तिः। न च वह्निव्याप्ति-ज्ञानस्य तदव्यवहितोत्तरवह्न्यनुमितित्वं, वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शस्य तदव्यवहितोत्तर पर्व्वतविशेष्यक-वह्न्यनुमितित्वं कार्य्यतावच्छेदकं इत्यत्रापि नैकमवच्छेदकमिति वाच्यम्। वह्निव्याप्यो धूमः वह्निव्याप्यरूपविशेषवान् पर्व्वत इति समूहालम्बनात्मकव्याप्ति-ज्ञानाव्यवहितोत्तरवह्न्यनुमितौ स्वजन्यपरामर्शसम्बन्धेन धूमीयव्याप्तिज्ञानस्य व्यभिचारितया, करणत्वाभावेन तज्जन्यतायामपि तादृशधूमपरामर्शाव्यवहितोत्तर-तादृशवह्न्यनुमितित्वस्यावच्छेदकत्वात्।

यत्तु व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिक कार्य्यतावच्छेदकं वह्न्यनुमितित्वं "तदवच्छिन्ना" तद्घटितधर्म्मावच्छिन्ना पर्व्वतविशेष्यकवह्न्यनुमितित्वस्य परामर्शजन्यतावच्छेदकस्य वह्न्यनुमितित्व-घटितत्वादिति। तन्न व्याप्तिविशिष्ट-पर्व्वतवैशिष्ट्य-ज्ञानत्वस्य तादृशपरामर्शजन्यतावच्छेदकस्य व्याप्तिविशिष्टवत्-पर्व्वत-

वैशिष्ट्य-ज्ञानत्वरूप-तादृशावच्छेदकघटितत्वादतिव्याप्तेरिति। केचि-दित्यस्वरसबीजन्तु, व्याप्तिशरीरघटकतावत्-पदार्थानां स्मृतौ विशेष्ये विशेषणमिति रीत्या (१) यत्र परामर्शस्तत्रव्यभिचारात्, व्याप्तिज्ञानत्वेन कारणतैव न, एवमव्यवहितोत्तरत्वस्य तत्तद्व्यक्ति-विश्रान्ततया कार्य्यतानवच्छेदकत्वात् परामर्शत्वमपि न जनक-तावच्छेदकमित्यादि ।

दीधितिः ।

परे तु पक्षधर्म्मतेत्यत्र पक्षता विशेषणं, तथाच पक्षतासहकृत-तादृशपरामर्शजन्यत्वमर्थः । यथोक्ताया विशिष्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्ष-वारणाय परामर्शस्योपादानं, तत्त्वेन जनकत्वमेकावच्छेदेन तदु-भयजन्यत्वं च विवक्षितम् । तेन वाधादिकालीनेन दैवात् प्रतियोगिविषयकेन परामर्शेन जन्ये पक्षतायाः प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः । तद्वृत्त्य-नुभवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहु-स्तच्चिन्त्यम् ।

इति श्रीमद्-रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे अनुमिति-लक्षणं समाप्तम् ।

---

(१) न्यायेन इति न पुस्तके ।

दीधिति प्रकाशः ।

"पक्षधर्म्मते"ति पक्षत्वविशिष्टे पक्षे यद्धर्म्मता-ज्ञानं तज्जन्येत्यर्थः । पक्षत्वस्य विशेषणत्वं च विशेष्यान्वयिनाऽन्वयित्वं, पक्षधर्म्मताज्ञानेत्यत्र ज्ञानमेव पक्षतायाः परम्परया विशेष्यं तदन्वयिनी या जन्यता तत्र पक्षताया अन्वयः । तात्पर्य्य-वशाच्च ज्ञाने-साक्षादन्वितस्य पक्षधर्म्मतादेरविशेषणत्वेऽपि धर्म्मता-विशेषण-पक्ष-विशेषणीभूत-पक्षताया अपि विशेषणत्वेन जन्यतायामन्वयः । यथा लोहितोष्णीषा ऋत्विजः प्रचरन्ति इत्यादावुष्णीषस्य प्राप्तत्वादविवक्षितस्यापि तस्य विशेषणीभूतलौहित्यं विशेषणत्वेनेष्टसाधनतान्वयीति भावः । पक्षधर्म्मतेत्यत्र लक्षण-वाक्ये पक्षतासखजातत्व-सम्बन्धेन प्रथमज्ञाने विशेषणमित्यपि कश्चित् । "यथाज्ञायाः" सिषाधयिषा-विरहविशिष्टसिद्ध्यभावरूपायाः कालाद्यतीन्द्रिय-पदार्थ-घटितत्वेन न प्रत्यक्षत्वमतो "विशेष्ये"ति, विशेषणवति विशिष्टाभावस्य विशेष्याभावरूपत्वात्, एवं विशेष्यवति विशिष्टाभावस्य विशेषणाभावरूपत्वात्, विशिष्टाभावस्यातिरिक्तत्वेऽपि यत्र विषयविशेषे सिषाधयिषाप्रयुक्तो नानुमित्युत्पादस्तत्र सिद्ध्यभावस्यैव पक्षतात्वात् । एवं यत्र सिद्धिकाले सिषाधयिषाप्रयुक्तैवानुमिति-स्तत्र सिषाधयिषाया एव पक्षतात्वात्, तस्याश्च प्रत्यक्ष-जनकत्वादतिव्याप्तिरिति परामर्शोपादानमिति भावः । "तत्त्वेन" परामर्शत्वेन ; तत्त्वेनेत्यस्याकूत(१)माह "बाधादौ"ति आदिना

(१) आकूतमित्यत्र फलमिति न युक्तो ।

सत्प्रतिपक्षपरिग्रहः । तत्रानुमिति-सामग्र्यभाव-प्रदर्शनाय । "दैवात्" स्व सामग्री-वशात्, "प्रतियोगी"ति सिद्ध्यभाव-प्रतियोगि-सिद्धि-विषयकेनेत्यर्थः । अत्र च सिद्धित्वप्रकारकसिद्धि-ज्ञानत्वेन सिद्ध्य-भाव-जन्यतावच्छेदक-तल्लौकिकप्रत्यक्षत्वावच्छिन्नं प्रति जनकत्वं मिश्रादीनां सम्मतम् । तेन एकावच्छेदेनेत्यस्यापि सत्त्वं सूचितम् । एकावच्छेदेनेत्यस्य फलमाह "तदुभयसमूहालम्बन" इति— न च परामर्श-प्रत्यक्षे परामर्शत्वेन कारणत्वाभावात् एकावच्छेदे-नेति व्यर्थमिति वाच्यं वह्निव्याप्यधूमवान् पर्व्वतो नास्ति सिद्ध्य-भावश्चेति समूहालम्बने तात्पर्य्यात् । यदि च विशिष्ट-वैशिष्ट्य-बोधत्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारक-धीत्वेन न हेतुत्वं, अभावोपनीत-ज्ञानं प्रत्यपि प्रतियोगितावच्छेदकप्रकारक-धीत्वेन न हेतुत्वं, तदा सुख-व्याप्यदुःखवदात्म-भिन्नमिदं सुखवानात्मा सिद्ध्यभावश्चेति समूहालम्बनेऽतिव्याप्तिर्द्रष्टव्या । "तच्चिन्त्य"मिति । चिन्तावीजं तु परामर्श-जन्यतावच्छेदक कोटौ तल्लिङ्गकत्वं निविष्टं, पक्षता-जन्यतावच्छेदक-कोटौ तन्निवेशनमफलम् । यदि च विष-यिता-सम्बन्धेनावच्छेदकत्वैक्यं विवक्ष्यते तदा नायं दोषः । पर्व्वतो वह्निमानिति सिद्ध्यभाव-कार्य्यतावच्छेदकं पर्व्वतो वह्निमानित्यनु-मितित्वं, वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शस्य कार्य्यताव-च्छेदकं धूमलिङ्गक-पर्व्वतोवह्निमानित्यनुमितित्वम्, उभयत्रैव वह्निमत्पर्व्वतस्य विषयतयावच्छेदकत्वात् । न च पक्षतावच्छेदक-सामानाधिकरण्येन सिद्ध्यभावस्य कार्य्यतावच्छेदकं पक्षतावच्छेदक सामानाधिकरण्यमात्रावगाह्यनुमितित्वम्, पर्व्वतत्वसामानाधि-

कारणेन परामर्शस्य पर्व्वतविशेष्यकवह्न्यनुमितित्वं पर्व्वतत्वावच्छे-
देन वह्न्यनुमिति-साधारणं, पर्व्वतत्वावच्छेदेन वह्निव्याप्यपरामर्श-
स्यापि तत्सामानाधिकरण्यावगाहित्वेन व्यभिचाराभावात् इति
वाच्यं अवच्छेदकावच्छेदेन सिद्ध्यभाव-सामानाधिकरण्यावगाहि-
परामर्शयोरेव प्रकृते निवेशात्। पर्व्वतत्वसामानाधिकरण्येनानु-
मितित्वस्य तदुभयजन्यतावच्छेदकत्वात्, अवच्छेदकावच्छेदेनानु-
मितावपि सामानाधिकरण्यावगाहित्वस्य सत्वादिति दिक्।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमानखण्डे अनुमिति-लक्षणं समाप्तम्।

---

## अथानुमान-लक्षणम्।

### दीधितिः।

"तत्करण"मिति (१) न च व्याप्त्यादि-ज्ञानजन्य-
ज्ञान-करणत्वेनेतरभेद-साधने व्याप्तिज्ञानत्वं तादात्म्य-
सम्बन्धेन व्याप्तिज्ञानमेव वा गमकं, व्याप्तेरननुगमे-
ऽपि अधिकस्य भागासिद्धि-वारणमात्रप्रयोजनत्वादिति
वाच्यं फलोपहितस्य लक्ष्यतया व्याप्तिज्ञानत्वादेरति-
प्रसक्तत्वात्, करणत्वनिष्ठव्याप्तिस्तादृशज्ञानत्वत्वाद्यनव-

---

(१) पृः १७ पः ८ मूलं द्रष्टव्यम्।

च्छेद्यत्वाद्व्यतिरेकव्याप्तिगमकतया वैयर्थ्यशङ्कानवकाशा-
च्चेति ।

इति श्रीमद् रघुनाथशिरोमणिकृतायां दीधितौ
अनुमानखण्डे अनुमान-लक्षणं समाप्तम् ।

---

दीधिति प्रकाशः ।

"व्याप्तिज्ञानत्वं" व्याप्तिप्रकारकज्ञानत्वं, पक्षधर्म्मतांशे व्याप्ति-प्रकारकत्वविनिवयत्वेन हेतुतायां, व्याप्तिप्रकारकज्ञानत्वस्यापि निवेशात् । व्याप्तिज्ञानत्वं व्याप्तिप्रकारकपक्षधर्म्मतानिवयत्वमिति शार्थः । व्याप्तिप्रकारकज्ञानत्वादेर्लघुव्याप्तिप्रकारकज्ञानघटित-त्वात्, तस्यैव तादात्म्येन हेतुत्वमुचितमित्याशयेनाह "तादात्म्ये-ने"ति । ननु व्याप्तेः साध्यसाधनभेदेनाननुगतत्वात् व्याप्तिज्ञान-जन्य-वृत्तितादृशजातिमत्कारणत्वस्य सकलव्याप्तिज्ञाननिष्ठत्वात् भागासिद्धि-वारणमेवाधिकांश-प्रयोजनं स्यादत आह । "व्याप्ते"रिति "अधिकस्य" तादृशजातिमत्कारणत्वस्य ; "भागासिद्धौ"ति, तथाच व्याप्तिग्रहानौपयिकत्वेन न तत् सार्थक्यमिति (१) भावः । फला-योगव्यवच्छिन्नं कारणं करणमिति लक्षणाभिप्रायेणाह "फलोप-स्थितस्ये"ति तथाच फलानुपस्थितेऽपि व्याप्तिज्ञानत्व-सत्वेन व्यभि-चारात्तद्वारणाय तादृशजातिमत्कारणत्वं फलोपधानरूपं हेतुः

---

(१) सार्थकत्वमिति इति ख पुस्तके ।

कार्य्यमिति भावः। अनुमिति-स्वरूपयोग्यस्य लक्ष्यत्वेऽपि न क्षतिरित्यभिप्रायेणाह—"करणत्वे"ति तथाच यन्निष्ठेति व्याया-द्धर्मिभेदान्न वैयर्थ्यमिति भावः। "ज्ञानत्वादौ"त्यादिना ज्ञानत्व-परिग्रहः (१)। यद्यपि व्याप्ति-ज्ञानत्वमेव करणत्वं, तस्य च व्याप्ति-ज्ञानत्वत्वेनैव तादृशव्याप्ति-ग्रह-सम्भवः। तथापि व्याप्ति-ज्ञानान्तरवृत्तिकरणतान्तरस्य प्रकृतविशेषणं विना व्याप्यग्रहा-(२) त्तस्य सार्थकत्वमिति भावः(३)। स्वरूपसम्बन्धरूपकरणता भिन्ने-वेत्यपि वदन्ति। तादृशज्ञानत्वं परामर्शत्वं तस्य करण-त्वानात्मकत्वाद्धर्म्मिभेद इत्यन्ये। धूमप्रागभाववद्धर्म्मिभेदेऽपि वैयर्थ्य-मिति मतेनाह "व्यतिरेके"ति हेत्वभावनिरूपितसाध्याभावनिष्ठ व्याप्तेर्ग्राह्यतया हेतोर्वैयर्थ्य-शङ्कानवकाशादिति भावः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे अनुमानखण्डे अनुमानलक्षणं समाप्तम्।

---

## अथानुमानस्वरूपनिरूपणम्।

### दीधितिः।

लिङ्गस्यानित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्य-क्षोपजीवकत्वं व्यवस्थापयन्नाह "तच्चे ति" (४) अनुमिते-

---

(१) ज्ञानत्वत्वादौत्यादिपदाद्व्याप्तिज्ञानत्वपरिग्रह इति ख पुस्तके।

(२) व्याप्तेरपक्षार्दिति ग पुस्तके।

(३) भिन्नर्थः इति ग पुस्तके।

(४) पृः २७ पः ८ मूलं द्रष्टव्यम्।

र्ज्ञानाकरणक-ज्ञानत्वेन प्रत्यक्ष-मिति-मध्यनिवेशे तत्-करणस्यापि प्रत्यक्षप्रमाणान्तर्भावः स्यादिति तन्निरस्यति "तच्चे"त्यपि कश्चित्।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां दीधितौ अनु-मानखण्डे अनुमान-स्वरूप-निरूपणं समाप्तम्।

---

दीधिति प्रकाशः।

"अनित्यत्वेऽपी" ति यद्यपि अनित्यमपि सर्व्वं न स्वरूपतः प्रत्यक्षोपजीवकं तथाप्यदृष्टद्वाराऽनित्यमात्रस्यैव प्रत्यक्षोपजीवकत्वं सम्भवतीति तथोक्तम्। "ज्ञानाकरणके"ति ज्ञानत्वावच्छिन्न-करणकत्वाभाववज्ज्ञानत्वं, ज्ञानकरणकत्वव्यभिचार्य्यनुभवत्वव्याप्य-जातिमत्त्वं वार्थः। अत्रानुमिनोमि न साक्षात्करोमीत्यनुव्यव-सायबलादनुमितेरपि प्रत्यक्ष-वैजात्य-मिति तत्करणस्यापि वैलक्षण्य-मवर्जनीयम्। अतोऽनुमितावुक्तलक्षणातिव्याप्तिः फलवैजात्या-धीनप्रमाणवैजात्यस्य (१) नापवादिकेत्यस्वरसः कश्चिदित्यनेन सूचितः (२)।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति प्रकाशे अनुमानखण्डे अनुमान स्वरूप-निरूपणं समाप्तम्।

(१) प्रमाणवैजात्यस्येत्यत्र प्रमाणान्तरत्वकल्पनस्य इति ख, ग पुस्तके।

(२) दर्शितः इति ग पुस्तके।

तत्त्वचिन्तामणिः।

अथानुमानं न प्रमाणं योग्योपाधीनां योग्यानुपलब्ध्याऽभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात्। शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च, लोके धूमादि-दर्शनानन्तरं वह्न्यादि-व्यवहारश्च सम्भावना-मात्रात्। संवादेन च प्रामाण्याभिमानात् इति नाप्रत्यक्षं प्रमाणमिति। न अप्रमाणसाधर्म्येणाप्रामाण्य-साधने दृष्ट-साधर्म्यस्यानुमानत्वात्। एतद्वाक्यस्य सन्दिग्ध-विपर्य्यस्तान्यतरं प्रत्यर्थवत्त्वात्। तयोश्च परकीययोरप्रत्यक्षत्वात्, अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययोर्व्याघाताच्च। अपिचानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वापत्तेः, प्रामाण्यस्यानुमेयत्वात्, स्वतश्च प्रामाण्य-ग्रहे तत् संशयानुपपत्तेः; व्याप्ति-ग्रहोपायश्च वक्ष्यते।

इति श्रीमद्-गङ्गेशोपाध्याय-कृते तत्त्वचिन्तामणौ अनुमानखण्डे अनुमिति-तत्करण-स्वरूप-निरूपण-सहितानुमान-प्रामाण्य-निरूपणं समाप्तम्।

---

## अथानुमानप्रामाण्यनिरूपणम् ।

दीधितिः ।

अनुमानप्रामाण्यं परीक्षितुं चार्व्वाक-मतमुत्थापयति "अथे"ति । "अनुमानं" अनुमात्वेनाभिमतं धूमादि-ज्ञानं, असत्ख्यात्युपनीतमनुमानमेव वा, "संवादेन" संवादाभिमानेन, सम्भावितस्यासतोऽनुगताकारस्य परमार्थसत्-स्वलक्षण-साक्षिणाध्यक्षेणानुल्लेखात्। अध्यक्षमूलक-विकल्पोल्लिखितत्वाद्वा संवादः। अनुमानाप्रामाण्ये च तन्मूलक-समय-निर्णयाद्यधीन-प्रवृत्तिकयोः शब्दोपमानयोः सुतरामप्रामाण्यान्नाप्रत्यक्षं प्रमाणमित्याह "इती"त्यादि । "अप्रामाण्य-साधर्म्येण" प्रमाणता-प्रयोजकरूपशून्यत्वेन । "दृष्टसाधर्म्यस्य" साधर्म्यदर्शनस्य वा, नन्वभिहितमेव साधर्म्य-दर्शनं सम्भावनां भावयति सम्भावनेनैव च वहुशो व्यवहार-हेतुरित्यत आह "अनुमान"मिति। ननु न वयमापाततो भ्रम-जनकत्व-लक्षणमप्रामाण्यं निरूपयामो, येन भ्रमस्य विषय-वाधाधीनतया प्रामाण्यं सम्भाव्येतापि, परन्तु प्रमा-करणत्व-व्यतिरेकम् अत आह "अपि "चेति"। "स्वत" इति न चानु-

गताकारासंस्पर्शिनि परमार्थसत्-स्वलक्षण-साक्षिणि स्व-संवेदन-संविदित-प्रामाण्ये निर्व्विकल्पकज्ञाने नाप्रामाण्यं सन्दिह्यते, परन्तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पक एवेति वाच्यं निर्व्विकल्पकस्य सन्मात्रावलम्बनत्व-स्वविषयत्व-प्रामाण्यावगाहित्वानामनुमानाधीन-सिद्धिकत्वात्। सर्व्वमिदं सति व्याप्तिनिश्चये स्यात्, स एव तु न सम्भवत्युपायाभावादित्यत आह "व्याप्ती"ति।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां दीधितौ अनुमानखण्डे अनुमान-प्रामाण्य-निरूपणं समाप्तम्।

---

दीधिति प्रकाशः।

सिद्धासिद्धिव्याघातादाह "अनुमानत्वेने"ति मुख्यार्थ-परत्वेनाप्यनुमान-पदं संगमयति "असदि"ति तन्मते पदानामलीके एव शक्तिरनुगताकारमात्रस्यैवालीकत्वादिति। प्रमाणान्तर-विषय-स्वलक्षण(१)विषयकत्व-रूपसंवादो न सम्भावनायामलीक-

---

(१) स्वलक्षण-लक्षणं यथा—संक्षेपशारीरके अः १ श्लोः ५१६।

लक्ष्यस्वरूपमपि यद्दुपदस्य साक्षात्
अर्थान्तराद्धुर्वति भेदकमेतदाहुः।
अस्य स्वलक्षणतयैव तु लक्षणं तं
छिद्रं दृतं जलमितीदृशमत्र लोके॥

विषयित्वामत आह "संवादे"ति । यथाश्रुतार्थ-त्यागी बीजमाह "सम्भावितस्ये"ति असत्त्वे हेतु"रनुगताकारस्ये"ति, परमार्थ-सन् यः स्वलक्षणः तन्मात्रविषयकेणेत्यर्थः । "स्व"मसाधारणम् अनेक-देश-कालाद्वृत्ति-स्वात्मकं, तदेव "लक्षणं" व्यावर्त्तकं यस्य, तन्मते भेदेन धर्म्मधर्म्मि-भावस्यानभ्युपगमात् । एतेनानुगतधर्म्मसम्बन्धेन तस्य व्यावर्त्तकत्वे, सदसत्-सम्बन्धाभावात् कथं तस्य परमार्थसत्त्व-मिति शङ्का निराकृता । ननु तन्मते नैतत् सम्वाद-लक्षणं पूर्व्वा-पराध्यक्षव्यक्त्योरेकैकस्वलक्षणविषयकत्वात्, (१) जगतः क्षणभङ्गु-त्वात् (२) । किञ्च निरुक्तसंवादस्य परमार्थसद्विषयघटितमूर्त्तिकस्य विकल्पेनासंस्पर्शात् (३) कथं भ्रमोऽपीत्यतस्तन्मतमिदं संवादमेवो-पपादयति "अध्यक्षमूलके"ति, शशविषाणादि-विकल्पानामनादि-वासना-परिपाकमात्र-मूलकानां वारणार्थ"मध्यक्षमूलके"ति । अत्र "सम्भावितस्ये"त्यनुषज्यते । तथाच सम्भावितस्याध्यक्षमूलक-विकल्पोल्लिखितत्वात्, सम्भावनायामध्यक्षमूलकविकल्पोल्लिखित-विषयकत्वं संवाद इत्यर्थान्न पक्षस्यानुपपत्तिः । समयसम्भावनयैव-शब्दादेः प्रवृत्तिः स्यादत उक्तं "निर्णये"ति आदिना आकाङ्क्षादि-तात्पर्य्यादि-निर्णय-परिग्रहः । "नाप्रत्यक्षं प्रमाणमिता"ति (४)

(१) व्यक्त्योरेकस्वलक्षणाविषयकत्वात इति घ पुस्तके ।

(२) क्षणभङ्गित्वात् इति ख. घ पुस्तकयोः ।

(३) सविकल्पकेनासंस्पर्शात् इति ग पुस्तके ।

(४) एतदेवान्यत्राप्युक्तं—

प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम् ।
मोक्षश्च मरणाद्वान्यः कामार्थौ पुरुषार्थकौ ॥

तथाच स्वाभिमतस्य प्रत्यक्षातिरिक्ते प्रमाणत्वाभावव्यवस्थापन-स्यानुगुणत्वेनैवानुमानाप्रामाण्य-साधनं चार्व्वाकस्येति भावः। अप्रमाणसाधर्म्म्यस्य प्रमाणेऽपि सत्त्वादप्रमाणसाधर्म्म्यत्वेन न प्रमाणत्वाभाव-व्याप्यतेत्यत आह "प्रमाणते"ति प्रमाणता-प्रयोजकम् इन्द्रियत्वं व्याप्तिनिश्चयत्वादि चैकतरसिद्धं, तथाच पूर्व्वं व्यभिचार-शङ्कोपवर्णनं व्याप्ति-निश्चयाभाव-प्रदर्शनद्वारा प्रमाणता-प्रयोजकरूप शून्यत्व-सम्पादनायैवेति भावः। "दृष्टं" साध्यसाधन-वत्तया निश्चितं तस्य "साधर्म्म्यं" साध्य-व्याप्यहेतुमत्त्व स्वरूपं तस्य, "दृष्टं" ज्ञायमानम् अतीतत्वस्याविवक्षणात्, तथाच ज्ञायमान-साधर्म्म्यस्येति वार्थः"। ज्ञानकरणतापक्षमाश्रित्यपूरयति "साधर्म्म्य-दर्शनस्येति" "अभिहितमेवे"ति "व्यवहारहेतु"रित्यनेनान्वितं, तथाचानुमानाप्रामाण्यं परकीयसन्देहादिकं च साधर्म्म्यदर्शनेन सम्भाव्य तत्तद्व्यवहारोपपत्तिरित्युक्तकल्पनमित्यर्थः। केचित्तु अभि-हितमेव साधर्म्म्यदर्शनं प्रमाणताप्रयोजकरूपशून्यत्व-दर्शनम्। "सम्भावनां" अनुमानेऽप्रामाण्यसम्भावनाम्। ननु सम्भावनया कथं (१) अप्रामाण्यव्यवहारः कथं वा परकीयसन्देहादिकमनि-र्णीय तदुच्छेदाय शब्दप्रयोग इत्यत आह "सम्भावनेनैवे"ति तथाच

न हि खल्वीश्वरः कर्त्ता परलोककथा वृथा।
देहं विनास्तिवेदात्मा कस्मादृश्यतां पुरः॥ इत्यादि।

एतन्मते प्रपितामहादि-प्रत्यक्षानुरोधेन ज्ञानलक्षणसन्निकर्षोऽपि प्रत्यक्षहेतुः। एतत् सर्व्वं अद्वैतब्रह्मसिद्धौ प्रपञ्चितम्।

(१) सम्भावनायां इति ख पुस्तके।

परकीयसन्देहादिकं सम्भाव्यैव तादृशशब्दप्रयोग इत्यर्थ इति व्याचख्युः । "आपातत" इति यावदसत्ख्यातिर्न व्यवस्थाप्यत इत्यर्थः । तत्सिद्धौ तु भ्रमस्यासत्ख्यातिरूपतया भ्रमजनकत्व-सिद्धावपि नाप्रामाण्याभाव सिद्धिरिति भावः । "विषयबाधे"ति अप्रामाण्याभाववति अप्रामाण्यप्रकारकत्वरूपभ्रमत्वस्य विशिष्येऽ-प्रामाण्याभाववत्तां विनाऽनुपपत्तेरिति भावः । संशयो हि रजतत्वप्रकारकत्वात्मकरजतत्वप्रमाभ्रमसाधारण धर्म्मदर्शनाद्विशे-षादर्शनाच्च भवेत्, तत्र प्रकृते (१) न (२) सम्भवतीत्याह "अनु-गताकारसंस्पर्शिनी"त्यादिना । अनेन साधारणधर्म्मवद्धर्म्मिज्ञान-निरासः । "परमार्थस"दित्यनेन विशेषादर्शनस्य निरासः । तादृशस्वलक्षणविषयकत्वस्यैव व्यावर्त्तकधर्म्म (३) विधया संशय-विरोधित्वादिति । कोटिरूपविशेषनिश्चयमपि (४) दर्शयति "स्वसं-वेदने"ति स्वेन स्वात्मकेन संवेदनेन संविदितं विषयीकृतं प्रामाण्यं यस्येति । सविकल्पके संशय कारणोपपत्तिमाह "परस्मि"ति । प्रत्यक्षे प्रामाण्यशङ्काविरहे कथमिन्द्रियार्थसन्निकर्षानन्तरमुत्पन्ने-ऽप्रामाण्यसंशयानुभव इत्यत आह "तदुत्तरभाविनो"ति "सम्-

(१) प्रकृते चार्व्वाकमते इत्यर्थः तन्मते तु रजतत्वप्रकारकत्वं न प्रमात्वसमाना-धिकरणं निर्व्विकल्पके एव प्रमात्वाङ्गीकारात तत्र च तत्प्रकारकत्वाभावादिति ध्येयम् ।

(२) प्रकृते तत्र इति ख पुस्तके ।

(३) धर्म्म इति नास्ति ख पुस्तके ।

(४) प्रामाण्यरूपविशेषनिश्चयमपीत्यर्थः ।

स्फुरितो" विषयीकृतो "अलीकानुगताकारो" येन तत्, "सन्मात्रे"ति असदविषयकत्वे सति सद्विषयकत्वं सन्मात्रावलम्बनत्वं तच्च न निर्व्विकल्पक-विषयः । असद्घटितमूर्त्तिकत्वादिविषयिता-नवस्थापाताच्च । न च तदपि सम्भावनीयं, तथा सति प्रत्यक्षे सन्मात्रावलम्बनत्व-प्रामाण्यादीनामप्रामाणिकत्वापातात्, सम्भाव-नायां प्रमाणत्वाभावादिति भावः (१) । सर्व्वमिदम् अनुमान-प्रामाण्यसाधनम् ।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे अनु-मानखण्डे अनुमान-प्रामाण्य-निरूपणं समाप्तम् ।

---

(१) तथाच निर्व्विकल्पके सन्मात्रविषयकत्वविषयतायां स्वविषयकत्वविषय-तायां प्रामाण्यविषयतायाञ्चानुमानमेव प्रमाणमित्यवश्यं वाच्यं इति भावः ।

## अथ व्याप्तिवादे व्याप्तिपञ्चक-प्रकरणे

## तत्त्वचिन्तामणिः ।

नन्वनुमिति-हेतुव्याप्ति-ज्ञाने काव्याप्तिः ? न तावदव्यभिचरितत्वं ; तद्धि न साध्याभाववदवृत्तित्वं, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं, साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं, सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वं, साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यभावात् ।

इति श्रीमद्गङ्गेशोपाध्यायकृते तत्त्वचिन्तामणौ अनुमानखण्डे व्याप्तिपञ्चक-प्रकरणं समाप्तम् ।

### अथ व्याप्तिपञ्चकप्रकरणे दीधितिः ।

समारब्धानुमान--प्रामाण्य--परीक्षा—कारणीभूत-व्याप्ति-ग्रहोपाय-प्रतिपादन-निदानं व्याप्ति-स्वरूप-निरूपणमारभते "नन्वि"त्यादिना ।

### अथ व्याप्तिपञ्चकप्रकरणे दीधिति-प्रकाशः ।

"समारब्धे"ति समारब्धा या अनुमान प्रामाण्य-परीक्षा तत्-कारणीभूतं यद्व्याप्ति-ग्रहोपाय प्रतिपादनं तस्य निदानमित्यर्थः । व्याप्ति-स्वरूप-ज्ञाने हि व्यभिचार ज्ञानाभावोऽव्यभिचार ग्रहं, (१)

(१) अहश्च इति च पुस्तके ।

सहचारग्रहस्य समानाधिकरणवृत्तिधूमत्वरूपव्याप्तौ सहचारांशस्य विशेषणतया तज्ज्ञानोपयोगित्वेन प्रतिपादयितुं शक्यते, नान्यथेति भावः।

दीधितिः।

साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यक सद्धेतावव्याप्तिमाशङ्क्याह * "साध्यवद्भिन्ने"ति साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः।

दीधिति प्रकाशः।

"अव्याप्ये"ति, कपि संयोग्येतद्वृक्षत्वादित्यादावित्यर्थः। साध्यवद्भिन्नो यः साध्याभाववानिति कर्म्मधारये ( साध्याभाववत्त्वस्याव्यावर्त्तकत्वेन ) (१) साध्याभाववदित्यस्य वैयर्थ्यमित्यतः सप्तमीतत्पुरुषेण व्याचष्टे "साध्यवद्भिन्ने"ति, न च साध्यवद्भिन्नेन समं अवृत्ति-

* अत्रेदमवधेयम्। यद्येतल्लक्षणे साध्यतावच्छेदकत्वेन यावद्धर्म्माननुगमय्य तद्विशिष्टावच्छिन्नप्रतियोगिताकाभावो निवेश्यते तदाऽप्रसिद्धिः, जगति सर्व्वस्यैव साध्यतावच्छेदकतया सर्व्वत्रैव यत्किञ्चित् साध्यतावच्छेदकावच्छिन्न-सत्त्वात्, यदि च साध्यतावच्छेदकाद्यात्मकं वह्नित्वादिकं विशेषत उपादाय नानालक्षणमभिप्रेतं तदा लक्ष्यभेदस्यावश्यकत्वं, अन्यथा सर्व्वलक्षणस्याव्याप्त्यापत्तेः। एवञ्च कपि संयोग्येतद्वृक्षत्वादित्यादिस्थलीयस्य कपि-संयोगत्वावच्छिन्नाभाववदवृत्तित्वरूप-लक्षणस्यासम्भवेनाव्याप्त्यभिधानस्यासङ्गत्यापत्तेर्दीधितिग्रन्थानुपपत्तिरिति। अत्रेदं समाधानं; साध्यतावच्छेदकत्वं उपलक्षणविधयावह्नित्वाद्यनुगमकं, तच्च प्रकृतानुमितिविधेयतावच्छेदकत्वरूपं, प्राचां मते प्रकृतत्वं अनुगतविशेषविश्रान्तः। तथाच प्रकृतानुमिति-विधेयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नाभाववदवृत्तित्व-रूपस्यानुगतस्य लक्षणत्वात् लक्ष्य-भेद-कल्पना-विरहेणाव्याप्तिदानं सम्भवत्येवेति भावः।

(१) एतच्चिह्नित-पाठो नास्ति ख पुस्तके।

त्वस्यान्वयाभावात् यथा सन्निवेशे न वैयर्थ्यमिति वाच्यं अभेदेन-साध्यवद्भिन्नान्वित साध्याभाव-सम्बन्धिनोऽवृत्तित्वान्वये साध्याभाव-वत्त्वस्याव्यावर्त्तकत्वेन वैयर्थ्यात् साध्यवद्भिन्नावृत्तित्वस्यैव (१) सम्यक्त्वादिति । न चाधिकरणभेदेनाभाव-भेद-पक्ष एव एतल्लक्षणमिति साध्यवद्भिन्ने योऽभाव इत्येतावतैव सामञ्जस्ये साध्यपद वैयर्थ्यमिति वाच्यं व्याप्यवृत्तित्वाव्याप्यवृत्तित्व(२)रूप-विरुद्धधर्म्म-संसर्गेण अव्याप्यवृत्ति(३)संयोगाभावात् गुणादिवृत्ति-संयोगाभावस्यैव भिन्नत्वोपगमात्, न तु घटत्वाभावादेरपि अधि-करणभेदेन भेदाभ्युपगमो,मानाभावादिति(४)।यदि चाभावमात्र-स्यैवाधिकरणभेदाद्भेद इति मतेनेदम्। तथापि साध्याभावे-त्यत्राभावत्वं भावाभाव-साधारण(५)मुपात्तं, अन्यथा घटत्वा-भाववान् पटत्वादित्यादौ अभावसाध्यके भावभिन्नसाध्याभावस्या-प्रसिद्ध्याऽव्याप्तिः स्यात्तथाच साध्यवद्भिन्ने वर्त्तते यो द्रव्यत्वरूपो द्रव्यत्वाभावाभावस्तद्वति धूमादेर्वृत्तित्वेनासम्भवोऽव्याप्तिर्वा स्यादतः "साध्ये"ति । साध्यभाववत्त्वञ्च साध्यवत्ताग्रहविरोधिग्रहविषय-सम्बन्धेन । तेन कालिकतया आत्मत्वस्याभावे दैशिकविशेषण-तया साध्ये आत्मत्वादिहेतौ नाव्याप्तिः ।

---

(१) साध्यवद्भिन्नीयावृत्तित्वस्यैव इति ख, ग पुस्तकयोः ।

(२) व्याप्याव्याप्यवृत्तित्व इति ख पुस्तके ।

(३) अव्याप्यवृत्तीत्यत्र द्रव्यवृत्ति इति पाठः ख पुस्तके ।

(४) तथाच साध्यपदानुपादाने वह्निमान् धूमादित्यादावव्याप्तिरिति भावः ।

(५) भावसाधारण इति ख पुस्तके । भावाभावसाधारणपरं इति घ पुस्तके अत्र च उपात्तमिति नास्ति ।

दीधितिः ।

कर्म्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह "साध्यवत्" इति ।

---

दीधिति प्रकाशः ।

"कर्म्मादा"विति तथाच साध्यवद्भिन्ने गुणादौ यः कपि-संयोगाभावः स एव द्रव्येऽपीत्यव्याप्तिः । इदमुपलक्षणं घटत्व-घटकाशसंयोगान्यतराभाववत् आकाशत्वादित्यादावप्यव्याप्तिः तत्र हि साध्यवद्भिन्ने घटे य स्ताद्दशः संयोगरूपः साध्याभावस्तद्वति आकाशत्वस्य वृत्तेः । न च साध्यवद्भिन्नवृत्तित्वविशिष्टो यः साध्याभावस्तद्वदवृत्तित्वमित्युक्तौ न दोष इति वाच्यं साध्याभाव-पद-वैयर्थ्यात् ।

---

दीधितिः ।

हेतोः साध्यवत्यपि भिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह "सकले"ति । साकल्यं साध्याभाववति साध्ये च बोध्यम् । साध्याभावो वा साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभाव-प्रति-योगिनि व्यभिचारिणि नातिव्याप्तिर्न वा नानाव्यक्ति-साध्यक-सद्धेतावव्याप्तिः । अव्याप्यवृत्तिसाध्यकव्याप्यवृत्ति-सद्धेतौ अव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तौ अतिव्याप्ते र्वारणायाभाववद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ।

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-व्यधिकरणः, तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यम् । तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः, न वा विशिष्टसत्तात्वादिना तादृशाभाव-प्रतियोगिनि सत्तादावति प्रसङ्गः ।

---

दीधिति-प्रकाशः ।

सिद्धिकर्म्मत्वं साध्यत्वमित्यभिप्रायेणोक्तं "साध्यवत्यत्रे"ति । "अव्याप्ते"रिति व्यासज्य वृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वे-नान्योभावविशेषणत्वे (१) एतद्रूपवान तद्रसादित्यादावेव लक्षण-गमनादसम्भवो न भवतीति भावः ।

साध्याभाववति साकल्यप्रवेश एव साध्ये साकल्यं सार्थकमिति प्रथमं साध्याभाववति साकल्यं व्याचष्टे "साध्याभाववतो"ति, साध्या-भावे साकल्यदाने तु धूमवान् वह्नेरित्यादावतिव्याप्तिः तत्तद्वृ-त्तित्वावच्छिन्नप्रतियोगिताकाभावघटितसाध्याभावस्तोमस्य प्रति-योगिवैयधिकरण्यावच्छिन्नस्याधिकरणे गुणादौ वह्न्यादेरभावसत्वात्, अव्याप्तिश्च पृथिवीत्वाभाववान् जलत्वादित्यादौ, तत्र तत्तद्विपक्षा-वृत्तित्वावच्छिन्नाभाव घटित साध्याभावस्तोमाधिकरणस्या प्रसिद्धे-रिति तन्नोदाहृतं(२) ननु वह्निमत्यपि सकलवह्न्यभावसत्त्वादव्याप्तिः व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिकत्वेनाभावविशेषणे तु जाति-

---

(१) विशेषणे इति ग, च पुस्तकयोः ।

(२) तच्च दृष्टं इति ग पुस्तके ।

मान् सत्त्वादित्यादावव्याप्तिः तत्र पूर्व्वक्षणवृत्तित्वविशिष्टसकल-जात्यभावस्य जातिमत्यपि सत्त्वात्। न च सकलसाध्यस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावा एवात्र निवेश्या गुणान्य-त्वविशिष्टजातिमान् सत्त्वादित्यादावतिव्याप्तेस्तत्र सकलसाध्यान्त-र्गतायाः सत्तायास्तद्व्यक्तित्वावच्छिन्नाभाववति जात्यादौ सत्ताया अभाव-सत्त्वादतः "साध्यतावच्छेदके"ति। "अव्याप्यवृत्ति" इति कपिसंयोगी एतत्त्वादित्यादौ हेतोरव्याप्यवृत्तित्वे तु तत्राभाव-सत्त्वेन नाव्याप्तिरिति भावः।

यद्यपि हेत्वभावे(१) प्रतियोगिव्यधिकरणत्वावश्यक(२)त्वा(३) दव्याप्यवृत्तिसद्धेतावव्याप्तिः सम्भवति। तथापि यथाश्रुतस्य नाव्याप्तिरिति "व्याप्यवृत्तौ"त्युक्तम्। "व्यभिचारिणौ"ति। पृथिवी कपिसंयोगादित्यादौ ; "अभावद्वये" साध्याभावे हेत्वभावे च ; प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धेन हेतुतावच्छेदक-सम्बन्धेन (४) यथायथं बोध्यं, तेन द्रव्यत्वप्रकारकैतत्प्रमावान् द्रव्यत्वात् अयमात्मा ज्ञानादित्यादौ नातिव्याप्तिरव्याप्तिर्वा (५) द्रव्यत्वप्रकारक-यत्प्रमायां गुणादिकं न विषयः सैव प्रमा एतत्पदेन धर्त्तव्या, तेन द्रव्याणि यावन्ति सर्व्वं प्रमेयमिति समूहालम्बनद्रव्यत्वप्रकारकप्रमाया विषयतया केवलान्वयित्वेन

(१) हेत्वभावेपि इति ग, घ पुस्तकयोः।

(२) वैयधिकरण्यस्यावश्यक इति घ पुस्तके।

(३) आवश्यकत्वादेव इति ग पुस्तके।

(४) सम्बन्धेन च इति ग पुस्तके।

(५) नाव्याप्तिरतिव्याप्तिर्वा इति घ पुस्तके।

समवायेन तदभावस्य सम्बन्धसामान्येन प्रतियोगिव्यधिकरणत्वासम्भवेऽपि न क्षतिः । "हेत्वभावोऽपी"त्यादिना साध्याभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो बोध्यः । तेन गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ नातिप्रसङ्गः (१) । न च साध्याभावोऽपीत्येव वक्तुमुचितं ऽपिना हेत्वभावसमुच्चय इति किं न कृतं, तथा सति तत्प्रतियोगित्वमित्यत्र तत्पदेन हेत्वभावपरामर्शानुपपत्तेः, हेत्वभावप्रतियोगित्वमित्युक्तौ च शब्द-गौरवादिति । क्रमेण विशेषणयोः फलमाह "तेने"त्यादिना, अत्र च निरुक्तप्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभाववत् सकलनिष्ठनिरुक्तप्रतियोग्यनधिकरणवृत्तित्वविशिष्टाभावप्रतियोगित्वं हेतौ ग्राह्यं, तेन कपिसंयोगो एतत्वात् कपिविभागाद्दित्यादौ प्रतियोगिसमानाधिकरणभिन्नस्य साध्याभावस्य हेत्वभावस्य चाप्रसिद्धावपि (२) प्रतियोग्यनधिकरणवृत्तिर्यः कपिसंयोगाभावः तद्वति द्रव्ये एतत्त्वाभावस्यासत्त्वेऽपि न क्षतिः ।

दीधितिः ।

यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादि व्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिस्तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह "साध्यव"दिति ।

(१) न प्रसङ्ग इति ग पुस्तके ।

(२) अप्रसिद्धत्वेऽपि इति ग पुस्तके ।

दीधिति-प्रकाशः ।

साध्ये साकल्याप्रसिद्धेः, साध्याभाववति साकल्याप्रसिद्धेः, हेत्वभावे सकलसाध्याभाववद्वृत्तित्वाप्रसिद्धेः,क्रमेणाव्याप्ति-श्रेणी-(१) त्रयमाह "यत्रे"त्यादिना, अत्र साध्यतावच्छेदकावच्छिन्नसाध्याभाव-विवक्षणे साध्ये साकल्याप्रवेशादाह "विपक्षो"वेति "एक-व्यक्तिक" इति विपरिणामेनान्वयः (२) । ईश्वरभिन्नं घटत्वादि-त्यादावित्यर्थः । तत्राव्याप्तिरित्यग्रेतनेन सम्बन्धः । ननु साकल्य-मिह्वाशेषरूपं व्यापकत्वपर्य्यवसितमत आह "निर्द्धूमत्वादा"विति, निर्द्धूमत्वस्य धूमत्वावच्छिन्न-सामान्याभावात्मकस्य एकव्यक्तिक-त्वात् साध्ये साकल्याप्रसिद्धिरेवेह दोष इत्यतो "व्याप्ये"ति, तादृश-व्याप्यस्य जलत्वादेस्तद्रूपेण साध्यतायां निर्व्वह्नित्वस्य व्यभिचारि-त्वात् सद्धेतुत्वार्थमाह(३)"तत्त्वेने"ति निर्द्धूमत्व(४)व्याप्यत्वेनेत्यर्थः ।

दीधितिः ।

अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगि-ताकत्वं व्युत्पत्तिबललभ्यं, न हि भवति नीलो घटो घटादन्य इति ।

इति श्रीमद् रघुनाथशिरोमणिकृतायां दीधितौ अनु-मानखण्डे व्याप्तिपञ्चकप्रकरणं समाप्तम् ।

---

(१) श्रेणी इति नास्ति च पुस्तके । (३) सद्धेतुत्वादत आह इति घ पुस्तके

(२) विपरीतेनान्वय इति ग पुस्तके । (४) निर्द्धूमत्व इति नास्ति घ पुस्तके ।

## दीधिति-प्रकाशः।

ननु साध्यवत् प्रतियोगिकान्योन्याभावासामानाधिकरण्यमित्येतस्य दोषेणेदमपि दुष्टमत आह "यत्रे"ति साध्यवदन्येत्यर्थः। तत्र तु यत्किञ्चित्साध्यवद्व्यक्तिभेदोऽपि साध्यवत्प्रतियोगिकान्योन्याभावो भवतीत्यव्याप्तिर्वह्निमान् धूमादित्यादावपीति भावः। "व्युत्पत्ती"ति अत्र च साध्यवच्छब्देन लक्षणया साध्यवत्त्वावच्छिन्नप्रतियोगिताकोऽभिधीयते, तस्य चान्यपदार्थैकदेशे भेदेऽभेदेनान्वयः। घटो नेत्यादौ च घट-तदभावयोर्घटत्वावच्छिन्नप्रतियोगिताकत्वं सम्बन्धः। न तु विशेषणीभूतघटत्वादेरभावेन समं तत्प्रतियोगितावच्छेदकत्वं सम्बन्धः। तथासत्यभावो घटीयोघट इत्याकारकतापत्तेः(१)। एवं घटत्वस्य इतरविशेषणतया पदार्थैकदेशतयाऽभावेऽन्वयासम्भवाच्चेति ध्येयम्। अत्र च घटत्वविशिष्टोपस्थापकपदसमभिव्याहृत-नञ्पदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटप्रकारकाभावशाब्द(२)बोधत्वं कार्य्यतावच्छेदकं, नीलसाकांक्षघटोपस्थापकपदसमभिव्याहृत-नञ्पदस्य नीलघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नीलघटप्रकारकाभावशाब्दत्वं तथा, नीलघटो नास्तीत्यादौ च घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयबोधाभावः तात्पर्य्याभावात्। विशेषणान्तरसाकांक्षत्वेनाज्ञातघटत्वादिविशिष्टोपस्थापकपदसमभिव्याहृत(३) नञ्पद-

(१) इत्याकारापत्तेः इति ग पुस्तके।

(२) शाब्द इति नास्ति च पुस्तके।

(३) व्याहृतेन इति च पुस्तके।

त्वादिना वा घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटप्रकारकबोधजनकत्वं (१) वाच्यम्। घटादन्य इत्यादौ च पञ्चम्या अवधित्वेऽवधिमत्त्वे वा शक्तिस्तत्र च घटत्वावच्छिन्न वृत्तित्वं घटत्वावच्छिन्ननिरूपितत्वं वा सम्बन्धः। एवं घटस्याभाव इत्यादौ च प्रतियोगित्वे अनुयोगित्वे वा षष्ठ्यर्थे (२) घटत्वावच्छिन्नवृत्तित्वादिकं संसर्गः। कम्बुग्रीवादिमान्नास्तीत्यादौ चायोग्यतानिर्णयशून्यानां भ्रमात्मकः शाब्दबोधः। घट-तदभावयोर्घटत्वावच्छिन्नप्रतियोगिताया एव सम्बन्धत्वेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वस्यासम्बन्धत्वात्। न चात्र भ्रमः कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वे तस्याप्रकारत्वात्, नापि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिता (३) सम्बन्धेन घटस्याभावे तादृशप्रतियोगिताया अलीकत्वादिति वाच्यं कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितानामेव (४) सम्बन्धतया भानात्। अभावस्य घटत्वावच्छिन्नप्रतियोगितयैव घटसम्बन्धितया कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितासम्बन्धेन घटासम्बन्धित्वेन तेन सम्बन्धेन घटप्रकारकत्वात् इति। भूतले घटपटौ नस्त इत्यत्र भूतलवृत्त्यभावे घटपटयोरुभयत्वावच्छिन्नप्रतियोगितासम्बन्धेनान्वय इति द्विवचनप्रयोगः साधुत्वार्थः (५)। दाराः सन्तीतिवत्। भूतलवृत्त्यभावस्य

(१) घटत्वावच्छिन्नप्रतियोगिताकत्व सम्बन्धबोधे जनकत्वं इति घ पुस्तके।

(२) षष्ठ्यर्थे इति नास्ति घ पुस्तके।

(३) ताकत्व इति ग पुस्तके।

(४) विषयकत्वितानां इत्यधिक पाठः ख पुस्तके।

(५) द्विवचनस्य प्रयोगस्साधुता मात्रं इति ख पुस्तके।

घटपटोभयत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटपटयो(१)रन्वयः । तथाच भूतलवृत्त्यभावीयौ घटपटौ स्त इत्यन्वय इति केचित् । भूतलाधेयत्वस्य सप्तम्यर्थस्याभावो घटपटोभयत्वसामानाधिकरण्येनेत्यपि कश्चित् । तस्य जातौ न सत्ता-द्रव्यत्वत्वे स्त इत्यत्र गत्यभावः । घटपटौ न स्त इत्यादौ च घटत्वं पटत्वमुभयत्वं च परस्परसामानाधिकरण्यापन्नं प्रतियोगितावच्छेदकं न तूभयत्वमात्रं केवलं घटत्वं पटत्वं वा । यत्किञ्चिदुभयवति केवलघटवति केवलपटवति वा घटपटौ न स्त इति प्रत्ययात् । तादृशप्रतियोगितावच्छेदकावच्छिन्नं च घटपटोभयमेवातस्तदुभयवत्येव, न तादृशप्रत्ययः । एवं दण्डी पुरुषो नास्तीत्यादावपि विशेषणविशेष्यभावापन्नं पुरुषत्वं दण्डो दण्डत्वं च प्रतियोगितावच्छेदकमूह्यम् । (२)

इति श्रीमद् भवानन्दीये तत्त्वचिन्तामणि दीधिति-प्रकाशे अनुमानखण्डे व्याप्तिपञ्चकप्रकरणं समाप्तम् ।

---

(१) घटपटोभयोः इति ग पुस्तके ।

(२) अवच्छेदकमित्यादिकमूह्यं इति ख पुस्तके ।

अथ व्याप्तिवादे सिंहव्याघ्रोक्तलक्षण-प्रकरणे

तत्त्वचिन्तामणिः।

नापि साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यवैयधिकरण्यानधिकरणत्वं वा, तदुभयमपि साध्यानधिकरणानधिकरणत्वं तच्च तत्र यत्किञ्चित् साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम्।

इति श्रीमद्गङ्गेशोपाध्यायकृते तत्त्वचिन्तामणौ अनुमानखण्डे सिंहव्याघ्रोक्तलक्षण-प्रकरणं समाप्तम्।

---

अथ सिंहव्याघ्रोक्तलक्षण-प्रकरणे दीधितिः।

"नापी"ति साध्यमसमानाधिकरणं यस्य यदधिकरणानधिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्य-प्रतियोगित्वं साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत्। तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात् तद्वृत्तौ नातिप्रसङ्गः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्व-व्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः, तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वं,

चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय-द्वयमेकीकृत्यानूद्य दूषयति "तदुभयमपी"ति । साध्ये-त्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावस्यार्थः ।

अथ सिंह-व्याघ्रोक्त-लक्षण-प्रकरणे दीधिति-प्रकाशः ।

लक्षणयोः पौनरुक्त्य(१)माशङ्क्याह "साध्य"मिति, असमानाधि-करण्यं तदनधिकरणाधिकरणत्वं, तदधिकरणानधिकरणत्वं वा, आद्ये सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः सत्तायां द्रव्यत्वानधि-करण-गुणाधिकरणत्वस्य सत्त्वादत आह "यदधिकरणे"ति, साध्यम-समानाधिकरणं यस्येत्यत्र समानाधिकरणभिन्नस्य साध्यस्य (२) यत्पदार्थ-सम्बन्धो लभ्यते, तच्च बाधितं अविवक्षितं चेत्यतो यदिति कश्चित् । अत्रापि यथाश्रुते(३) यत्त्व तत्त्वाननुगमा(४)दाह "साध्य-निष्ठे"ति, साध्य-निष्ठाभाव प्रतियोगि वृत्तित्व निरूपकाधिकरण-ता-प्रतियोगित्वं, साध्यनिष्ठाभावीयवृत्तित्वनिष्ठप्रतियोगितायां निरूपकतासम्बन्धेनावच्छेदकं यदधिकरणं तद्वृत्तित्वमिति यावत् । द्रव्यं सत्त्वादित्यत्र द्रव्यत्वे साध्ये गुणवृत्तित्वाभावस्य सत्त्वात् साध्यनिष्ठाभावीयवृत्तित्वनिष्ठप्रतियोगितायां निरूपकतासम्बन्ध-

(१) लक्षणपौनरुक्त्य इति ग पुस्तके ।

(२) भिन्नसाध्यस्य इति ख पुस्तके ।

(३) यथाश्रुते इति नास्ति ख ग पुस्तकयोः ।

(४) यत्पदतत्त्वयोरननुगमा इति ख घ पुस्तकयोः ।

नावच्छेदको गुणस्तद्वृत्तित्वस्य सत्तायां सत्त्वान्नातिव्याप्तिः। ननु वह्निमान् धूमादित्यादावप्ययोगोलकीय-वह्नौ पर्व्वतीय-वह्नौ वा महानस-वृत्तित्वाभाव-सत्त्वात् तादृश-साध्यनिष्ठाभाव-प्रतियोगि-वृत्तित्व-निरूपकमधिकरणं महानसं(१) तद्वृत्तित्वस्य धूमे सत्त्वादव्याप्तिः। किञ्च साध्यनिष्ठासामानाधिकरण्यमित्यत्र (२) वृत्तित्वं साध्यतावच्छेदकसम्बन्धेन बोध्यं,(३) अन्यथा सुखवान् आत्म-महाकालान्यतरत्वादित्यत्रातिव्याप्तिः (४)। तथाच संयोगसम्बन्धेन (५) द्रव्यसामान्यस्य साध्यतायां समवायेन हेतौ द्रव्यत्वेऽव्याप्तिः। तत्र संयोगेन गुण-वृत्तित्वस्याप्रसिद्धतया साध्यनिष्ठासामानाधिकरण्य-प्रतियोगित्वस्य गुणत्वादावप्रसिद्धेरत आह "साध्यनिष्ठाधेयत्व"-मिति। साध्यनिष्ठाधेयत्वं साध्यतावच्छेदक सम्बन्धेन वाच्यं, तेन सुखवान् आत्ममहाकालान्यतरत्वादित्यादौ सम्बन्धसामान्येन सुखनिष्ठाधेयत्वानिरूपकाधिकरण-गगनादावृत्तौ नातिव्याप्तिः। समवायेन वह्निनिष्ठाधेयत्वानिरूपकाधिकरण-पर्व्वतादि-वृत्तौ धूमे नाव्याप्ति र्वा। वृत्तित्वमपि हेतुतावच्छेदकसम्बन्धेन बोध्यं, तेन संयोगेन वह्निनिष्ठाधेयत्वानिरूपकधूमावयव-समवेते धूमे नाव्याप्तिः। नन्वेवं सत्तावान् द्रव्यत्वादित्यत्र सत्तादौ साध्ये(६) समवायेन द्रव्य-

---

(१) महानसमेव इति घ पुस्तके।

(२) करण्येत्यत्र इति ख घ पुस्तकयोः।

(३) वाच्यं इति ख पुस्तके।

(४) दित्यादावतिव्याप्तिः इति घ पुस्तके।

(५) सम्बन्धेन इति नास्ति. संयोगेनेत्येव पाठः ग पुस्तके।

(६) सत्तादौ साध्ये इति नास्ति ख पुस्तके।

त्वहेतौ (१) द्रव्यं घटादित्यत्र द्रव्यत्वादौ साध्ये (२) संयोगेन हेतौ घटे चाव्याप्तिः। समवायेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ गुणादौ च हेतुतावच्छेदकसम्बन्धेन समवायेन संयोगेन वा हेतोरप्रसिद्धेरत आह "साध्यनिष्ठे"ति। अत्र च व्यापकता हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणतात्वावच्छिन्नाभावत्वेन बोध्या। तेन वह्न्यधिकरणतात्वावच्छिन्नाभावस्य प्रमेयत्वादिना-साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्व-व्यापकत्वेऽपि नातिव्याप्तिः। आर्द्रेन्धन-प्रभव-वह्न्यधिकरणत्वाभावस्य तादृशाधिकरणत्व-व्यापकत्वादाह "सामान्यकत्वमि"ति, वह्न्यधिकरणता-सामान्यान्तर्गतस्या(३)योगोलकीय-वह्न्यधिकरणतासामान्यस्य (४) तादृश-प्रतियोगित्वाभावान्नातिव्याप्तिरिति। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्व-व्यापकतावच्छेदक—हेतुतावच्छेदकसम्बन्धनिरूपित हेतुतावच्छेदकावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्वकत्वमिति तु निष्कर्षः, तेन व्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य वह्न्यधिकरणत्वाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्व-व्यापकत्वेऽपि नातिव्याप्तिः (५)। अत्र व्यापकतायां प्रतियोगि-व्यधिकरणत्वं न निविष्टं, (६) तेन संयोगेन वह्न्यधिकरणत्व-

(१) हेतौ द्रव्यत्वे इति ख पुस्तके।

(२) द्रव्यत्वादौ साध्ये इति नास्ति ख पुस्तके।

(३) अन्तर्गत इति नास्ति ग पुस्तके।

(४) सामान्यस्येत्यत्र साधारण्यस्य इति घ पुस्तके।

(५) न व्याप्तिरिति ख पुस्तके।

(६) प्रयोजनाभावादिति शेषः।

स्याप्यव्याप्यवृत्तितया तदभावस्य केवलान्वयित्वेऽपि नातिव्याप्तिः। "अनतिप्रयोजनकतये"ति, हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणत्वाभावस्य घटकत्वे हेतुतावच्छेदकावच्छिन्नाभावस्यानिवेशात्; यथा सन्निवेशे अवैयर्थ्येऽपि अनतिप्रयोजनकत्वादित्यर्थः*। "साध्य"मिति साध्यमधिकरणानधिकरणं यस्य(१) तत् साध्याधिकरणानधिकरणं तद्भावः साध्याधिकरणानधिकरणत्वं(२) तदभावः, चरम-नञर्थस्य (३) तद्भिनान्तार्थः प्रतियोगी व्युत्पत्ति-वैचित्र्यात् (४) नञ् व्यत्यासाद्वा (५)। द्वितीयेऽपि स एव प्रतियोगी। † वस्तुतस्तु

---

* ननु वह्निमान् गगनादित्यादावतिव्याप्तिस्तत्र वह्निनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकीभूतस्य गगनाभावस्य प्रतियोगिताया गगने सत्त्वात्। अधिकरणत्वप्रवेशे तु तादृशव्यापकीभूताभावप्रतियोगिनो गगनस्याधिकरणत्वस्याप्रसिद्धत्वात् नातिव्याप्तिरिति चेत्तत्र व्याप्तिरिष्टैव, तादृश भ्रमात्मकव्याप्यवत्ताज्ञानादेवानुमिति निर्वाह इति तु तत्त्वमिति।

(१) अधिकरणमनधिकरणं यस्य (साध्यस्य) तत् अधिकरणानधिकरणं, ततः साध्यपदेन सह समास इति भावः।

(२) साध्यमनधिकरणाधिकरणं यस्य तत् साध्यानधिकरणाधिकरणं तद्भावः साध्यानधिकरणाधिकरणत्वं इति ख घ पुस्तकयोः।

(३) पश्चात्समस्यमान-नञर्थस्य इत्यर्थः।

(४) यत्पूर्वं नञः श्रवणं तदर्थस्यैवाभावो नञा प्रत्याय्यते इति हि व्युत्पत्तिः तथाच साध्याधिकरणानधिकरणत्वपदात् पूर्वं नञोऽश्रवणेन तेन तदर्थबोधासम्भव इत्यत आह व्युत्पत्तिवैचित्र्यादिति।

(५) साध्यपदात् पूर्वं इति शेष इति भावः।

† ननु समस्यमान पूर्वनिपातितस्यैव नञः साधुत्वेनात्र मध्य-निवेशो न युक्तः, कृताध्येनाहयरोत्यदर्शनादिति चेन्न समर्थान्वितार्थबोधकोत्तरपदघटितसमुदायेन समं नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुत्वादिति भावः।

घटानधिकरणं भूतलमित्यादौ भूतले घटाधिकरणत्वावच्छिन्न-भेदः प्रकारतया भासते, तत्र चानधिकरणेत्यत्राधिकरणपदं घटपद-समभिव्याहार बलाल्लक्षणया घटाधिकरणोपस्थापकं, घट-पदं तात्पर्य्यग्राहकमात्रं, अन्यथा घटपदेन सममनधिकरणपदस्य षष्ठी-तत्पुरुषसमासे घटसम्बन्ध्यनधिकरणमित्यर्थः स्यात्तथाच बाधः, अधिकरणत्वावच्छिन्न-भेदस्य भूतले अभावात्। अन्वयि-तावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्ति-बल-लभ्यतया-ऽनधिकरण-पदेन घटाधिकरणत्वावच्छिन्न-भेदस्य प्रत्याययितुम-शक्यत्वात्, एवं प्रतियोग्यनधिकरणेत्यादौ। प्रकृतेऽप्येव रीति(१)रनुसरणीया (२)।

दीधितिः।

तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपका-धिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्य-व्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिक-रणव्यक्त्यन्तरस्येत्यव्याप्तिः, क्वचिद्व्यभिचारिण्यतिप्रसङ्ग-श्चाद्ये।

दीधिति-प्रकाशः।

साध्यनिष्ठाधेयत्वानिरूपकत्वं हि साध्यनिष्ठाधेयत्व निरूप-कत्व सामान्याभावो, यत्किञ्चित् साध्यनिष्ठाधेयत्वानिरूपकत्वं वा।

(१) प्रकृतेऽप्येवमेवप्रकार इति घ पुस्तके।

(२) अनुसन्धेया इति ग पुस्तके।

आद्ये "केवलान्वयिनी"ति, केवलान्वयिसाध्यक इत्यर्थः। अव्याप्तेर्ह्रेतुं पूरयति "साध्यनिष्ठे"ति। द्वितीये "नाने"ति, (१) वह्निमान् धूमादित्यादौ। आद्ये दोषान्तरमाह "क्वचि"दिति, गुणान्यत्व-विशिष्टसत्तावान् जातेरित्यादौ सत्तारूपसाध्यनिष्ठाधेयत्वानिरूपकत्वस्य जात्यादौ सत्त्वेन तत्र जात्यधिकरणत्वाभावस्य सत्त्वादिति भावः।

---

दीधितिः।

द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि, यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्व्वत्राव्याप्तिः। केचित्तु साध्यासमानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणाभिन्नत्वमर्थस्तेन धूमस्य स्वावयवे संयोगेन, वह्निमति च समवायेनावृत्तावपि न क्षतिः। तादृशाभावस्य सम्बन्धान्तरेण तत्रैव वर्त्तमाने सुलभः। व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि

---

(१) नानाव्यक्त्यधिकरणकसाध्ये इत्यर्थः। अन्यथा अयमेतद्वृत्ति-यावद्धर्म्मवान् एतत्त्वादित्यत्र नानाव्यक्तेः साध्यत्वेऽपि नाव्याप्तिः सम्भवतीति ध्येयम्।

तादृशाभाववत्त्वं, सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात्, न चैवं गुणकर्म्मान्यत्व(१)विशिष्ट-सत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात् । अनतिरिक्तत्वे तु विशेषण-विशेष्य-सम्बन्धस्यैव परम्परया व्याप्तत्वात् । केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुस्तच्चिन्त्यम् ।

---

दीधिति-प्रकाशः ।

"तदा केवलान्वयिनी"ति, यद्यपि सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिस्तथापि साध्यवद्भिन्ने यदधिकरणत्वाभाव इत्युक्तौ तदव्याप्तिवारणं सम्भवतीति तन्नोक्तम् । "नानाधिकरणे"ति(२) एतद्रूपवान् एतद्रसादित्यादौ द्वित्वावच्छिन्नसाध्यवद्भेदस्य साध्यवति सम्भवेऽपि प्रतियोग्यवृत्तित्वस्य भेद-विशेषणत्वेन नाव्याप्तिः सम्भवतीति नानाधिकरणेत्युक्तम् । "सर्व्वत्र" अन्वयिनि व्यतिरेकिणि च । "हेतुतावच्छेदके"ति हेत्वधिकरण इति सप्तमी अवच्छेदकतायाम् । हेत्वधिकरणावच्छेदेनेत्यर्थः । "तेनैव" हेतुतावच्छेदकसम्बन्धेनैव ; आद्य-दल-व्यावृत्तिमाह—"संयोगेने"ति अवृत्तावपीत्यनेनान्वयः । वह्निमतीत्यत्रापि संयोगेनेत्यनुषज्यते । तत्प्रयोजनं च समवायेन

---

(१) गुणकर्म्मान्यत्व इति पाठोन प्रकाशकृत् सम्मतः । तन्मते विशिष्टसत्त्वेऽव्याप्तिरिति पाठः ।

(२) अयमेतद्वृत्ति यावद्धर्म्मवान् एतत्त्वादित्यत्र दोषाभावात्तन्नानाव्यक्तिसाध्यकेत्यपहाय नानाधिकरणकेत्युक्तम् ।

वह्नेः साध्यतायां संयोगेन हेतौ धूमादावतिव्याप्ति-वारणं, "सम्बन्धान्तरेणे"ति, न चाकाशादावेव तस्य प्रसिद्धिरिति सम्बन्धभेदेन वर्त्तमानता(१)पर्य्यन्तानुधावनं व्यर्थमिति वाच्यम् आकाशादेरवृत्तित्वेन तद्वृत्तिसाध्यवद्वृत्तित्वाभावे हेत्वधिकरणावच्छिन्नत्वा(२)सम्भवात्। यद्यपि पर्व्वतीयरूपादावपि वह्निमत्-संयुक्तत्वाभावस्य न पर्व्वतादि-देशावच्छिन्नत्वं रूपादेः कुत्रापि(३) संयोगाभावेन स्वरूपेणैव तथात्व-सम्भवात्। गुणकिरणावल्यां स्वयमेव व्याप्यवृत्तेरवच्छेदकनिरासाच्च। तथापि पर्व्वते रूपे न वह्निमत्संयुक्तत्वमिति प्रतीतिबलात् विलक्षणमेवावच्छेदकत्वं पर्व्वतादेः स्वीकार्य्यमिति भावः। न च धूमवत्कपाल(४)समवेत-घटस्य वह्निमत्पर्व्वते संयोगेन वृत्तित्वात् हेत्वधिकरण-कपालावच्छेदेन तद्वृत्तित्वाभावस्याव्याप्यवृत्तित्वात् व्याप्यवृत्तेरवच्छेदकास्वीकारेऽपि न क्षतिरिति वाच्यम् एतद्रूपवान् एतद्रसादित्यादौ एतद्रसाधिकरणावच्छेदेनैतद्रूपवत्समवेतत्वाभावस्य एतद्रूपवदसमवेत एव सम्भवेनाव्याप्यवृत्तित्वासम्भवादिति। (ननु द्रव्यं सत्त्वादित्यादौ हेत्वधिकरणे द्रव्ये द्रव्यत्ववद्वृत्तित्वाभावस्य सत्तादावसत्त्वेन तत्र तद्वृत्तित्वाभावाधिकरणाभिन्नत्वसत्त्वादत आह "व्यभिचारिणस्त्वि"ति,) (५) "तादृशि" हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे, "तादृशाभाववत्त्वं" हेतुतावच्छेदक-

---

(१) ता इति नास्ति ख पुस्तके।

(२) वच्छिन्नवृत्तित्वा इति ख पुस्तके।

(३) कुत्रापि इति नास्ति ख पुस्तके।

(४) कपाले इति ग पुस्तके।

(५) ( ) एतच्चिह्नमध्यस्थपाठो नास्ति ख पुस्तके।

सम्बन्धेन साध्यवद्वृत्तित्वाभाववत्त्वम् । ननु साध्यवद्वृत्तित्ववति (१) व्यभिचारिणि कथं तदभाव इत्यतः प्रतीतिं प्रमाणयति, "सत्ताया"-मिति । "एवं"सत्तायां द्रव्यत्ववद्वृत्तित्वाभावे "विशिष्टसत्त्वे" गुण-कर्म्मान्यत्वविशिष्टसत्त्वे "अतिरिक्तत्वा"दिति, यद्यपि हेतुतावच्छेद-कावच्छिन्नहेत्वधिकरण इति विवक्षाया आवश्यकत्वादेवाव्याप्ति-निरासे विशिष्टस्यातिरिक्तत्वानुधावनमफलम्, अन्यथा इदं स्पर्शवत् भूतत्वमूर्त्तत्वोभयस्मात् इत्यादावव्याप्तेः (२) केवलहेत्वधिकरस्या-काशादेर्भूतत्वादिनिष्ठस्पर्शवद्वृत्तित्वाभावावच्छेदकत्वात् तथापि सार्व्वभौमेन विशिष्टनिरूपिताया अधिकरणताया अतिरिक्तत्वा-नभ्युपगमेन (३) गुणादेरपि विशिष्टसत्त्वाधिकरणत्वमित्यभि-प्रायेण विशिष्टस्यातिरिक्तत्वाभ्युपगमेनैव सर्व्वसामञ्जस्यमिति कुत-स्तथा विवक्षणीयमित्यभिप्रायेणैव तथाभिधानात् । न चोक्त-भूतत्वमूर्त्तत्वोभयाव्याप्तिः उभयत्वादेरपि एकविशिष्टापरत्वरूपत्वे-नाकाशादिवृत्तिभूतत्वादेरुभयान्यत्वादिति । विशिष्टस्यातिरिक्तत्वं इति सार्व्वभौम-मतं न तु प्रकारान्तरेणाव्याप्ति-निरास एव न सम्भवतीति तथोक्तमिति कश्चित् । "द्वितीयलक्षणे"ति, तत्र वैय-धिकरण्यपदार्थ-मध्ये साध्यवद्भेदस्य (४) घटकत्वात्तदप्रसिद्ध्यैवा-व्याप्तिरिति भावः (५) ।

(१) साध्यवद्वृत्तित्वं साध्यवद्वृत्तित्ववति सम्बन्धेऽप्येव इति घ पुस्तके ।

(२) अव्याप्त्यापत्तेरिति घ पुस्तके ।

(३) अतिरिक्ताया अनभ्युपगमेन इति ग पुस्तके ।

(४) साध्यवदन्यत्वस्य इति घ पुस्तके ।

(५) तदप्रसिद्धानाव्याप्तेरितिभाव इति ख पुस्तके ।

दीधितिः ।

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसमानाधिकरण्यमिति-प्रतीतिवत् सत्तानिष्ठद्रव्यत्वसमानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन समानाधिकरण्यस्य वा अभावं गुणोऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावं, सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्व्वजनसिद्धप्रतीति—बाधितत्वात् । बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र-प्रतीत्या तदुभयोरेकत्र सिद्धिः ।

दीधिति-प्रकाशः ।

"द्रव्यत्वे गुण" इति, द्रव्यत्वस्य गुणावृत्तित्वेन गुणावच्छेदेन तादृशवृत्तित्वाभावस्याभावात्(१)तादृशसामानाधिकरण्यावच्छेदकत्वाभावस्यैव विषयत्वादिति । ननु तादृशप्रतीत्या समानाधिकरण्यस्यैव प्रतियोगित्वं विषयीक्रियते न तु (२) तदवच्छेदकत्वस्येत्यत आह "परम्परासम्बन्धेने"ति, स्वनिरूपक (३) यावदाश्रयत्वरूपत्वावच्छेदकत्वसम्बन्धेन द्रव्यत्व-सामानाधिकरण्यं द्रव्ये वर्त्तते ; न तु

(१) त्वाभावाच्च इति ग घ पुस्तकयोः ।

(२) तु इति नास्ति ग पुस्तके ।

(३) स्वनिरूपित इति घ पुस्तके ।

गुण इति, गुणे (१) तादृशसम्बन्धेन तदभाववत्त्वमिति भावः । ननु द्रव्यवृत्तित्वाभावाभावो द्रव्यवृत्तित्वं "सत्ता न द्रव्यवृत्तित्वाभाववती"ति प्रत्ययस्य (२) विषयः, तत्राव्याप्यवृत्त्येवेति कुतो विरोधः द्रव्यवृत्तित्वाभाववद्भेदप्रत्ययस्त्वसिद्ध एवेत्यत आह "द्रव्यवृत्तित्वाभाव" इति, न च द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीत्या द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वाभावो विषयी क्रियते, तस्य गुणावच्छेदेनैव सत्तावृत्तितया द्रव्यावच्छेदेन सत्तावृत्तित्वाभावो न विरुध्यते इति वाच्यं विरुद्धस्वभावयोर्भावाभावयोरेकत्र प्रतीतिरवच्छेदकभेदमादायैव सम्भवात् । प्रकृते च गुणद्रव्यादिरूपावच्छेदकाप्रतीतावपि द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रत्ययादिति । नन्वेवं संयोगाभावोऽपि अव्याप्यवृत्तिर्न स्यात् मूले न संयोग इति प्रतीतै मूले संयोगावच्छेदकत्वाभावस्यैव विषयत्वमित्यस्यापि सुवचत्वादत आह "बाधकाभावात्त्वि"ति, तत्र संयोगाभावो न द्रव्य (३) वृत्तिरित्यप्रत्ययादिति भावः ।

---

दीधितिः ।

अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च, तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः, न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्-

---

(१) गुणे इति नास्ति ग पुस्तके ।

(२) प्रत्ययस्यैव इति च पुस्तके ।

(३ द्रव्य इत्यत्र इत्य इति पाठः ग पुस्तके ।

वृत्तिभिन्नत्वस्य उपाधित्वात्। किञ्च इदमिदानीमिति प्रतीति-नियामक-विशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः।

इति श्रीमद् रघुनाथशिरोमणिकृतायां दीधितौ अनुमानखण्डे सिंहव्याघ्रोक्त-लक्षण-प्रकरणं समाप्तम्।

---

दीधिति-प्रकाशः।

ननु द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रत्ययो विवादग्रस्त इत्यत आह "अतीन्द्रिये"ति, अन्यतरस्येन्द्रियग्रहतायां कदाचित् साध्यवद्वृत्तित्वाभावस्य हेतुवृत्तित्वाभावस्य वा प्रत्यक्ष-सम्भव इत्युभयोरती(१)न्द्रियत्वोपादानम्। इदं गुरुत्ववदाकाशाभावादित्यत्रेत्यर्थः। ननु तत्र प्रत्यक्षस्यासम्भवेऽपि आकाशाभावो गुरुत्ववद्वृत्तित्वाभाववान् गुरुत्वाभाववद्वृत्तित्वात् रूपाभाववदित्यनुमानं सम्भवतीत्यत आह "न चे"ति, "तत्र" अतीन्द्रिये व्यभिचारिणि "तत्" तद्वद्वृत्तित्वं (२) "तद्व" दिति, गुरुत्ववद्वृत्तिभिन्नत्वस्याव्याप्यवृत्तित्वाभावात् आकाशाभावादौ साधनाव्यापकत्वं रूपाभावादौ

---

(१) उभयत्रातौ इति ख पुस्तके।

(२) तद्वद्वृत्तित्वाभावत्वं इति ग पुस्तके।

च साध्यव्यापकत्वमिति भावः। नन्वेवमतीन्द्रिय-संयोगस्या-व्याप्यवृत्तित्वानुपपत्तिः। तथा प्रत्ययाभावादनुमानस्य चाप्रयो-जकत्वात्। किञ्चातीन्द्रियसाध्यके व्यभिचारनिर्णय एव कुतोऽनु-मानादिति यदि, तदा तत एव तद्वृत्तित्वाभावोऽप्यनुमीयताम् अप्रयोजकत्व-शङ्काया उभयत्र तुल्यत्वादित्यत आह "किञ्चे"ति, "इद"मित्यादि कालिकसम्बन्धेनेत्यर्थः। कालो घटवान् पटादि-त्यत्र कालिकसम्बन्धेन पटाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्याभाववतोऽप्रसिद्धेः सम्बन्धान्तरेण कालवृत्तेरपि कालिकसम्बन्धेनापि तद्वृत्तित्वात्। अवृत्तावभावस्य च निरव-च्छिन्नत्वात् (१) इति भावः। एतेन महाकालस्यापि तादा-त्म्येन स्व-सम्बन्धितया तत्रैव साध्यवद्वृत्तित्वाभावस्य (२) प्रसिद्धि-रिति परास्तं। तदात्म्यसम्बन्धस्यावच्छेदकत्वानियामकत्वाच्च। अत्र केचित् (३) साध्यवद्वृत्तित्वाभावे यद्धेत्वधिकरणावच्छिन्नत्व-यद्धेतु-वृत्तित्वोभयाभावस्तत्त्वं विवक्षणीयम्। तेन कालिकसम्बन्धेन हेतु-तायामवृत्तिनिष्ठसाध्यवद्वृत्तित्वाभावे हेत्वधिकरणकालावच्छिन्न-त्व-हेतुवृत्तित्वोभयाभावसत्त्वान्नाव्याप्तिः। व्यभिचारिणि व्यभि-चारनिरूपकहेत्वधिकरणावच्छिन्नत्वहेतुवृत्तित्वोभयस्य, तादृग-वृत्तित्वाभावे सत्त्वान्नातिव्याप्तिरित्याहुः। तन्न वह्निमान् धूमा-दित्यत्र स्वावयवावच्छेदेन धूमवृत्तिसाध्यवद्वृत्तित्वाभावस्यैव

(१) चानवच्छिन्नत्वात् इति ग घ पुस्तकयोः।

(२) वृत्तित्वाभाववत्त्व इति ग पुस्तके।

(३) केचित्तु इति ग पुस्तके।

रूपादि-निष्ठस्य हेत्वधिकरणावच्छिन्नत्वेनाव्याप्तेरिति, हेत्वधिकरणावच्छिन्नत्वस्याव्याप्यवृत्तित्वेन तदभावोपपादने व्यभिचारिण्यतिप्रसङ्गादिति (१)।

अपरे तु स्वनिष्ठसाध्यवद्वृत्तित्वाभावा(२)नवच्छेदकहेतुतावच्छेदकसम्बन्धीयहेत्वधिकरणकत्वविवक्षया न दोषः। न च वह्निमान् धूमादित्यत्र स्वनिष्ठं यत्सामानाधिकरण्यं रूपादिनिष्ठस्यैव तदभावस्य पर्व्वतादेरवच्छेदकत्वादव्याप्तिरिति वाच्यम्। स्वनिष्ठो यः साध्य (३) सामानाधिकरण्याभावः तदनवच्छेदकत्वस्योक्तत्वात्। यद्यपि धूमवृत्ति-तदभावस्यापि रूपादि-निष्ठतदभावाभिन्नस्यावच्छेदकमेव हेत्वधिकरणं पर्व्वतादि, तथापि तदभावस्य रूपादि-वृत्तित्व एवावच्छेदकं पर्व्वतादि न तु धूमादिवृत्तित्व इति नोक्तदोषः। न च पर्व्वतीयधूमस्यापि कालिकसम्बन्धेन महानस-वृत्तितया महानसे पर्व्वतीयधूमे न वह्निमद्वृत्तित्वमिति प्रत्ययात् हेतुवृत्ति-तदभावस्यावच्छेदकमेव महानसादिकं हेत्वधिकरणमित्यव्याप्तिरिति वाच्यं स्ववृत्ति-तदभावानवच्छेदकस्याधिकरणकत्वस्य विवक्षितत्वात्। प्रकृते च पर्व्वतीयधूमवृत्ति-तदभावस्यानवच्छेदकमेव हेतुतावच्छेदकसम्बन्धेन पर्व्वतीय-धूमाधिकरणं पर्व्वतादिकमित्याहुः।

---

(१) इति इति नास्ति ख पुस्तके।

(२) साध्यासमानाधिकरण्या इति ग पुस्तके।

(३) साध्य इति नास्ति ख पुस्तके।

अत्रायमनुपपत्ता: । इदं पार्थिवपरमाणुत्वाभाववत्परमाणुत्वाभावादित्यादावव्याप्ति: अत्र परमाणुत्वाभावस्य कालिकादिसम्बन्धेनाधिकरणे कालादौ तस्य दैशिकसम्बन्धेनापि वृत्तित्वेन तादृशसाध्यवद्वृत्तित्वाभावस्य हेतुवृत्तित्वाभावात्, परमाणौ च कालिकसम्बन्धेनापि तस्यावृत्ते:, परमाणो: कालोपाधित्वाभावात् । न च मूर्त्तमात्रस्य दिगुपाधित्वात् परमाणोर्दिगुपाधितया परमाणुत्वाभावाधिकरणत्वात् तदवच्छेदेन परमाणुत्वाभावे पार्थिवपरमाणुत्वाभाववद्वृत्तित्वाभाव: प्रसिद्ध एवेति वाच्यं कालिकसम्बन्धवद्दैशिकसम्बन्धस्यातिरिक्तस्याभावात्, कमानामेव संयोगादीनामिहेति प्रत्यय-प्रमाणकत्वात् (१) परमाणौ च परमाणुत्वाभावस्य कमसम्बन्धानामभावात् । यदि च कालिकसम्बन्धवत् दैशिकसम्बन्धोऽप्यतिरिक्तोऽभ्युपेयते तदापि यस्य यत्र तथा प्रतीतिस्तत्रैव तस्य तादृश: सम्बन्ध: कल्प्यते, न चेह परमाणौ परमाणुत्वाभाव इति प्रतीतिरस्ति । यदि च घटे घटत्वाभाव इति प्रतीत्यभावेऽपि इदानीं घटत्वाभाव इति प्रतीत्या यथा घटे घटत्वाभावो विषयीक्रियते तथा परमाणौ परमाणुत्वाभाव इति प्रतीत्यभावेऽपि इह परमाणुत्वाभाव इति प्रतीत्या परमाणावपि दैशिक-विलक्षण-सम्बन्धेन परमाणुत्वाभावो विषयीक्रियत इत्युपेयते (२) तथापि आकाशत्वाभाववत् आत्माकाशान्यतरत्वाभावादित्यादावव्याप्तिर्दुष्परिहरैव ।

---

(१) प्रत्ययनिबन्धनत्वात् इति ग पुस्तके ।

(२) इत्युच्यते इति ग पुस्तके ।

आकाशस्याजन्यत्वेनामूर्त्तत्वेन च केनापि सम्बन्धेन हेतोरनधिकरणत्वादित्याहुः ।

परे तु, हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तिर्यः साध्यवद्वृत्तित्वाभावः तदनवच्छेदकत्वं हेत्वधिकरणस्य वाच्यं, तेन पार्थिव परमाणुत्वाभाववत्परमाणुत्वाभावादित्यादौ पार्थिवपरमाणुवृत्तौ तादृश-घटत्वाभावे वर्त्तमानस्य पार्थिवपरमाणुत्वाभाववद्वृत्तित्वाभावस्यानवच्छेदकमेव परमाणुत्वाभावरूपहेत्वधिकरणमिति न कोपि दोषः । एवमाकाशत्वाभाववत् आत्माकाशान्यतरत्वाभावा-(१)दित्यादावपि । न चोक्त-क्रमेण धूमादावव्याप्तिर्हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तिर्यस्तदभावस्तदनवच्छेदकं हेतुतावच्छेदकसंम्बन्धेन तस्य (२) हेतोश्चाधिकरणम् इति विवक्षितत्वात् । भवति हि महानसावच्छेदेन पर्व्वतीयधूमे यस्तदभावस्तदनवच्छेदकं पर्व्वतीयधूमाधिकरणम् । एवं तादृशघटत्वाभावाधिकरणस्य हेतुभूतपरमाणुत्वाभावाधिकरणस्य च पटादेः पार्थिवपरमाणुत्वाभाववद्वृत्तित्वाभावानवच्छेदकत्वान्न तत्राव्याप्तिरिति । यद्वा स्वाधिकरणावच्छिन्न स्ववृत्त्यभावत्वावच्छेदेन साध्यवद्वृत्तित्वप्रतियोगिताकत्वाभाववत्त्वं, स्वाधिकरणावच्छिन्नस्ववृत्त्यभावप्रतियोगितानवच्छेदकसाध्यवद्वृत्तित्वत्वकत्वं (३) वा

(१) आत्माकाशान्यतरत्वाभावात् इति नास्ति ग पुस्तके ।

(२) तस्य वृत्तिमत इत्यर्थः ।

(३) स्वाधिकरणावच्छिन्न-स्ववृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यवद्वृत्तित्वत्वं इति ग पुस्तके ।

विवक्षितम् । परमाणुत्वाभावादौ च स्वाधिकरणीभूतघटाद्यव-
च्छिन्न-स्ववृत्ति-(१) घटवृत्तित्वाभावे पार्थिव-परमाणुत्वाभाववद्वृत्ति-
त्वत्वावच्छिन्न-प्रतियोगिकत्वाभावात् नाव्याप्तिः । व्यभिचारि
वृत्त्यभावान्तरस्य साध्यवद्वृत्तित्व-प्रतियोगिकत्वाभावात् अवच्छेदे-
नेति । यद्यपि उत्पत्ति-कालावच्छेदेन पर्व्वते वह्निमद्वृत्ति-
त्वाभावोऽधूमेऽप्यस्ति, पर्व्वते उत्पत्ति काले धूमे न वह्निमत्संयुक्त-
त्वम् (२) इत्यनुभवात्, तथापि हेत्वधिकरण मात्रावच्छिन्न-हेतु-
वृत्त्यभाव इति विवक्षणीयम् । प्रकृते तु वह्निमद्वृत्तित्वाभावे (३)
उत्पत्ति कालस्याप्यवच्छेदकत्वात् नाव्याप्तिः ।

यत्तु उत्पत्ति-कालावच्छेदेन धूमस्य पर्व्वतेऽवृत्तित्वात्
तत्कालावच्छेदेन तत्र साध्यवद्वृत्तित्वाभाव इति तत्र घटो गन्ध-
वान् पृथिवीत्वादित्यादौ उत्पत्ति कालावच्छेदेन घट वृत्तौ पृथि-
वीत्वे तदवच्छेदेन गन्धवद्वृत्तित्वस्यासम्भवादव्याप्तिः, तस्मात् यथोक्त-
मेव सम्यक् ।

परे तु पर्व्वते कपे वह्निमत्संयुक्तत्वं नास्तीति प्रतीति बलात्
पर्व्वतादेरवच्छेदकत्वं विषयीक्रियते, तत्र पर्व्वत-कपयोरपि समवायः
सम्बन्ध-विधयाऽवच्छेदकः, अन्यथा पर्व्वतावृत्ति पदार्थेऽपि वह्नि-
मद्वृत्तित्वाभावे पर्व्वतस्यावच्छेदकत्वापत्तिः । अतएवोक्तं सम्ब-
न्धान्तरेण वर्त्तमाने सुलभ इति । तथाच हेतुतावच्छेदक सम्बन्धेन

(१) स्ववृत्ति इति नास्ति ग पुस्तके ।
(२) वह्निमद्वृत्तित्वमिति ग पुस्तके ।
(३) वह्निमद्वृत्तित्वाभावे इति नास्ति ग घ पुस्तकयोः ।

यद्धेत्वधिकरण-निष्ठहेतुतावच्छेदक-सम्बन्धे साध्यवद्वृत्तित्वाभावाव-च्छेदकत्वाभावस्तद्धेतुत्वमुक्त-लक्षणार्थः। महानसे पर्व्वतीय-धूमे वह्निमद्वृत्तित्वं नास्तीति प्रतीति-बलात् पर्व्वतीय-धूमे वह्निमत्सं-युक्तत्वाभावे यन्महानसस्यावच्छेदकत्वं तत्र महानस-पर्व्वतीय-धूमयोः कालिक-सम्बन्ध एव सम्बन्ध-विधयाऽवच्छेदकत्वं न तु संयोग इति नाव्याप्तिः। व्यभिचारिणि तु व्यभिचार-निरूपकाधि-करण-सम्बन्धस्यैव तादृशस्य साध्यवद्वृत्तित्वाभावावच्छेदकत्वान्नाति-व्याप्तिः। शेषं दर्शित-दिशावसेयम् इत्याहुः (१)।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे अनु-मानखण्डे सिंह-व्याघ्रोक्त-लक्षण-प्रकरणं समाप्तम्।

---

(१) प्राहुरिति घ पुस्तके।

# अथ व्याप्तिवादे व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रकरणे तत्त्वचिन्तामणिः।

अथेदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावो घट एव प्रसिद्धः। व्यधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताकाभावस्य * केवलान्वयित्वात्। न चैवं घट एव व्यभिचारः साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः, न च वाच्यत्वाभावस्तादृशो घट इति चेत् तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिस्तथा चाप्रसिद्धिः। प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदकः, तद्विशिष्टज्ञानस्याभाव-धी-हेतुत्वात्, अन्यथा निर्व्विकल्पादपि घटो नास्तीति प्रतीत्यापत्तेः। गवि शश शृङ्गं नास्तीति

---

* व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वञ्च अवच्छेदकतावदनुयोगितावत्त्वम्, अनुयोगितायामवच्छेदकतावत्त्वञ्च स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, स्वनिष्ठावच्छेदकत्वञ्च स्वनिरूपितप्रतियोगितानिरूपकत्व-स्वाश्रयवृत्तिप्रतियोगितानिरूपकत्वोभयसम्बन्धेन, स्वाश्रयवत्त्वं स्वावच्छेदकसम्बन्धेन। यद्वा अवच्छेदकताविशिष्टान्यानुयोगितावत्त्वमेव तत्त्वं, वैशिष्ट्यं निरूपकत्वोभयसम्बन्धेन। केचित्तु अवच्छेदकताविशिष्टान्यप्रतियोगिताकत्वमेव तत्त्वं, वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वाश्रयवृत्तित्वोभयसम्बन्धेनेति प्राहुः।

प्रतीतेरसिद्धेः, शश-शृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः ।

इति श्रीमद्गङ्गेशोपाध्याय-कृते तत्त्वचिन्तामणौ अनुमानखण्डे व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रकरणं समाप्तम् ।

---

अथ व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रकरणे दीधितिः ।

"समवायितये"ति, वाच्यत्वं यथा न समवायि तथा वक्ष्यते । घटादि-समवायितयेत्यर्थ इत्यप्याहुः । प्रमेय-साध्यके च भावत्वेनाभावानां अभावत्वेन भावानां वह्नित्वेन निर्व्वह्नौ अवृत्ति-मात्र-वृत्ति-गगनत्वादिना विरुद्ध-घटत्व-पटत्वाभ्याञ्च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः ।

अथ व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रकरणे दीधिति-प्रकाशः ।

ननु अस्मात् शब्दादयमर्थो बोद्धव्य इत्याकारिकेश्वरेच्छैव वाच्यत्वं, सा च ईश्वरे समवेता, समवायिनी चेच्छात्वादेरतः कथं समवायित्वं तद्व्यधिकरण-धर्म्म इत्यत आह "वाच्यत्वं यथे"ति, वाच्यत्वं नेश्वरेच्छामात्रं, ईश्वरं दूषयतामपि शाब्द-बोधोदयात् अतिप्रसङ्गाच्च, किन्तु पदार्थान्तरं, तच्च न समवेतं अभावा-

दावपि सत्त्वात्, किन्तु वैशिष्ट्याख्येनातिरिक्त-सम्बन्धेनैव (१) वर्त्तत इति भावः ।

यत्तु वाच्यत्वं नेश्वरेच्छामात्रं घट-शब्दस्यापि पट-शक्तत्व-प्रसङ्गात्, किन्तु घटशब्दकरणकत्वविशिष्टघट-बोधविषयकेच्छा, सा च विशिष्टा न समवायिनी न वा समवेतेति; न चैवं केवलान्वयित्वानुपपत्तिः तत्-पदादि (२) वाच्यत्वस्य तथात्वादिति तन्न । एकस्यैव समवायस्य पृथिव्याद्यवच्छेदेन रूपादि सम्बन्धतावदेकस्या एवेच्छाया घटत्वविशिष्टाद्यवच्छेदेन घट-पद सम्बन्धतासम्भवादिति । स्वयं वक्ष्यमाण स्व पर-साधारण यावल्लक्षणेषु प्रमेयसाध्यके व्यधिकरण धर्मावच्छिन्नाभावं प्रदर्शयति —"भावत्वेने"ति, तत्र यद्यपि घटत्वेन वाच्यत्वाभावमादाय स्वोक्तं प्रथम-लक्षणं, वाच्यत्वत्वेन घटाभावमादाय द्वितीयं च सङ्गतमेव ; तथापि साध्यतावच्छेदक-समनियत-प्रतियोगिताकाभाव घटित-सार्व्वभौमीयलक्षण-साधारण्यार्थमयमारम्भ इति भावः। तत्राभाववान् भाववान् वा मेयत्वादित्यत्राभावत्वादि-समनियत-प्रतियोगिताकाभावं दर्शयति "भावत्वेने"त्यादिना । यद्वा प्रमेयत्वावच्छिन्न-साध्यक एव समनियताभावैक्य-मते भावत्वेन योऽभावाभावः स एवाभावत्वेन भावाभाव इति भवति प्रमेयत्व समनियत-प्रतियोगिताक इति भावः । ननु समनियताभावैक्य मते वह्निमान् धूमादित्यत्र वह्नित्व-समनियत-प्रतियोगिताकाभावस्याप्रसिद्ध्या लक्षणाव्याप्तिः

(१) एव इति नास्ति ग पुस्तके ।

(२) आदि इति नास्ति ग पुस्तके ।

घटत्वेन वह्न्यभावस्यापि घटत्वेन पटाभावाभिन्नत्वात्। अत एका-वच्छेदकावच्छिन्नप्रतियोगितात्वेन समनैयत्यं वाच्यम्। तथाच कथं भावत्वाभावत्व-रूपावच्छेदक-द्वयावच्छिन्न--प्रतियोगितामादाय लक्षण-सङ्गतिरित्यरुचे स्तथैवाह "वह्नित्वेने"ति, जलह्रदे वह्नित्वेन किमपि प्रमेयं नास्तीति प्रतीत्या प्रमेयमात्रस्यैव प्रतियोगित्वाव-गाहनादिति भावः। ननु प्रमेयवान् वह्नेरित्यत्रोक्ताभावो न साधन-समाधिकरण इत्यत आह "अवृत्ती"ति, गगनत्वादेरपि कालिकादि-सम्बन्धेन घटादि-वृत्तित्वादाह "अवृत्तिमात्रवृत्ती"ति, तथा चावृत्तिमात्रवृत्तिता-नियामकसम्बन्धमेव प्रतियोगितावच्छे-दकीकृत्य तथाऽभावो ग्राह्य इति भावः। गगनत्वेन किमपि प्रमेयं नास्तीति प्रतीति सूचनाय गगनत्वादिनेति। ननूक्तप्रतीत्या प्रमेय-मात्रस्य प्रतियोगित्वावगाहनं न सर्व्व-जन-सिद्धं, तथात्वेऽपि वा प्रमे-यवान् वाच्यत्वादित्यादौ वह्नित्व-ह्रदत्वादि-नानाधर्म्मावच्छिन्नप्रति-योगिताकाभाव-समुदायाधिकरणाप्रसिद्धाऽव्याप्ति-भयेन स्व-(१) न्यूनवृत्ति-स्व-(२)समानाधिकरण-धर्म्मानवच्छिन्न-प्रतियोगितायाः साध्यतावच्छेदक-समनैयत्यं विवक्षणीयम् (३)। तथाच कथमेवं विधाभावमादाय-लक्षण-गमनमतस्र आह"विरुद्धे"ति, घटत्व-पटत्वो-भयोरपि कालिकसम्बन्धेन सामानाधिकरण्य-सत्त्वादाह "विरु-द्धे"ति विरोधिता-नियामक-समवायादेः प्रतियोगितावच्छेदकता-

(१) स्व इति नास्ति घ पुस्तके।

(२) स्व इति नास्ति घ पुस्तके।

(३) विवक्षणीयमवश्यमिति ग। वाच्यमवश्यम् इति घ पुस्तके।

वच्छेदकत्व-प्रापकम्। इदमुपलक्षणं घटत्वादिकमपि संयोगेन मेयसामान्याद्वृत्तीति तेन सम्बन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिताकमेय-सामान्याभावोपि * बोद्धव्यः (१)।

---

अथ शिरोमणि-कृत व्याप्तिलक्षण-प्रकरणे दीधितिः।

ननुपारिभाषिकमेवाव्यभिचरितत्वं, तथा हि यत् समानाधिकरणाः साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदक-प्रतियोगिताका यावन्तोऽभावाः प्रतियोगि-समानाधिकरणास्तत्त्वम्।

शिरोमणिकृतलक्षण दीधिति-प्रकाशः।

पारिभाषिकमेवेत्येवकारेण योगानादरः (२) सूचितः। "यदि"ति, यत्पदं हेतुतावच्छेदकावच्छिन्न हेतु परं, तेनायमात्मा घटान्यत्वसत्त्वात्मघट-संयोगादित्यत्र हेतु समानाधिकरणस्यात्मत्वाभावस्य स्व-विशिष्ट-प्रकृत(३)हेत्वधिकरणाप्रसिद्धावपि नाव्याप्तिः। न च ज्ञानादि-वृत्तेरात्मत्वाद्यभावस्यापि स्वाश्रय समवायादि सम्बन्धेनात्म-वृत्तित्वात् स्व-विशिष्ट-हेत्वधिकरणस्य नाप्रसिद्धिरिति वाच्यं विशिष्ट-प्रतीति-नियामक-विशेषस्यैव सम्बन्धत्वात्, न चानेन

* अपिना गगनादिना प्रमेयाभावस्यापि पक्षणं सूचितम्।

(१) बोध्यः इति ग।

(२) योगार्थस्यानादरः इति ग। तत्र सूचित इति नास्ति।

(३) प्रकृत इत्यत्र हेतुतावच्छेदकावच्छिन्न इति ग, घ पुस्तकयोः।

सम्बन्धेनात्मनि आत्मत्वाभाव-विशिष्ट-बुद्धि(१)रस्ति, अतएव स्फटि-
कादि-भिन्ने सत्यपि लौहित्यस्य स्वाश्रय-संयोगो न सम्बन्धः, किन्तु
स्फटिकादावेवेति। एतेन एक-कालीनत्व एकज्ञान-विषयत्वा-
दिना सम्बन्धेन सर्व्वस्यैव सर्व्वत्र सत्वात् यत् समानाधिकरणा
इत्यस्य वैयर्थ्यमिति प्रत्युक्तं। न च यत्-समानाधिकरणा इत्यत्र(२)
साध्य-समानाधिकरणा इति कथं नोच्यतां, सत्तावानात्मत्वात्
प्रमेयवानात्मत्वादित्यादौ गुणकर्म्मान्यत्वविशिष्टसत्ताभावस्य सम-
वायावच्छिन्न प्रमेयाभावस्य च तादृशस्य स्व-विशिष्ट-हेत्वधिकरणा-
प्रसिद्ध्याऽव्याप्तिरिति तन्नोक्तम्। अत्र साध्यनिष्ठा व्याप्यता सम्बन्ध-
सामान्येन वाच्या। न च समवायेन ज्ञान-साध्यके द्रव्यत्वादि-
हेतावतिव्याप्तिः विषयतया तस्य केवलान्वयित्वेन केवलान्वयि
निष्ठ-प्रतियोगिताया एव तद्व्यापकतावच्छेदकत्वेन तादृशाभावस्य
प्रतियोगि-समानाधिकरणत्वादितिवाच्यं प्रतियोगि-सामानाधि-
करण्य-दले साध्यतावच्छेदकसम्बन्धेन साध्यनिष्ठा या व्याप्यता
तन्निरूपित-व्यापकता-घटक-यावत्-सम्बन्धेन प्रतियोगि-सामानाधि-
करण्यस्यावश्यं विवक्षणीयत्वेनैवानतिप्रसङ्गात् (३)। समवायेन
ज्ञानादि-व्यापकस्य ज्ञानादे(४)रभावस्य हेत्वधिकरणावच्छेदेन
निरुक्त(५)प्रतियोगि-सामानाधिकरण्याभावात्। यदि च संयोग-

(१) बुद्धिरित्यत्र धीरिति पाठ ग, घ पुस्तकयोः।

(२) यत्समानाधिकरणा इत्यत्र इति नास्ति ग पुस्तके।

(३) विवक्षणीयत्वात् तेनैवानतिप्रसङ्गात् इति घ पुस्तके।

(४) ज्ञानादेरित्यत्र इच्छादेरिति पाठः ध पुस्तके।

(५) निरुक्त इति नास्ति क, ग पुस्तकयोः।

समवायादि साधारणं सम्बन्धत्वं नैकं अन्यतमत्वेन तादृशसम्बन्धानां प्रवेशे गौरवं, यत्किंचित्सम्बन्धेन साध्य निष्ठ-व्याप्यताभिधाने चाय-मात्मा ज्ञानादित्यत्र कालिक-सम्बन्धेनात्मत्वस्य व्यापकं जन्य महा-कालान्यतरत्वं तदभावस्य हेतु-समानाधिकरणस्य प्रतियोगिनः समवायेनात्मत्वनिष्ठव्याप्यतानिरूपितव्यापकताघटकसम्बन्धाप्रसि-द्धयाऽव्याप्तिरिति विभाव्यते तदा साध्यतावच्छेदकसम्बन्धेन व्याप्यता बोध्या। एवं च साध्यतावच्छेदकसम्बन्धेन साध्यता-वच्छेदकावच्छिन्नसाध्यवद्वृत्त्यभावप्रतियोगितानवच्छेदिका यद-भावप्रतियोगिता तादृशाभाववत्त्वमर्थः, तेन गुणकर्म्मान्यत्वविशिष्ट-सत्तावान् जातेरित्यादौ द्रव्यत्वाद्यभावस्य तादृशस्य प्रतियोग्य समानाधिकरणत्वान्नातिव्याप्तिः। धूमवान् वह्नेरित्यादौ धूमा-भाव-प्रतियोगितायाः स्वरूपसम्बन्धात्मक तत्तद्व्यक्ति स्वरूपाया धूम-व्यापकतानवच्छेदकत्वेऽप्ययोगोलकान्यत्वाद्यकव्यक्ति निष्ठ प्रतियोगितायाः एव तथात्वात् अयोगोलकान्यत्वाभावादेः प्रति-योग्यसमानाधिकरणत्वादेव नातिव्याप्तिः। वह्निमान् धूमादि-त्यादौ च घटत्वावच्छिन्नप्रतियोगिताक द्रव्यत्वाभावमादाय लक्षण-समन्वयः। घटत्वावच्छिन्नद्रव्यत्वाभावप्रतियोगित्वेन पटो नास्ती-त्यादि-क्रमेण प्रतियोगितामात्रस्यैव व्यधिकरणतया साध्यवन्निष्ठा-भावप्रतियोगितावच्छेदकत्वेन साध्यवन्निष्ठाभाव प्रतियोगितानव-च्छेदक-प्रतियोगितायाः अप्रसिद्धिवारणाय साध्यवन्निष्ठाभावे प्रति-योगि-व्यधिकरणत्वं देयम्। तदर्थश्च न प्रतियोगि समानाधिकरण-भिन्नत्वं, गोत्वत्वेन गोत्वाभावादेरपि गोत्वत्वेन किमपि प्रमेयं

नास्तीति प्रतीति-सिद्धाभाव-समनैयत्येन तदात्मकतया प्रतियोगि-व्यधिकरणाभावाप्रसिद्धेः। नापि प्रतियोगितावच्छेदकावच्छिन्न-समानाधिकरण भिन्नत्वं तदर्थः व्यापकत्वस्य सम्बन्धविशेषनियन्त्रिततया येन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्न-समानाधिकरणभिन्नस्य साध्यवन्निष्ठाभावस्य प्रतियोगितानवच्छेदिका प्रतियोगिता स एव व्यापकता-घटकसम्बन्धो वाच्यः। तथा च संयोगेन द्रव्यत्वमपि वह्नि--व्यापकं स्यात्, वह्निमन्निष्ठस्य संयोगेन द्रव्यत्वाभावस्य तेन सम्बन्धेन द्रव्यत्वाधिकरणाप्रसिद्ध्या प्रतियोगिवैयधिकरण्या भावात्। तथाच तेन सम्बन्धेन द्रव्यत्वाद्यभावस्य प्रतियोगि-सामानाधिकरण्याभावादसम्भव इति। न च संयोगेन स्व प्रतियोगितावच्छेदकावच्छिन्न--समानाधिकरण यद्यत्तद्भिन्नत्वं संयोगेन द्रव्यत्वाभावे वर्त्तत एवेति वाच्यम्। संयोगेन द्रव्यत्वाभावस्यापि घटत्वेन वह्न्यभावाभिन्नतया घटत्वावच्छिन्न-समानाधिकरणत्वेन तद्भिन्नत्वाभावात्। न चैवं संयोगेन द्रव्यत्वाभावस्य वह्निरूप-प्रतियोगि-समानाधिकरणत्वान्नासम्भव इति वाच्यम्। एवमपि सत्तावान् जातेरित्यत्रोक्त-क्रमेण सत्तां प्रत्यपि संयोगेन द्रव्यत्वादेर्व्यापकत्वेन तदभावस्य गुणादौ हेत्वधिकरणे संयोगेन प्रतियोगि सामानाधिकरण्याभावादव्याप्तेः। व्यापकत्वाभिमतस्य तेन सम्बन्धेन वृत्तिमत्त्व-विवक्षणेऽपि संयोगादेरपि सत्तां प्रति व्यापकतया गुणादौ तदभावस्य प्रतियोगि-सामानाधिकरण्याभावात्, सत्तावान् जातेरित्यत्राव्याप्तेरपरिहारात्। तस्मात् यत्सम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिक-

त्व-साध्यवद्यत्किञ्चिद्दृत्त्यनुयोगिकत्वोभयाभावः तत्प्रतियोगितावच्छेदक-भिन्ना या, येन सम्बन्धेन यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं यत्साध्याधिकरणं तादृशप्रतियोगितावच्छेदकभिन्ना तेन सम्बन्धेन वृत्तिमन्निष्ठा वा या प्रतियोगिता, सा तेन सम्बन्धेन व्यापकतावच्छेदिका। वस्तुतस्तु साध्यवन्निष्ठप्रतियोगिताया यत्सम्बन्धावच्छिन्नायाः सामानाधिकरण्येनानवच्छेदिका या प्रतियोगिता सा तेन सम्बन्धेन तथेति वाच्यम। साध्यवन्निष्ठत्वं चाभावस्य दैशिकविशेषणता विशेषेण। तेनायं घट-एतद्घट-पटान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणैतत्-पटान्यत्वादेरभावस्य कालिकसम्बन्धेन घटे वृत्तावपि नैतत् पटान्यत्वस्य घटत्व व्यापकत्व क्षतिः। अनवच्छेदकत्वं चावच्छेदकत्वावच्छिन्नावच्छेदक भेदः। तेन घटादिनिष्ठप्रतियोगितायां अवच्छेदकत्वेन घटादिभेद सत्त्वेऽपि न क्षतिः। न च घटत्वावच्छिन्नद्रव्यत्वाभाव प्रतियोगितया द्रव्यत्व वह्नौ न स्त इति प्रतीतिसिद्धाभावप्रतियोगितायाः सामानाधिकरण्येनैवावच्छेदकत्वात्तादृशप्रतियोगितानां कथं व्यापकतावच्छेदकत्वमिति वाच्यम्। अवच्छेदकपदेनावच्छेदकत्वपर्य्याप्त्यधिकरणत्वस्य विवक्षणात्, तत्पर्य्याप्तिश्च न प्रकृतप्रतियोगितायामन्यथा तादृशप्रतियोगितावच्छेदकावच्छिन्नद्रव्यत्ववति तदभावाप्रत्यय प्रसङ्गात्। किन्तु तत्प्रतियोगितायां द्रव्यत्व-वह्नि वृत्तित्वं चेति ध्येयम्। यथा चैवं स्व-विशिष्टपदं न व्यर्थं तथा तत्रैव प्रपञ्चयिष्यते।

दीधितिः ।

सर्व्वंच वाच्यत्वाद्यभावस्य तथात्वात् यावत्त्वोपादानं, अतएव भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगि-समानाधिकरणत्वेऽपि (१) भूतत्व-मनोऽन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्गः। साधन-समानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्य-व्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि। येन सम्बन्धेन हेतुस्तेनैव तदधिकरणं बोध्यं, तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः। एवं दृष्टान्तरेऽपि सम्बन्ध--भेद--निबन्धनो दोषः सम्बन्धैक्य–विवक्षया निरसनीयः।

दीधिति-प्रकाशः ।

यावत्पदं विनाऽतिव्याप्तिरेव भवति नासम्भवोऽव्याप्तिर्वेति (२) प्रदर्शयितुमाह "सर्व्वत्रे"ति "सर्व्वत्र" सर्व्वाधिकरणावच्छेदेन,

(१) सामानाधिकरण्येऽपि इति सोसाइटी-मुद्रितपुस्तके।

(२) नाव्याप्तिरसम्भवो वा इति ग पुस्तके।

तथाच स्वविशिष्टदेशत्वधिकरणावच्छेदेनेत्यस्यापि सत्वं प्रदर्शित-मिति भावः । "तथात्वात्" प्रतियोगि-समानाधिकरणत्वात् । ननु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावः, साध्य-तावच्छेदकव्यापकप्रतियोगिताकाभावो वा (१) कथं नोक्त इत्यत आह "अतएवे"ति, निरुक्ताभावे यावत्त्व-विशेषण-दानादेव (२) । ननु भूतलं वह्निरिन्द्रियग्राह्यजातीय-विशेषगुणवत्त्वं, तस्य चोत्पत्ति कालावच्छेदेन घटादावभावात्प्रतियोगि-व्यधिकरणत्वाघटितं साध्य-व्यापकत्वं न सम्भवतीत्याह "मनोन्यत्वे"ति, केचित्तु साध्य-प्रतियोगिकमभावमादायापि नातिव्याप्तिरिति कैमुतिक न्याये-नाह मनोन्यत्वेत्याहुः, गोत्वाभावस्य माध्याभावेत्यनेनैव वारणा-दाह "तत्तत्साध्ये"ति, वह्निमान् धूमात् जातिमान् सत्त्वादित्यादौ तत्तद्वह्न्यभावस्य तत्तज्जात्यभावस्य च स्वविशिष्टदेशत्वधिकरणाव-च्छेदेन प्रतियोगि-सामानाधिकरण्याभावात् अव्याप्तिरित्यर्थः । साध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकत्वोक्तावपि तथा, तत्त-द्वह्नेः प्रमेयत्वादिना वह्नित्वावच्छिन्न-व्यापकत्वात् । न च तत्प्र-तियोगितानां प्रमेयत्वादिना तद्व्यापकतावच्छेदकत्वमपि, तादृशा-भावप्रतियोगितावच्छेदकत्वाभावस्य केनापि रूपेणासत्त्वा(३) दिति । वह्निमान् धूमादित्यत्र चरमक्रियाभावाभावस्य धूमा-

(१) व्यापकप्रतियोगिताको वा इति न पुस्तके ।

(२) विशेषणादेव इति न पुस्तके ।

(३) असत्त्वादित्यत्र असम्भवात् इति न पुस्तके ।

धिकरणमहाकालवृत्तिनिरुक्तरूपशालिनः चरमक्रियात्मकस्य पर-माणुमहाकालादेः संयोगेन धूमाधिकरणत्वसम्भवेन स्वविशिष्ट-हेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वसम्भवादव्याप्तेर-सम्भवात् "आत्मत्वे साध्य" इत्युक्तम्। न च परमाण्वादिकं न संयोगेन धूमाधिकरणं तत्संयोगस्य वृत्त्यनियामकत्वादिति वाच्यं परमाणौ धूम इत्याद्यानुमानिक प्रतीति सत्त्वात्। न चानु मानमप्रयोजकमिति वाच्यम्। तथाप्यव्याप्तेरनिर्णयेन तद्वारक-विशेषणदानानौचित्यात्। केचित्तु अत्र साध्याभावस्याव्याप्यवृत्ति त्वेन (१) प्रतियोगिसामानाधिकरण्याव्याप्तिस्तमादाय सम्भवतीति आत्मत्वे साध्ये इत्युक्तमित्याहुः। ननु सुखवानात्मा महाकालान्य-तरत्वादित्यत्रातिव्याप्तिः, सर्व्वेषामेव तादृशाभावानां स्वविशिष्ट-हेत्वधिकरणीभूत-महाकालावच्छेदेन कालिकसम्बन्धेन प्रति-योगि-समानाधिकरणत्वात्, न चात्मनोऽपि तादात्म्येन सुख(२)-व्यापकतया आत्माभावस्यापि तादृशत्वात्तस्य च काले आत्म-सामानाधिकरण्याभावान्नातिव्याप्तिरिति वाच्यम्। आत्मनोऽपि काले वृत्त्यनियामकसम्बन्धेन सत्त्वात्, अन्यथा सदातनत्व-कारणत्वादिकं न स्यात्। तस्य काल वृत्तित्व घटितत्वात्। एवमपि सुखवान् आत्म घटान्यतरत्वादित्यत्रातिव्याप्तिः, अत घटादौ संयोगेनात्मनो वृत्तेरित्यत आह "टलान्तरेऽपी"ति, साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्न साध्यनिष्ठ

(१) साध्याभावस्याव्याप्यवृत्तेरिति घ पुस्तके।

(२) सुख इत्यत्र साध्य इति पाठः घ पुस्तके।

व्याप्यता-निरूपितव्यापकता-घटकसम्बन्ध प्रतियोगिसामानाधिकरण्य-घटकसम्बन्धयोरैक्यविवक्षयेत्यर्थः । तेन धूमवान् धूमकालीनवह्नेरित्यादावयोगोलकान्यत्वाभावादेरपि सम्बन्धसामान्येन धूमनिष्ठव्याप्यतानिरूपित-व्यापकता-घटकसम्बन्धसामान्येन प्रतियोगि-सामानाधिकरण्येऽपि न क्षतिः । एवं यत्किञ्चित् सम्बन्धावच्छिन्नव्याप्यतानिरूपितव्यापकता-घटकेन कालिकादि सम्बन्धेन स्व विशिष्टत्वधिकरणावच्छेदेन प्रतियोगि सामानाधिकरण्यसत्त्वेपि नातिव्याप्तिः । न वा विशिष्टसत्तावान् गुणवत्त्वादित्यादौ विशिष्टसत्ता व्यापकतावच्छेदकप्रतियोगिताकस्य द्रव्यत्वाभावस्य कालिकसम्बन्धेन हेतु समानाधिकरणस्य प्रतियोगिनि द्रव्यत्वे शुद्ध सत्तानिष्ठव्याप्यतानिरूपितव्यापकता घटकसम्बन्धाप्रसिद्ध्याऽव्याप्तिः । वस्तुतस् साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्ट-साध्यवन्निष्ठाभावीय यत्सम्बन्धावच्छिन्न प्रतियोगितानवच्छेदक प्रतियोगिताका ये येऽभावा स्तेन तेन सम्बन्धेन प्रतियोगि समानाधिकरणा इत्यर्थात् व्यापकता घटकत्वेन न सम्बन्धानां प्रवेश इति । यत्सम्बन्धेनेति करणाच्च इदमीश्वर ज्ञानमीश्वर सविषयकत्वादित्यत्र व्यभिचाराधिकरणीभूतज्ञानान्यत्वादेर्विषयितया देशिकविशेषणतया चेश्वरज्ञानत्व-व्यापकत्वेन तदभावस्येच्छायां व्यापकता-घटक-विषयितया प्रतियोगि-सामानाधिकरण्येऽपि देशिकविशेषणतयाऽसत्त्वान्नातिव्याप्तिरिति (१) । साध्यतावच्छेदकसम्बन्धेन व्यापकता,

(१) नातिप्रसङ्ग इति ग पुस्तके ।

तेनैव सम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्यत्रौ च "सर्व्वत्र वाच्यत्वाद्यभावस्ये"तिग्रन्थविरोधः। यत्र महाकालान्यत्व-विशिष्ट-घटत्वं कालिकतया साध्यं कालत्वं हेतुस्तत्र तादृशाभावानां कालिकसम्बन्धेन महाकाले प्रतियोगि-सामानाधिकरण्यादति-व्याप्तिश्च स्यात्। अस्मद्विवक्षायां तु महाकालान्यत्वस्यैव दैशिक-तया साध्यव्यापकत्वात् तदभावस्य तेन सम्बन्धेन महाकाले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरिति।

(वस्तुतस्तु, महाकालान्यत्वविशिष्टघटत्वमपि महाकाले कालि-कतया वर्त्तत इति व्यवस्थापयिष्यते। तथाप्ये(१)तद्रूपान्यत्वविशिष्ट-सत्तावान् सत्त्वादित्यादौ समवायेन साध्यतायां उक्त-क्रमेणाति-व्याप्तिर्द्रष्टव्या) (२)। केचित्तु प्रतियोगितावच्छेदकसम्बन्धेन व्याप-कता तेनैव प्रतियोगि-सामानाधिकरण्यं, समवायेन वह्नि व्यापक-तावच्छेदकप्रतियोगिताकस्यापि संयोगेन द्रव्यत्वाभावस्य प्रतियोगि-तावच्छेदकसम्बन्धेन संयोगेन द्रव्यत्वासामानाधिकरण्यादव्याप्ति-रत स्तेन सम्बन्धेन व्यापकत्वमुक्तम्। न चेदं वाच्यं प्रमेय-त्वादित्यादौ प्रतियोगितावच्छेदकसम्बन्धेन साध्य-व्यापकताव-च्छेदकप्रतियोगिताकाभावस्याप्रसिद्धिः व्यधिकरणधर्म्मावच्छिन्ना-भावस्य प्रतियोगितावच्छेदकसम्बन्ध स्वीकारे मानाभावेन घटत्वेन वाच्यत्वाद्यभावस्यातथात्वादिति वाच्यम्। वाच्यत्व घटत्वोभया-भावस्य घटादि-वृत्तित्वविशिष्ट वाच्यत्वाद्यभावस्य वा तादृशस्य

(१) तथापि इत्यत्र तथाच इति पाठः ग पुस्तके।

(२) ( ) एतच्चिह्नमध्यस्थपाठो नास्ति च पुस्तके।

प्रसिद्धेरिति। न चैवं व्यधिकरणधर्म्मावच्छिन्नाभावं विनैव लक्षण-समन्वयेन "प्रतियोग्यवृत्तिश्च"त्यादि-ग्रन्थावतारणं न स्यादिति वाच्यं व्यापकता-लक्षणे व्यधिकरणधर्म्मावच्छिन्नाभाव वारकस्य सामानाधिकरण्येनेत्यादि-विशेषणस्य तदभ्युपगममन्त-रेण वैयर्थ्यापत्त्या प्रतियोग्यवृत्तिश्चेत्यवतारकत्वस्योभय-समाधेय-त्वादिति। वस्तुतस्तु, व्यधिकरणधर्म्मावच्छिन्नाभावस्यापि प्रति-योगितावच्छेदकसम्बन्धोऽनुभव-बलादास्थीयते, कथमन्यथा घटे पटत्वभ्रमदशायां पटत्वविशिष्टघटसंयुक्तत्वेन यदा भूतलं प्रतीयते, तदा भूतले पटत्वेन घटोनास्तीति धीः संयोगेन न भवति, भवति च समवायेनेत्युपपद्यते। अतएव प्रमेयत्वत्वेन वाच्यत्वं नास्तीत्यभावस्य प्रमाविषयत्वीय-स्वरूपसम्बन्धावच्छिन्नतया द्वितीयलक्षणस्यापि सङ्गतिः। अन्यथा विशिष्ट वाच्यत्वा-भावमादाय पूर्व्वलक्षणोपपादने द्वितीयलक्षणस्याप्रतीकारादि-त्याहुः। परे तु विशेषणताविशेषेण व्यापकता तत्रैव प्रति योगि-सामानाधिकरण्यं, विशेषणताविशेषयाभावीयः प्रमा-विषयत्वीयो वा वाच्यः। व्यभिचारिणि व्यभिचारनिरूपकाधि-करणं यत्तदन्यत्वस्य तत्प्रकारक-प्रमाविषयत्वस्य वाऽभावमादाय नातिव्याप्तिः। अव्याप्यवृत्तिप्रमाविषयत्वं अव्याप्यवृत्त्येव, तेन न स्वविशिष्टपद-वैयर्थ्यम्। सत्तावान् जातेरित्यादौ सत्ता-प्रकारकप्रमाविषयत्वस्य गुणकर्म्मान्यत्वविशिष्टस्याभावे हेत्वधि-करणावच्छेदेन प्रतियोगि-सामानाधिकरण्याभावाद्वा तत्पद-मित्याहुः।

दीधितिः ।

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव, प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात् । न च प्रतियोगिवत्तद्ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वं, मानाभावात् । अतएवान्तराश्यामे रक्तं रूपं नास्तीति प्रत्ययः । न चैष रक्तिम-ध्वंसाद्यवगाही ; पूर्व्वापररक्तिम-ध्वंस-प्रागभाववति रक्तेऽपि तथा प्रत्यय-प्रसङ्गात् ।

---

दीधिति-प्रकाशः ।

ननु रूपसामान्याभाववान् पृथिवीत्वादित्यत्र प्राचां मते विरुद्धेऽतिव्याप्तिः, पृथिव्यन्यत्वादेः स्वमते रूपसामान्याभावाव्यापकत्वात्तदभावमादायातिव्याप्ति-वारणासम्भवात् । अतस्तत्रालक्ष्यत्वाभावमुपपादयति "रूपे"ति, केचित्तु साध्यतावच्छेदकावच्छिन्नसाध्याभावेत्युक्तौ भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्रेव रूपसामान्याभाववान् पृथिवीत्वादित्यत्राप्यतिव्याप्तिः स्यात् रूपसामान्याभावाभावस्य रूपस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तद्रूपविशेषप्रागभाव ध्वंसादिरूपप्रतियोगिसमानाधिकरणत्वादतस्तदेव किं नोदाहृतमित्यतस्तस्य लक्ष्यत्वमेवाह "रूपेती"ति व्याचक्रुः । अविनश्यदवस्थरूपस्यैव (१) रूपोत्पत्तिप्रतिबन्धक-

(१) अविनश्यदवस्थस्यैव रूपस्य इति ग घ पुस्तकयोः ।

त्वोपगमे (१) रूपनाशोत्पत्तिकालावच्छेदेनैव उत्तररूपोत्पादात् सृष्टिकाले परमाणौ रूपसामान्याभावासम्भवादाह "प्रलय" इति, महाप्रलय इत्यर्थः। "परमाणौ" पार्थिवपरमाणौ ; "तत्सत्त्वात्" रूपसामान्याभाव सत्त्वात् "प्रतियोगिव"दिति, षष्ठीसमर्थादृतिः। "तद्ध्वंसप्रागभावयोः" प्रतियोगि-ध्वंस प्रागभावयोः। ननु प्रलये रूप-सामान्याभाव-सत्त्वे मानाभावः प्रत्यक्षस्यासम्भवात्, अनुमानस्याप्रयोजकत्वात्, प्रत्युत प्रागभाव ध्वंस-प्रतियोगिकातिरिक्ता-त्यन्ताभाव-कल्पना गौरव-प्रतिकूलतर्क सत्त्वाच्च। एवमुत्पत्ति कालावच्छेदेन तत्सत्त्वे मानाभावः, प्रत्यक्षस्येन्द्रिय सन्निकर्षविरहेणासम्भवात्। न च कपाल समवेतरूपादौ अभाव-प्रत्यक्षे इन्द्रिय-संयुक्त समवेत-विशेषणताया हेतुत्वग्रहात्तस्यापोत्पत्तिकालाव-च्छिन्न घटे सत्त्वादिति (२) वाच्यम्। द्रव्यवृत्त्यभावप्रत्यक्षे संयुक्त-विशेषणताया अपि आत्मवृत्त्यभावस्थले हेतुत्वेन विनिगमना विरहेणोभय हेतुतायामपि प्रकृताऽसिद्धेरत आह "अतएवे"ति, ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे मानाभावादित्यर्थः। "अन्तराश्याम" इति। पूर्व्वापरकाले रक्ते मध्यदशायां श्यामे इत्यर्थः। ध्वंस प्रागभावयोः सामान्याभावत्ववादि मतेऽपि यत्किञ्चिद्विशेष-प्रागभाव-यत्किञ्चिद्विशेष ध्वंसवति तदसम्भव इत्यस्य सूचनार्थम् अन्तराश्याम इत्यनुधावनम्। "एषः" रक्तं रूपं नास्तीति विलक्षण-

---

(१) रूपप्रतिबन्धकत्वोपगमे ख ग घ पुस्तकेषु।

(२) कालावच्छिन्ने घटेऽपि सत्त्वादिति इति ग घ पुस्तकयोः।

विषयताशालि (१) प्रत्यय इत्यर्थः (२) ध्वंसादीत्यादिना तत्प्रागभावपरिग्रहः। "पूर्व्वापर" इति, पूर्व्वरक्तस्य (३) ध्वंसवति अपररक्तस्य (४) प्रागभाववतीत्यर्थः। "तथा प्रत्यये"ति, रक्तं रूपं नास्तीति विलक्षणविषयता (५) शालिप्रत्यय इत्यर्थः। न च तत्र रक्तरूपवत्ताज्ञानमेव प्रतिबन्धकं, तदज्ञाने जायमानायाः प्रतीतेः प्रमात्वापातात्। न च रक्तत्वावच्छिन्नप्रतियोगिताकत्वं ध्वंसस्याव्याप्यवृत्ति (६) इति रक्ततादशायां ध्वंसे तदसत्त्वादेव न तथा प्रत्यय इति वाच्यं प्रागभावे एव तदव्याप्यवृत्ति किं न स्यादित्यत्र विनिगमकाभावात्। न चोभयत्रैव तदस्तु तथापि तद्ध्वंसप्रागभावसमनियतस्पर्शादिध्वंस-प्रागभावादीनामपि विनिगमनाविरहेण तत्कल्पनापत्तेः। तथाचानन्तानां ध्वंसप्रागभावादीनां रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्य तदव्याप्यवृत्तित्वस्यान्तराश्यामे रक्तं रूपं नास्तीति प्रतीतेरनेकध्वंसादिविषयत्वस्य च कल्पनामपेक्ष्य रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यैवान्तराश्यामादौ सम्बन्धः कल्प्यते लाघवादित्येतत्सूचनायाप्युक्तम् "अन्तराश्याम" इति।

दीधितिः।

तत्समानाधिकरण्यं च स्व-विशिष्टहेत्वधिकरणा-

(१) विलक्षण-विषयताशालि इति नास्ति ग पुस्तके।

(२) इत्यर्थ इति नास्ति ग पुस्तके।

(३) पूर्व्वरक्तिम इति ग पुस्तके।

(४) अपररक्तिम इति ग पुस्तके।

(५) विषयिता इति क पुस्तके।

(६) ध्वंस एवाव्याप्यवृत्ति इति ग पुस्तके।

वच्छेदेन बोध्यम् । तेन गोत्व-जन्यद्रव्यत्व-प्रलयावृत्तित्वा-दिना गवादेरभावस्य गवाद्यनधिकरण-धर्मावच्छेदेन(१) तद्वति काले महाकाले वा वृत्तावपि; यदा गोत्वं तदा गौः, यत्र कालत्वं तत्र जन्यद्रव्यं प्रलयावृत्तिर्वा इत्यादौ नातिप्रसङ्गः । हेतुमति प्रलये तत्सामानाधिकरण्या-भावात् । स्व-विशिष्टेति विशेषणात् कपि-संयोगा-भाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्या-भावस्य सकल-हेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः । जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वा-द्यभावो न तु धूमाद्यभावो जलादावपि तदभाव-प्रत्यय-प्रसङ्गात् ।

---

दीधिति-प्रकाशः ।

"स्वविशिष्टे"ति, यत्राभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यं तदेव स्वं, तद्विशिष्टं यद्धेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकाव-च्छिन्न(२) हेत्वधिकरणं तदवच्छेदेनेत्यर्थः । तेन वह्निमान् धूमादि-त्यादौ कालिकसम्बन्धेन धूमाधिकरण-क्रियावच्छेदेन घटत्वेन द्रव्यत्वाद्यभावस्य प्रतियोगि-सामानाधिकरण्याभावेऽपि न क्षतिर्न

---

(१) धर्म्मावच्छेदेन इति क्वचित् पाठः स च न भवानन्दसम्मतः ।

(२) हेतुतावच्छेदकविशिष्ट इति न पुस्तके ।

वा द्रव्यं विशिष्टसत्त्वादित्यादौ (१) स्वविशिष्टसत्त्वाधिकरणगुणादौ द्रव्यत्वरूपप्रतियोगि-सामानाधिकरण्य-विरहेऽपि वृत्तिरिति। धूमवान् वह्नेरित्यत्र धूमाधिकरण-यावत्-ध्वंसानन्तरं वह्न्यधिकरणोत्पत्तिसम्भावनायां चरमधूमाधिकरण-ध्वंसस्य कालिकतया यदधिकरणं दैशिकतया च यदधिकरणं तदन्यतरत्वावच्छिन्न भेदस्य दैशिकतया धूमव्यापकस्याभावे चरमधूमाधिकरणध्वंसात्मके व्यापकता-घटकदैशिकतया स्वप्रतियोगि सामानाधिकरण्याभावान्नातिव्याप्ति-निर्णयः सम्भवतीति तदुपेक्ष्याह। "गोत्व" इति। पर्व्वतादेः कालोपाधित्वास्वीकारे अयोगोलकान्यत्वाद्यभावस्य पर्व्वताद्यवृत्तित्वात्तत्रातिव्याप्तिर्न सम्भवतीति तन्नोक्तमिति कश्चित्। सर्व्वत्रैव साध्यता कालिकसम्बन्धेन; तेन गोः साध्यतायां तद्व्यापकतावच्छेदकरूपावच्छिन्नाभावमादायापि नातिव्याप्ति-वारणं सम्भवतीत्येतत्प्रदर्शनाय तेन रूपेण साध्यतामाह। "जन्यद्रव्यत्वे" ति, व्यभिचारित्वसंपादनाय "जन्य" इति। "तद्वति" गवादिमति काले गवाद्यनधिकरणधर्म्मावच्छेदेन गवादेरभावस्य वृत्तावपीति योजना। दैशिकतया प्रतियोगिनोऽधिकरणे देशे दैशिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य दैशिकतया वृत्तौ कालिकतया प्रतियोग्यनधिकरणकालस्यैव कालिकतया प्रतियोगिनोऽधिकरणे काले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य दैशिकतया वृत्तौ दैशिकतया प्रतियोग्यनधिकरणदेशस्यावच्छेदकत्वादिहेदानीं

---

(१) सत्त्वादित्यत्र घटवृत्तित्वविशिष्ट-द्रव्यत्वाभावस्य निरुक्तरूपशालिनः वृत्ति-अधिकपाठः ग पुस्तके।

गौर्नास्तीति प्रत्ययात् । न च तस्यैतत्कालावच्छेदेनैतद्देशे गवात्यन्ताभावो विषयः, यद्देशे दैशिकतया कदाचित् न गौस्तत्रापि तथा प्रत्ययात् । तत्र च दैशिकतया गवाभावस्य व्याप्यवृत्तित्वेनैव तत्कालस्यावच्छेदकत्वाकल्पनादिति । यत्तु प्रतियोगिनोऽधिकरणे काले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकतया वृत्तौ प्रतियोग्यनधिकरण-देशोऽवच्छेदक इति तत्तुच्छं विरोधितानियामकसम्बन्धेन वृत्तावेवावच्छेदकानुसरणात् । विरोधितानियामकत्वाभावस्य दैशिकविशेषणताविशेष एव । अन्यथा घटवति भूतले घटाभावस्य कालिकतया वृत्तावप्यवच्छेदकं स्यादिति । साध्यव्यापक-चरम-ध्वंसप्रतियोगिकाभावाभावस्य चरम ध्वंसात्मकस्य सृष्टि-काले प्रतियोगि-सामानाधिकरण्याभावादाह "महाकालेवे"ति, तादृशध्वंसस्य महाकाले कालिकसम्बन्धेन वृत्तेः, अभावस्य वृत्तौ सम्बन्धविशेषो न विवक्षित इति भावः। परे तु अभावस्य दैशिकविशेषणताविशेषविवक्षायामपि प्रलयावृत्तित्वेन रूपेण साध्यतायामतिव्याप्तिः, तदवच्छिन्नाभावस्य प्रलयमात्रवृत्तेः प्रलयात्मकतया स्व-प्रतियोग्यधिकरणेऽपि दैशिकतया वृत्तेः । न च प्रलयावृत्तेः कालिकतयाऽभावस्याकाशादिवृत्तेः कथं प्रलयात्मकत्वमिति वाच्यं प्रलयभेदस्यापि प्रलयावृत्तितया विशेषणतया तदभावस्य प्रलयमात्रवृत्तित्वात् । अतएव दैशिकविशेषणता-कालिकविशेषणता-साधारणसम्बन्धत्वस्यैकस्याभावात्तावदन्यतमत्वस्य प्रवेशे चातिगौरवात्, अभावस्य वृत्तौ दैशिकविशेषणतैव निवेशनीयेत्यभिप्रेत्य प्रलयमात्रं व्यभिचाराधिकरणं प्रतिपिपादयिषुः प्रलया-

वृत्तित्वेन साध्यं निर्द्दिष्टवान्। पूर्व्वसाध्यद्वयं कालिकेन, चरमं तु दैशिकविशेषणताविशेषेणैवेति। न च प्रलयान्यत्वाभावो न प्रलयात्मा, अन्यथा तस्य चरमदुःखादि-ध्वंसरूपतया आत्मादावपि वृत्तेस्तत्रापि प्रलयान्यत्वाभावप्रत्यय-प्रसङ्गादिति वाच्यं प्रलयान्यत्वादेरात्मादौ वृत्तावपि (१) प्रलयान्यत्वाभावत्व-विशिष्टस्य खस्मिन्नेव वृत्तेः, प्रतीति-बलेन तथैव कल्पनात्। अन्यथा तस्यातिरिक्तत्वे तत्तदन्यत्वाभावस्यापि तथात्वादनवस्था स्यात्। अतएव वौद्धाधिकारेऽभावाधिकरणकाभाव-प्रसङ्गेऽनवस्थान्योन्याश्रयापेक्षया आत्माश्रयस्यैव लघुत्वात् स एव दीधिति-कृता स्वीकृत इति प्राहुः। संयोगसामान्याभावस्य द्रव्ये प्राचां मते अस्वीकारादाह, "कपी-"ति, प्रतियोगि-वैयधिकरण्यघटितं संयोगाभावस्यापि संयोगाभावस्य व्यापकत्वमित्युक्तं, प्रतियोगि-वैयधिकरण्या-घटितव्यापकतायामपि कपिसंयोगाभावव्यापकस्याकाशाभावस्याभावे आकाशे एवं मेयसामान्यस्य समवायेनाभावे मेयत्वस्य भेदेऽपि हेत्वधिकरणावच्छेदेन प्रतियोगि-सामानाधिकरण्याभावात् एवं सत्तावान् जातेरित्यत्र सत्त्वात्वावच्छिन्नाभावस्य कालिकतया नित्यत्वविशिष्टसत्तात्वावच्छिन्नाभावस्य दैशिकतयापि हेतुसमानाधिकरणस्य हेत्वधिकरणीभूतनित्यद्रव्यगुणयोरवृत्तेः स्वविशिष्टपदमिति। अतएवोक्तं "कपिसंयोगादौ"ति। केचित्तु व्यापकतायामभावस्य वृत्तिता अभावीयस्वरूपसम्बन्धेनैव (२) विवक्षिता। सा च न भावाभाव-

(१) स्वरूपतत्त्वस्यात्मादौ वृत्तावपि इति ग पुस्तके।

(२) स्वरूपसम्बन्धरूपेणैव इति ग पुस्तके। स्वरूपसम्बन्धेन इति घ पुस्तके।

साधारणी, तथाच संयोगाभाव-समानाधिकरणा ये घटाभावा-(१) स्तद्य एव (२) तत्प्रतियोगितानवच्छेदकमेव कपिसंयोगाभावनिष्ठ प्रतियोगित्वं कपिसंयोगस्याभावाद्यसम्बन्धेन कपिसंयोगाभावासा-मानाधिकरण्यात् (३) यथाश्रुत एव ग्रन्थः साधुः । न चैवं घटत्वा-त्यन्ताभावस्यापि कपिसंयोगाभाव-प्रमेयत्वादि (४) व्यापकतया तदभावस्य घटत्वादेः स्व विशिष्टहेत्वधिकरणावच्छेदेन घटत्वा-भावात्मक-प्रतियोग्यसमानाधिकरणत्वाल्लक्षणासम्भव इति वाच्यम् । घटत्वाभावप्रकारकप्रमा-विषयत्वाभावस्य(५)भावप्रतियोगिकतया ऽतिरिक्तस्य घटत्वसमनियततया घटत्वाभावादेरपि तत्प्रतियोगि-त्वेन(६) व्यापकत्वाभावात् । संयोगाभावप्रकारक-प्रमाविषयत्वं च संयोगाभाववन्नाव्याप्यवृत्तीति, तदभावस्य न संयोग-समनैयत्यमिति, संयोगाभावो न तत्प्रतियोगीति न तस्य व्यापकत्व क्षतिरित्याहुः ।

ननु धूमाभावे जलवृत्तित्वविशिष्ट गोत्वाभावो नास्तीति धिया धूमाभाव एव(७) विषयीक्रियते अभावप्रतियोगिकाभावाधिकरण-कातिरिक्ताभावानभ्युपगमात् । तथाच धूमवान् वह्नेरित्यादावति-

(१) घटात्यन्ताभावा इति ग घ पुस्तकयोः ।

(२) एव इति नास्ति घ पुस्तके ।

(३) भावासमानाधिकरण्यत्वात् इति घ पुस्तके ।

(४) प्रमेयत्वादि इति नास्ति घ पुस्तके ।

(५) विशेष्यत्वाभावस्य इति ग घ पुस्तके ।

(६) प्रतियोगित्वेनैव इति ग घ पुस्तके ।

(७) नास्तीति धीर्धूमाभावेनैव विषयीक्रियते इति ग पुस्तके । नास्तीति-धूमाभावेनैव व्यवह्रियते इति घ पुस्तके ।

व्याप्तिः, धूमाभावस्य गोत्वाभावरूपप्रतियोगिसमानाधिकरणत्वस्य (१) स्व-विशिष्टहेत्वधिकरणावच्छेदेन सत्त्वात्। न च यावद्व्यापकताघटकसम्बन्ध-मध्य-निविष्टसंयोगेनातथात्वान्नातिप्रसङ्गः, धूमाभावे जलवृत्तित्वविशिष्टगोत्वाभाव-संयोग्यन्यतरन्नास्तीति प्रतीति-बलात् संयोगि-सामान्यस्यैव तत्प्रतियोगित्वेन (२) तस्यापि सम्भवात्। एवमयो गोलकान्यत्वाभावस्याप्युक्तक्रमेण गोत्वाभावादिरूपप्रतियोगिसामानाधिकरण्यमत आह, * "जलादिवृत्ती"ति, यद्यपि धूमाभावस्वरूपत्वेऽपि तदभावस्य (३) जलादावेव (४) तदभावत्वेन न वृत्तिः किन्तु धूमाभावत्वेनैव, यथा घटात्यन्ताभावं पटो नास्तीति बुद्धेरनतिरिक्ताभावविषयकत्व-मते घटात्यन्ताभावस्यैव पटात्यन्ताभावतया (५) पटवति

---

* ननु अभावाधिकरणकाभावप्रतियोगिकाभावस्यैवाधिकरणस्वरूपतया अयोगोलकान्यत्वाभावरूपायोगोलकत्वे भावरूपे वर्त्तमानस्य विशिष्टगोत्वाभावाभावस्य तत् स्वरूपत्वाभावेनायोगोलकत्वरूपस्यैव तादृशाभावस्य प्रतियोगिसामानाधिकरण्याभावाद्भवान् वह्नेरित्यादावतिव्याप्तिर्न सम्भवतीति कथं जलादिवृत्तित्वेत्यादि-ग्रन्थ-सङ्गतिरिति चेन्न गगनाभावभिन्नं मेयत्वादित्यादावतिव्याप्तेः, यावदन्तर्गतस्य तादृशसाध्याभावस्य तादात्म्येन गगनाभावरूपतया तद्वृत्ति-विशिष्टगोत्वाभावाभावस्य तदात्मकतया तत्प्रतियोगिना गोत्वाभावेन सामानाधिकरण्यादिति भावः।

(१) प्रतियोगिसामानाधिकरण्यत्वात् इति घ पुस्तके।

(२) प्रतियोगित्वे इति घ पुस्तके।

(३) एतदभावस्य इति ग. घ पुस्तकयोः।

(४) जलादावपि इति घ पुस्तके।

(५) पटात्यन्ताभावात्मकतया इति घ पुस्तके।

पटाभावतया (१) न वृत्तिः, किन्तु घटा- (२) भावतयेति कथमतिप्रसङ्गः* । तथाप्येतावद्गुरु (३) कल्पने (४) गौरवात्, अन्यत्र क्लृप्तस्य जलत्वाभावस्य एतदभावत्वं (५) कल्पते लाघवादिति भावः ।

ननु तथापि धूमवान् वह्नेरित्यादावतिव्याप्तिः । धूमवद्वृत्तित्वविशिष्टगोत्वाभाव-संयोग्यन्यतराभावस्य धूमत्वेन प्रमेयसामान्याभावस्य च धूमाभावाभिन्नतया अयोगोलकान्यत्वत्वेन प्रमेयसामान्याभावस्यायोगोलकान्यत्वाभावाभिन्नतया ( धूमवद्भेदत्वेन प्रमेयसामान्याभावस्य धूमवद्भेदाभावाभिन्नतया )(६) तयां च व्यापकताघटक-तत्तत्सम्बन्धेन स्व विशिष्ट-हेत्वधिकरणावच्छेदेन यत्किञ्चित्प्रतियोगि सामानाधिकरण्यात् । न च व्यापकतावच्छेदिका या या प्रतियोगिता प्रत्येकं तदाश्रय सामानाधिकरण्यं वक्तव्यं, प्रकृते चायोगोलकान्यत्वत्वावच्छिन्नप्रतियोगितादेरपि तथात्वात्तदाश्रयायोगोलकान्यत्वासमानाधिकरणत्वान्नातिव्याप्तिरिति वाच्यम्, एवं

* प्रत्ययातिप्रसङ्ग इत्यर्थः ।

(१) पटात्यन्ताभावतया इति घ पुस्तके ।

(२) घटात्यन्ता इति ग पुस्तके ।

(३) तथापि तावद्गुरु इति ग पुस्तके ।

(४) तादृशकल्पने इति घ पुस्तके ।

(५) तदभावत्वं इति घ पुस्तके ।

(६) ( ) एतच्चिह्नितस्थले धूमवद्वृत्तित्वेन प्रमेयसामान्याभावस्य धूमाभावाभिन्नतया इति पाठः ग पुस्तके । धूमवद्वृत्तित्वेन प्रमेयसामान्याभावस्य धूमभेदाभिन्नतया इति च घ पुस्तके ।

सति "जलवृत्तित्वविशिष्टे"त्यादिग्रन्थ-विरोधात्। अभावे साध्यतावच्छेदकावच्छिन्नेत्यादि-विशेषण-वैयर्थ्याच्च। गोत्वाभावादेरपि गोत्वत्वेन प्रमेयाभावाभिन्नत्वात् (१) तद्घट-ध्वंसादेरपि तद्घट-ध्वंसकालावच्छेदेन तद्ध्वंसवदवृत्तित्वेन प्रमेयाभावाभिन्नतया तादृशप्रतियोगिताश्रय-सामानाधिकरण्य-सम्भवात्, अतः समनियताभावभेदाभिप्रायेणैव प्रथम-लक्षणं युक्तं (२) समनियताभावैक्याभिप्रायेण लक्षणान्तरमाह, "यत्समानाधिकरणाना"मिति।

दीधितिः।

यत्सामानाधिकरणानां साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्न-समानाधिकरण्यं तत्त्वं वा तत्। ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव, शेषं दर्शित दिशाऽवसेयमत आह, "प्रतियोग्यवृत्तिश्चे"ति (३)।

इति शिरोमणि-कृत-लक्षण-प्रकरणं समाप्तम्।

---

(१) भिन्नतया इति ग पुस्तके।

(२) लक्षणमुक्ता इति ग पुस्तके। लक्षणमुक्तमिति घ पुस्तके।

(३) ११३ पृ० ११ प मूलं द्रष्टव्यम्।

दीधिति-प्रकाशः।

तथाच तत्रातिव्याप्ति-वारणाय प्रतियोगितावच्छेदकाव-च्छिन्न-सामानाधिकरण्यं वाच्यं, तथाचासम्भवः वह्निमान् धूमात् सत्तावान् जातेरित्यादौ च जलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य गुण-वृत्तित्व(१)विशिष्टसत्ताभावस्य च तादृशस्य स्व-विशिष्टहेत्वधिकर-णावच्छेदेन प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरणत्वादतो "व्यापकतावच्छेदकरूपावच्छिन्न"त्यादि * जलादि(२)वृत्तित्ववि-शिष्टद्रव्यत्वत्वस्य वह्नित्वावच्छिन्नं प्रति, गुणादिवृत्तित्व(३)विशिष्ट सत्तात्वस्य सत्तात्वावच्छिन्नं प्रति व्यापकतानवच्छेदकत्वात् तत्तद-वच्छिन्नाभावमादाय न दोषः। यत्तु वह्नित्वेन ह्रदाभावस्य(४) हेत्वधिकरणे प्रतियोगि सामानाधिकरण्याभावादव्याप्तिरतः प्रति-

---

* ननु समनियताभावैक्यमते जलवृत्तित्वविशिष्टद्रव्यत्वाभावमादायाव्याप्ति-दानमसङ्गतं तादृशाभावस्य जलत्व-द्रव्यत्वान्यतरत्वेन जलत्व-द्रव्यत्वोभयाभावरूपत्वेन तत्प्रतियोगितावच्छेदकीभूतान्यतरत्वावच्छिन्न-समानाधिकरणत्वादिति चेन्न सामान्यधर्म्मेण विशेषाभावाभ्युपगम-पक्षे धूमसामान्याभावस्य प्रमेयत्वेन धूमाभाव-समनियततया तदात्मकस्य तादृश-प्रतियोगितावच्छेदकप्रमेयत्वावच्छिन्न समानाधि-करणत्वेन धूमवान् वह्नेरित्यादावतिव्याप्ति वारणार्थं यादृशप्रतियोगिताकाभाव-त्वावच्छेदकावच्छिन्नवद्वृत्तित्व-जगद्वृत्तित्वोभयाभाववत्त्वं तादृशप्रतियोगितावच्छेदका-वच्छिन्न-समानाधिकरण्यमित्यस्य विवक्षणीयत्वेन निरुक्तान्यतरत्वावच्छिन्नप्रति-योगितायास्तादृशत्वाभावादव्याप्तेः सुसङ्गतत्वादिति।

(१) गुणान्यत्व इति ग पुस्तके।

(२) त्यादि इति नास्ति ग पुस्तके।

(३) गुणान्यत्व इति ग पुस्तके।

(४) ह्रदत्वाभावस्य इति ग पुस्तके।

योगितावच्छेदकावच्छिन्नेति, ह्रदत्वेन वह्न्यभावस्य हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नासमानाधिकरणत्वादव्याप्तिरतो व्यापकतावच्छेदकरूपावच्छिन्नेति। तदसत् वह्नित्वेन ह्रदाभावस्यापि (१) ह्रदत्वेन वह्न्यभावाभिन्नतया प्रतियोगि-प्रतियोगितावच्छेदकावच्छिन्नाभ्यां सामानाधिकरण्य-सम्भवादिति (२)। "शेष"मिति, हेतु-सामानाधिकरण्यं हि हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकविशिष्ट(३)हेत्वधिकरण-वृत्तित्वं, साध्यतावच्छेदक-सम्बन्धेन साध्यतावच्छेदकविशिष्टसाध्य-निष्ठ-व्याप्यता-निरूपित-व्यापकता-घटक-सम्बन्धेन साध्यतावच्छेदक-सम्बन्धेन वा प्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्यम्। महाकालान्यत्व-विशिष्ट-घटत्ववान् कालत्वादित्यत्र प्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्याभावादेवातिप्रसङ्ग-भङ्गात् (४)। इत्थं च व्यापकताऽपि साध्यतावच्छेदकसम्बन्धेनैव (५) वाच्या, हेतुतावच्छेदक-सम्बन्धेन हेतुतावच्छेदकविशिष्टाधिकरणं सत् यत् स्व-विशिष्टं तदवच्छेदेन तादृशसामानाधिकरण्यमित्यादि। व्यावृत्तिस्तु पूर्व्वमेव प्रपञ्चितेति।

अत्र केचित् वह्नित्वेन धूमकालावच्छेदेन धूमवद्वृत्तित्व-विशिष्टस्याभावो धूमाभाव एव, द्रव्यवृत्तित्वेन धूमत्वगुणत्वान्य-

---

(१) ह्रदत्वाभावस्य इति क पुस्तके।

(२) इति इति क ग पुस्तकयोः।

(३) हेतुतावच्छेदकावच्छिन्न इति घ पुस्तके।

(४) अनतिप्रसङ्गात् इति ग घ पुस्तकयोः।

(५) एव इति नास्ति घ पुस्तके।

तरस्याभावो धूमभेद एव, अयोगोलक-भिन्नवृत्तित्वेनायोगोलक-भेदायोगोलकान्यभेदान्यतरस्याभावोऽयोगोलकान्यत्वाभाव एव (१) एतेषाञ्चाभावानां हेत्वधिकरणावच्छेदेनैव वह्नित्व-द्रव्यवृत्तित्वा-योगोलकभिन्नवृत्तित्व-रूपप्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्यात् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति। न च साध्य-व्यापकतावच्छेदकं यद्यत् प्रतियोगितावच्छेदकं प्रत्येकं तदव-च्छिन्न-सामानाधिकरण्यं वाच्यं (२) प्रकृते च धूमत्वायोगोलकान्य-त्वत्वादीनामपि तादृशत्वात्तदवच्छिन्नासामानाधिकरण्या (३) न्नातिव्याप्तिरिति वाच्यं साध्यतावच्छेदकावच्छिन्नेत्यादि-विशेषणस्य-वैयर्थ्यात्। गोत्वाभावादेरपि प्रमेयत्वेन गो-वृत्ति किमपि प्रमेयं नास्तीति धी-विषयाभावाभिन्नतया (४) प्रतियोगितावच्छेदकाव-च्छिन्न-समानाधिकरणत्वात्। किं चैवमभावे यावत्त्व-विशेषणमपि व्यर्थं स्यात्। न च प्रमेयत्वत्वेन घटाभावमादाय धूमवान् वह्ने-रित्यत्रातिव्याप्तिः, प्रमेयत्वत्वेन घटाभावस्यापि धूमत्वेन घटा-भावाभिन्नतया हेत्वधिकरणावच्छेदेन प्रतियोगितावच्छेदकाव-च्छिन्नासमानाधिकरणत्वादेवातिप्रसङ्ग-भङ्गात् (५)।

अत्र गुरवः वह्नित्वेन धूमवद्वृत्ति किमपि नास्तीति प्रतीतौ

---

(१) एव इति नास्ति क, ख, ग पुस्तकेषु।

(२) वाच्यमित्यत्र व्यक्तव्यमिति घ पुस्तके।

(३) तदवच्छिन्नसामानाधिकरण्याभावा इति ग पुस्तके।

(४) हेत्वधिकरणावच्छेदेन इति अधिक पाठः ग पुस्तके।

(५) अतिप्रसङ्गाभावात् इति ग घ पुस्तकयोः।

दण्डेन पुरुषो नास्तीत्यत्रैव विशिष्टधर्म्म एव प्रतियोगितावच्छेदकत्वेन (१) भासते, न तु शुद्धवह्नित्वम्, अन्यथा उक्त प्रतीतौ वह्नेरपि प्रतियोगित्वावगाहनेन प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिमत्ययोगोलके तदप्रत्यय-प्रसङ्गात्। न च (२) धूमवद्वृत्ति-किमपि नास्तीत्यंशे तादृश-निखिलस्यैव प्रतियोगित्वावगाहनेनान्यांशे वह्नित्व-विरहेण शुद्धवह्नित्वस्यैवावच्छेदकत्वमिति वाच्यं धूमवद्वृत्तित्वविशिष्ट-वह्नित्वस्यैव तादृश-वह्न्यंशे समानाधिकरणतयाऽवच्छेदकत्व-सम्भवादित्याहुः।

परे तु (३) स्व-न्यूनवृत्तित्व(४)समानाधिकरणधर्म्मानवच्छिन्ना या प्रकृताभाव(५)प्रतियोगिता तदवच्छेदकावच्छिन्नसामानाधिकरण्यं वाच्यं, वह्नित्वेन धूमवद्वृत्ति किमपि नास्तीत्यत्र प्रकृताभाव-प्रतियोगितायाः स्वन्यूनवृत्तिसमानाधिकरणतयैव (६) वह्नित्वमवच्छेदकमिति तद्व्युदासः। तादृशमव(७)च्छेदकं शुद्ध-समानाधिकरणं शुद्ध-व्यधिकरणं चेति। न च धूमाभावादेरपि धूमत्वेन प्रमेय-सामान्याभावाभिन्नतया धूमत्वमपि न तादृशमवच्छेदकमिति

---

(१) अवच्छेदकतया इति घ पुस्तके।

(२) वह्नित्वेन इति अधिक पाठः ग पुस्तके।

(३) अन्ये तु इति ग पुस्तके।

(४) स्व इति नास्ति घ पुस्तके।

(५) प्रकृताभाव इति नास्ति ग पुस्तके।

(६) प्रकृतप्रतियोगिता-न्यूनवृत्ति-समानाधिकरणतया इति घ पुस्तके।

(७) तादृशत्वाव इति घ पुस्तके।

वाच्यं प्रमेयसामान्याभावप्रतियोगितातो धूमत्वावच्छिन्नधूमाभाव-प्रतियोगितायाः विलक्षणत्वात् । तस्मात् स्व-न्यूनवृत्तिस्व समानाधिकरणधर्म्मानवच्छिन्नत्वेन तदवच्छेदक-धूमत्वावच्छिन्नासमानाधिकरणत्वेनैवानतिप्रसङ्गादिति दिक् ।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि दीधिति प्रकाशे शिरोमणिकृत लक्षणव्याख्या समाप्ता ।

---

अथ चक्रवर्त्तिलक्षण-प्रकरणे दीधितिः ।

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरण-साध्याभावस्य प्रतियोगितायाः अनवच्छेदकं, हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगि-व्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्न-सामानाधिकरण्यं व्याप्तिः । एवं च व्याप्तेरव्यभिचारि-सम्बन्ध-रूपताऽपि सङ्गच्छते । हेतौ साध्यतावच्छेदकावच्छिन्न-साध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठ-साध्याभाव-प्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् । अवच्छेदकत्वं चेह तत्पर्य्याप्त्यधिकरणत्वं, तेन विशिष्टवह्न्यभावस्य ह्रदत्व-वह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेद-

कत्वेऽपि वह्नित्वस्य न क्षतिः। सत्त्ववति गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिर्व्वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम्। भवति च गुणत्व-गुणावृत्तित्व-द्रव्यमात्रसमवेतत्वाद्यवच्छिन्न-प्रतियोगिताक-व्याप्यवृत्त्यभाव-प्रतियोगितावच्छेदक-गुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः।

इति दीधितौ चक्रवर्त्ति-लक्षण-प्रकरणं समाप्तम्।

---

चक्रवर्त्ति-लक्षण दीधिति-प्रकाशः।

चक्रवर्त्ति-लक्षणमाह, "केचित्त्वि"ति, इदं कपि-संयोगि एतत्त्वादित्यत्राव्याप्ति-वारणाय, "व्याप्यवृत्ते"रिति। वह्नित्वेन घटाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमतः "साध्ये"ति, समवायेन वह्न्याद्यभावस्य धूमादि-समानाधिकरणस्य प्रतियोगितावच्छेदकत्वाद्वह्नित्वादेरसम्भव इत्यतः साध्यतावच्छेदक-सम्बन्धावच्छिन्नप्रतियोगिताकत्वं, साध्यतावच्छेदकसम्बन्धातिरिक्त-सम्बन्धानवच्छिन्नप्रतियोगिताकत्वं वा अभावे देयम्। तेन व्यधिकरण धर्म्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकसम्बन्धानङ्गीकारेऽपि न क्षतिः। अत्र प्रतियोगि-व्यधिकरण-पद-दाने इदं वाच्यं ज्ञेयत्वादित्यत्र * प्रतियोगि-व्यधिकरण-साध्याभावाप्रसिद्धि-

* वह्निमान् धूमादित्यत्र घटत्वादिना तत्तद्वह्न्यभावमादायलक्षण-समन-

रिति तन्नोक्तम्। व्याप्यवृत्तित्वं च हेत्वधिकरणे बोध्यं, तेन कपि-
संयोगि एतत्त्वादित्यत्र कपि-संयोगाभावस्य गुणे अव्याप्यवृत्तित्वेऽपि
न क्षतिः। तत्र* हेत्वधिकरणीभूत यत्किञ्चिद्व्यक्ति-वृत्त्यभाव-प्रति-
योगितायाः सामानाधिकरण्येनानवच्छेदकं यदभाव-व्यक्तित्वं
तत्त्वं, यत्किञ्चित्त्व-प्रयोगाच्च(१) कपि-संयोगाभाव व्यक्तित्वस्य हेत्व
धिकरण(२)गुणनिष्ठाभाव-प्रतियोगितानवच्छेदकत्वात्, गुणे हि
संयोगाभावस्य व्याप्यवृत्तित्वमिति कपि-संयोगि सत्त्वादित्यादौ
नातिव्याप्तिः†। सर्व्वस्यैवाभावव्यक्तित्वस्य व्यधिकरणधर्म्मावच्छिन्ना-
भावप्रतियोगितावच्छेदकत्वात् असम्भव वारणाय सामानाधि-
करण्येनेति। शेषं पूर्व्वोक्तदिशाऽवसेयम्।

नन्‌ वह्नित्वावच्छिन्नघटाभावस्य घटत्वावच्छिन्नवह्न्यभावा-
भिन्नतया साध्याभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्य-

---

सम्भवासम्भवः वाच्यं ज्ञेयत्वादित्यत्र तु घटत्वादिना-साध्याभावस्यापि प्रति-
योगिव्यधिकरणतया-सम्भवादव्याप्तिः, अतः साध्याभावे प्रतियोगि-व्यधिकरणत्वञ्च
प्रतियोगित्वाश्रयानधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमिति भावः।

* व्याप्यवृत्तित्वञ्चेत्यर्थः।

† ननु यत्किञ्चित्त्वाप्रवेशे धूमवान् वह्नेरित्यादावप्यतिव्याप्तिः सम्भवति संयोगेन
धूमस्याव्याप्यवृत्तित्वादिति स्थलान्तरानुधावनं सन्दर्भ-विरुद्धमिति चेत्‌ संयोगि-
सत्त्वादित्यस्य दीधितिकृदुक्तसाध्यकत्वेन तस्यैवातिव्याप्तिः प्रदर्शिता, किञ्च संयोगेन
वृत्त्यस्याव्याप्यवृत्तित्वानङ्गीकारे धूमवान् वह्नेरित्यत्रातिव्याप्त्यसम्भवेन स्थलान्तरानु-
सरणमिति भावः।

(१) यत्किञ्चित्त्व-प्रवेशाच्च इति ग पुस्तके।

(२) सत्त्वाधिकरण इति ग, घ पुस्तकयोः।

व्याप्तिरतः * समनियताभावैक्यमतेन लक्षणमाह "हेतुसमानाधिकरणे"ति,† । ननु यत्किञ्चित्त्वं नैकं, तथाच हेत्वधिकरण-व्यक्तीः पृथग्ग्राहिकतया उपादाय तत्तद्व्यक्तिवृत्त्यत्यन्ताभावस्य प्रतियोगितानवच्छेदकं यद्यदभावव्यक्तित्वं तत्तदभावप्रतियोगितानवच्छेदकत्वं वक्तव्यं (१) तथाचातिगौरवम् । किञ्चाकाशाभावस्य कालिकसम्बन्धेनाभावे साध्ये आत्मत्वादि-हेतावव्याप्तिः । तत्र हेतुसमानाधिकरणस्य दैशिकतया (२) आकाशाभावात्मकाभावस्य व्याप्यवृत्तेः प्रतियोगिताया अवच्छेदकत्वात् तादृशाकाशाभावाभावत्व(३)स्येत्यत आह "प्रतियोगिव्यधिकरणस्ये"ति । केचित्तु भावाभाव-

---

* ननु असम्भव-सम्भवे अव्याप्तिदानमनुचितं तथाहि प्रमेयवान् वाच्यत्वादित्यादावपि व्यधिकरणसम्बन्धावच्छिन्न-साध्यतावच्छेदकनिष्ठावच्छेदकताक-प्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्तिः सम्भवतीति चेन्न साध्यतावच्छेदकता-घटकसम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकत्वाभावस्य निवेशादिति भावः ।

† ननु समनियताभावैक्यमते हेतुसमानाधिकरणाभावीय-साध्यनिष्ठ-प्रतियोगितानवच्छेदकत्व-विवक्षणेनैव घटत्वेन वह्न्यभावस्य व्यक्तित्वेन घटाभावाभिन्नत्वेऽपि तदीयव्यक्तिनिष्ठप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्तिविरहात् कृतं लक्षणान्तरानुसरणेनेति चेन्न विवक्षितव्याप्यवृत्तित्वस्य तत्तदभाव एव पर्यवसिततया व्याप्यवृत्ति-तत्तदभावप्रतियोगितावच्छेदकत्वाभावकूटस्य व्याप्तिघटकत्वेन व्याप्यवृत्ति-यावदभावान्तर्गत-घटाद्यभावनिरूपित-साध्यनिष्ठ-प्रतियोगितावच्छेदकत्वस्याप्रसिद्ध्या तदभावाप्रसिद्धेर्व्यभिचारान् धूमादित्यादावव्याप्तिरिति भावः ।

(१) वक्तव्यमित्यत्र वाच्यमिति ख पुस्तके ।

(२) दैशिकतया इति नास्ति ख पुस्तके ।

(३) तादृशाभावत्व इति ख पुस्तके ।

साधारणं व्याप्यवृत्तित्वं नैकं, भावनिष्ठव्याप्यवृत्तित्वस्य संयोग-
सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वात्मकत्वात्, अभा-
वनिष्ठव्याप्यवृत्तित्वस्य च विशेषणताविशेषसम्बन्धावच्छिन्नप्रति-
योगिताकाभावाप्रतियोगित्वात्मकत्वादत आह "प्रतियोगिव्यधि-
करणस्ये"ति व्याचख्युः ।

प्रतियोगि-व्यधिकरणत्वं च न प्रतियोगि-समानाधिकरण-
भिन्नत्वं, घटत्वेन किमपि प्रमेयं नास्तीति प्रतीति-सिद्धाभावमादाय
समनियताभावैक्यमते निखिलस्यैवाभावस्य प्रमेयमात्रप्रतियोगि-
कतया तादृशाभावाप्रसिद्धेः । नापि प्रतियोगितावच्छेदकाव-
च्छिन्न समानाधिकरणं यत्तद्भिन्नत्वं(१) संयोगि सत्त्वादित्यत्राति-
व्याप्तेः, व्यधिकरणधर्म्मावच्छिन्नाभावस्य तेनैव वारणे सामाना-
धिकरण्येनेत्यस्य वैयर्थ्यापाताच्च । न च साध्यतावच्छेदकसम्ब-
न्धेन (२) यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तदनव-
च्छेदकत्वं निरुक्त-लक्षणार्थः, वह्नित्वेन ह्रदो नास्तीत्यभाव-
प्रतियोगिताश्रय-ह्रदानधिकरण-धूमाधिकरणवृत्त्यभावीयतादृश-
प्रतियोगितावच्छेदकत्वाद्वह्नित्वस्याव्याप्तिरतः सामानाधिकरण्ये-
नेति वाच्यम् । गुणकर्म्मान्यत्वविशिष्ट-सत्तावान् जातेरित्यत्राति-
व्याप्तेः । न च तत्र प्रतियोगिता विशिष्ट एव पर्य्याप्ता, न तु सत्ता-
यामिति वाच्यं मानाभावात् ; तस्मात् यादृशप्रतियोगितावच्छेद-

(१) समानाधिकरणभिन्नत्वं इति ग, घ पुस्तकयोः ।
(२) साध्यतावच्छेदकसम्बन्धेन इति नास्ति घ पुस्तके ।

कविशिष्ट-प्रतियोग्यनधिकरणं यद्वेत्त्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वं वाच्यम्। अतएव द्रव्यत्वाभाववान् सत्त्वादित्यत्र द्रव्यत्वरूपाभावस्य नित्यत्वादि-विशिष्टद्रव्यत्वाभावरूपप्रतियोगिसमानाधिकरणत्वेऽपि(१) नातिव्याप्तिः। द्रव्यत्वाभावत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे सत्वेन द्रव्यत्वाभावत्वस्य तादृशप्रतियोगितावच्छेदकत्वात् (२)। यादृश (३) प्रतियोगितावच्छेदकविशिष्ट-प्रतियोग्यनधिकरणत्वं तु प्रतियोग्यंशे प्रकारतापन्न-तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताक(४) प्रतियोगिमद्भेदवत्वम्। भवति चैवं व्यधिकरणधर्मावच्छिन्नाभावोऽपि प्रतियोगि-व्यधिकरणः। धूमवति वह्नित्वेन घटो नास्तीति वत् धूमवान् वह्नित्वेन घटवान्नेति प्रतीति-बलेन प्रतियोगि-प्रकारीभूत-धर्मावच्छिन्नप्रतियोगितावच्छेदकताक-तद्व-(५) द्भेदस्याप्यभ्युपगमात्। अतएव समवायितया वाच्यत्ववद्भेदोऽपि (६) स्वीकृतो मिश्रैः, तथाच तादृशप्रतियोगितावच्छेदकत्वा द्वह्नित्वादेरव्याप्तिरतः सामानाधिकरण्येनेति। वह्नित्वेन वह्निधूमोभयं नास्तीत्यभाव-प्रतियोगितावच्छेदकत्व-पर्य्याप्तिस्तु न वह्नित्वे,

---

(१) सामानाधिकरण्येपि इति ग, घ पुस्तकयोः।

(२) सत्त्वेन द्रव्यत्वाभावत्वभिन्नत्वस्य स्वाश्रयाभावात् इति घ पुस्तके।

(३) यादृश इति नास्ति घ पुस्तके।

(४) प्रकारतापन्नं यत्प्रतियोगितावच्छेदकं तदवच्छिन्नप्रतियोगितावच्छेदकताक इति ग पुस्तके।

(५) तद्वदित्यस्य प्रतियोगिमदित्यर्थः।

(६) घटादौ इति अधिकपाठ ग पुस्तके।

किन्तु वह्निधूमोभयत्वेपीत्युक्तमतो नाव्याप्तिः। तादृशप्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वं च वक्तव्यं, अवच्छेदकपद दानाच्च (१) महानसीय वह्न्यभाव-प्रतियोगिताया अन्यूनवृत्तित्वेऽपि वह्नित्वस्य न क्षतिरिति केचित्। तादृशप्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसम्बन्धेन वाच्यं, तेन ज्ञानवान् द्रव्यत्वादित्यादौ समवायेन साध्यतायां नातिव्याप्तिः। महाकालो घटवान् कालपरिमाणादित्यत्र कालिकसम्बन्धेन प्रतियोगि-व्यधिकरणः घटत्वेन पटाभाव एव महाकालो घटत्वेन पटवानेति प्रत्ययादिति।

केचित्तु साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिता (२) तदवच्छेदक(३)विशिष्टोभयानधिकरणं हेत्वधिकरणं* तादृशप्रतियोगितायाः, साध्यतावच्छेदकसम्बन्धसामान्ये यदभावीय यादृशप्रतियोगिताश्रयप्रतियोगिकत्व–यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व-हेत्वधिकरणीभूत यत्किञ्चिद्व्यक्त्यनुयोगिकत्व एतत्त्रितयाभाव-स्तादृशप्रतियोगिताया वा अनवच्छेदकत्वं वाच्यम्। वह्नित्वावच्छिन्न-ह्रदनिष्ठ(४)प्रतियोगिताया वह्नित्वादेरवच्छेदक-

* यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्व यत्प्रतियोगित्वावच्छिन्नाधिकरणत्वोभयाभाववत्त्वं हेत्वधिकरणे बोध्यं, तेन धूमवान् वह्नेरित्यादौ धूमसामान्याभावप्रतियोगिताश्रय-तदवच्छेदकान्यतरोभयाप्रसिद्धावपि नातिव्याप्तिरिति तु तत्त्वम्।

(१) पदोपादानाच्च इति घ पुस्तके।

(२) प्रतियोगिताश्रय इति ग, घ पुस्तकयोः।

(३) यादृशप्रतियोगितावच्छेदक इति ग, घ पुस्तकयोः।

(४) निष्ठ इत्यत्र वृत्ति इति ग, घ पुस्तकयोः।

तया ऽव्याप्तेर्वारणाय-सामानाधिकरण्येनेत्याहुः। तच्चिन्त्यम्। प्रतियोगिभेदेन प्रतियोगिता-भेदे वह्निमान् धूमादित्यत्र महानसीयवह्निनिष्ठा या प्रतियोगिता तदाश्रय-वह्नित्वविशिष्टोभयानधिकरणत्वस्य (१) पर्व्वतादौ सत्त्वात्, उत्पत्तिकालावच्छिन्न-वह्न्यभावस्यापि प्रतियोगि-व्यधिकरणत्वादव्याप्तिः स्यात्। प्रतियोगि-भेदेऽपि प्रतियोगितावच्छेदकैक्येन प्रतियोगितायाः ऐक्ये तु वह्नित्वेन वह्नि-भिन्नं नास्तीत्यभावस्य वह्नि-भिन्न-निष्ठ-व्यधिकरण-धर्म्मावच्छिन्ना एकैव प्रतियोगिता सैव च वह्नित्वेन ह्रदो नास्तीत्यादिनाऽपि प्रतीयते, न तु ह्रदमात्रवृत्तिरन्या गौरवात्, तथाच वह्नि-भिन्नस्य यस्य कस्यचित् वह्नित्वावच्छिन्नस्य चोभयस्याधिकरणमेव सर्व्वं धूमाधिकरणमिति, व्यधिकरण-धर्म्मावच्छिन्नाभावस्य न प्रतियोगि-वैयधिकरण्यमिति सामानाधिकरण्येनेति व्यर्थमेव स्यादिति*। न च घटत्वेन वह्निर्नास्तीत्यभाव-प्रतियोगि-

---

* ननु प्रतियोगितावच्छेदकाभेदेन प्रतियोगितैक्ये प्रतियोग्यंशे प्रकारतापन्नेत्यादिकल्पे स्वमतेऽपि सामानाधिकरण्येनेत्यस्य वैयर्थ्यमिति प्रतियोगिभेदेन तद्भेदे तु वह्निसामान्याभावमादाय दोष इति तथाच "यत्रोभयोः समो दोषः परिहारोऽपि तत् समः नैकः पर्य्यनुयोज्यो हि तादृगर्थविचारणे" इति न्यायेनैकस्य पर्य्यनुयोगो न युक्त इति चेन्न एतादृश-स्थलानुसन्धाने तु विषयितासम्बन्धेन घटत्वेन घटस्य साध्यत्वे प्रतियोगित्वरूपेण घटाविषयक-तज्ज्ञानत्वस्य हेतुत्वे अव्याप्तेर्व्वारणायैव एतत्कल्पस्य परित्यागोयुक्तः, अत्र हेतुमति साध्यतावच्छेदकविषयिता-सम्बन्धावच्छिन्न-प्रतियोगित्वावच्छिन्नाधिकरणत्व-साध्यतावच्छेदक-घटत्वावच्छिन्नाधिकरणत्वयोरभाव-सत्त्वेन साध्याभावस्य वक्तव्यघटकत्वात् इति चिन्तनीयम्।

(१) धर्माधिकरणे इति अधिक पाठः ग. घ पुस्तकयोः।

तायां वैयधिकरण्येन घटत्वमिव, सामानाधिकरण्येन वह्नित्व मप्यवच्छेदकमित्यव्याप्तिरिति वाच्यम् । मानाभावात्, प्रतियोगितावच्छेदकस्य यद्धर्म्मविशिष्टावृत्तित्वं तद्धर्म्मविशिष्टप्रतियोगिविषयकमेव व्यधिकरण-धर्म्मावच्छिन्नाभाव-भानं, तेन घटत्वेन प्रमेयं नास्तीत्याकारेण न घटत्वावच्छिन्नवह्न्यभाव-भान(१)-मिति ।

"एवं चे"ति । तथा चाव्यभिचारस्य पारिभाषिकत्वानिर्व्वचनेऽपि न क्षतिः । "तदि"ति, पर्य्याप्तिश्च द्वयो, विशेषणविशेष्य-भावानापन्ने तदापन्ने च, यथा वह्नि-घटौ न स्तः, महानसीयवह्नि-र्नास्तीत्यत्र च, प्रथमे वह्नित्वे द्वित्वे घटत्वे च परस्परविशेष्य-विशेषण-भावानापन्ने तत्पर्य्याप्तिः, महानसीयवह्नित्वे तु विशेष्य-विशेषणभावापन्ने विशिष्ट इति भेदः । "विशिष्टवह्न्यभावस्य" महानसीयत्वविशिष्टवह्न्यभावस्य । ननु विशिष्टस्यातिरिक्तत्व मते वह्नित्वमनवच्छेदकमेवानतिरिक्तत्व मतेऽपि महानसीयत्ववह्नित्व वैशिष्ट्यमेव परस्परासम्बन्धेन तदवच्छेदकमिति नोक्त दोष इत्यत आह "कृदत्व"ति । ननु कृदत्व वह्नित्वाभयाभ्यां वह्नि-र्नास्तीत्यभावस्य प्रतियोगितायां यत्तदुभयमवच्छेदकं, तत्र सामानाधिकरण्येन, तदुभयत्वावच्छिन्नस्य प्रतियोगिताधिकरणावृत्तित्वात्, गुरुवह्नित्वस्य तत्सामानाधिकरण्येऽपि तस्यावच्छेदकत्वाघटकत्वात् लक्षणे च तथैव विवक्षणात्, यदाह सामा-

(१) घटत्वेन वह्न्यभावस्य भान इति च पुस्तके ।

नाधिकरण्येनेति चेन्न प्रतियोगिता-समानाधिकरणं सत् यदव(१)-च्छेदकं तदन्यत्वमात्रोक्तौ (२) उक्तदोषेण * तथा विवक्षणात् †। वस्तुतस्तु सामानाधिकरण्येनानवच्छेदकत्व-विवक्षणेऽपि वह्नि-ह्रदोभयं नास्तीत्यभावे वह्नित्व-ह्रदत्व-द्वित्वादीनां सामानाधि-करण्येणैवावच्छेदकत्वात् तदभिप्राय कोऽयं (३) ग्रन्थः।

ननु संयोगि सत्त्वादित्यत्रातिव्याप्तिः, संयोगाभावस्याव्याप्य-वृत्तितया व्याप्यवृत्त्यभावान्तर-प्रतियोगितानवच्छेदकत्वात् संयोग-त्वस्येत्यत आह "सत्त्ववतो"ति। "व्याप्यवृत्ति"रिति तथाच हेत्व-धिकरणीभूत-यत्किञ्चिद्व्यक्ति इत्यादिना पूर्व्वनिरुक्तं हेत्वधिकरणे व्याप्यवृत्तित्वं बोध्यमित्यर्थः। इदमुपलक्षणं प्रतियोगि-व्यधिक-रणोऽपि बोध्यः।

ननु गुरुधर्म्मेण साध्यतायां व्यभिचारिण्यतिव्याप्ति-वारणाय-पारिभाषिकमवच्छेदकत्वमवश्यं वाच्यं, तथाच व्याप्यवृत्तित्वं प्रति-योगिव्यधिकरणत्वं वा अभावे विशेषणं व्यर्थमित्यभिप्रायेणाह "वक्ष्यमाणं वे"ति, सिद्धान्तलक्षणे वक्ष्यमाणमित्यर्थः। तत्र हेतु-समानाधिकरणाभाव-प्रतियोगितायाः सामानाधिरण्येनावच्छे-दकं ‡ यद्विशिष्ट सम्बन्धिनिष्ठाभाव-प्रतियोगितायाः सामानाधि-

* उभयाद्यवच्छिन्नाभावमादाय दत्तदोषेणेत्यर्थः।

† पर्य्याप्त्यधिकरणत्वविवक्षणादित्यर्थः।

‡ असम्भववारणार्थं सामानाधिकरण्येनेति भावः।

(१) यत्सदव इति घ पुस्तके।

(२) मात्रस्योक्तौ इति घ पुस्तके।

(३) तदभिप्रायेणायं इति ग पुस्तके।

करणेनानवच्छेदकं तत्पारिभाषिकमवच्छेदकं, तदन्यत्वं साध्यताव-च्छेदके वाच्यमित्यर्थः । तेन* सत्तावान् जातेरित्यत्र जात्यधिकरण-गुणादिनिष्ठाभाव-प्रतियोगितावच्छेदक-विशिष्ट-सत्तात्वानतिरिक्त-वृत्तित्वेऽपि सत्तात्वस्य न क्षतिः । न वा तादृश प्रतियोगिताया अवच्छेदकं यत्तदवच्छिन्नाभाववत्सम्बन्धं यद्विशिष्टसामान्यं तत्पारि-भाषिकमवच्छेदकमित्युक्तौ सत्तावान् प्रमेयत्वादित्यत्र तादृशाव-च्छेदकं सत्तात्वं तदवच्छिन्नाभाववति सामान्यादौ समवायेन सम्ब न्धित्वस्याप्रसिद्ध्या तस्य पारिभाषिकावच्छेदकत्व क्षतिः । जात्य धिकरणगुण-निष्ठाभाव-प्रतियोगितावच्छेदक विशिष्टसत्तात्वस्य सत्तात्व विशिष्टसम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकत्वाभा वात्, मेयत्वाधिकरण सामान्यनिष्ठाभाव प्रतियोगितावच्छेदक सत्तात्वस्य सत्तात्वविशिष्टसम्बन्धिनिष्ठाभाव प्रतियोगितानवच्छेद-कत्वाच्चेति ।

अत्र प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वं, विशेषणताविशेषा-वच्छिन्नत्वं वा वाच्यं, तेन साध्यतावच्छेदकसम्बन्धेनाभाव विवक्षणे संयोगेन साध्यतायां तादृशावच्छेदकाप्रसिद्धिर्न भवतीति । इत्थञ्च धूम सामानाधिकरण्याभाव प्रतियोगिताया विशेषणताविशेषाव च्छिन्नाया अवच्छेदकं घटत्वप्रकारकप्रमा विशेष्यत्वत्वं तत्त्, घटत्व-विशिष्ट सम्बन्धिनिष्ठाभावीय- तादृश प्रतियोगितानवच्छेदकमतो घटत्वादेव तादृशमवच्छेदकं, तदन्यत्वस्य वह्नित्वादौ सत्त्वान्नाप्रसङ्ग इति । धूमवान् वह्नेरित्यादौ तु वह्निसमवेताभावीय तादृश-

* यथाश्रुतानतिरिक्तवृत्तित्वादिरूपावच्छेदकत्वानिवेशेनेत्यर्थः ।

प्रतियोगितावच्छेदकमयोगोलकान्यत्व-प्रकारक–प्रमा-विशेष्यत्वस्य तद्धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीय–तादृशप्रतियोगितानवच्छेदकमतो धूमत्वाद्येव तादृशमवच्छेदकमतो न तत्रातिप्रसङ्ग इति। अधिकमग्रे प्रपञ्चयिष्यामः।

ननु गुणत्वमादाय संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं, गुण–सामान्याभावस्योत्पत्तिकालावच्छेदेनावयविनि वर्त्तमानतया संयोगत्वविशिष्टसम्बन्धिनिष्ठाभाव-प्रतियोगितानवच्छेदकत्वाभावादत आह, "गुणावृत्ती"ति। गुणावृत्तेरभावः संयोगवति नास्ति, उत्पत्तिकालेऽपि गुणावृत्तिद्रव्यत्वादिजातेः सत्त्वादिति भावः।

ननु इदं संयोगि गुणान्यत्वविशिष्ट-सत्त्वादित्यत्र गुणावृत्त्यभावो न हेतुसमानाधिकरण इत्यतः संयोग-साध्यक व्यभिचारिचारिमात्र यादृशाभावमादाय नातिव्याप्तिस्तं दर्शयति "द्रव्ये"ति द्रव्यसमवेतत्वं गौरवेण न प्रतियोगितावच्छेदकं, तथात्वेऽपि वा तदवच्छिन्नाभावो न गुणादौ, सत्ताया स्तत्र सत्त्वादतो "मात्रे"ति। द्रव्यान्यासमवेतत्वं तदर्थः। "व्याप्यवृत्ती"ति तथाच संयोत्व-विशिष्टसम्बन्धिनिष्ठाभाव-प्रतियोगितावच्छेदकत्वं न तस्येति न संयोगत्वस्य परिभाषिकावच्छेदकत्व-क्षतिरिति: भावः।

यत्तु यत्किञ्चिदधिकरणावच्छेदेन व्याप्यवृत्तित्व-निर्व्वचने गौरवादाह "वक्ष्यमाणं वे"ति तथाच सामान्यत एव व्याप्यवृत्तित्वं निवेशनीयमिति भावः शेषं पूर्व्ववदिति, तत्र साध्यतावच्छेदकसम्बन्धेनाभाव-विवक्षणे संयोगेन साध्यतायां तादृशा-

वच्छेदकाप्रसिद्धेः, तादृश व्याप्यवृत्त्यभाव-प्रतियोगितावच्छेदकस्य गगनत्वस्य घटत्वादि-विशिष्टसम्बन्धिनिष्ठ-तादृशाभाव-प्रतियोगितायाः अप्यवच्छेदकत्वात् । साध्यतावच्छेदकसम्बन्धेन गगनत्व-विशिष्टसम्बन्धिनश्चाप्रसिद्धेः घटत्वगगनत्वादीनां तादृशावच्छेद-कत्वा-सम्भवादिति दिक् ।

इति श्रीमद्भवानन्दीये दीधितिप्रकाशे चक्रवर्त्ति-लक्षणव्याख्या समाप्ता ।

---

अथ प्रगल्भ-लक्षण-प्रकरणे दीधितिः ।

साध्यतावच्छेदकावच्छिन्न-साध्यसामानाधिकरण्या-वच्छेदक-स्वसमानाधिकरण-साध्याभाववत्त्वकत्वं, यत्-समानाधिकरण-साध्याभाव-प्रमायां साध्यवत्ता-ज्ञान-प्रतिबन्धकत्वं नास्ति तत्त्वं वा व्याप्तिरिति तु न युक्तं, सर्व्वत्र साध्याभावपद-वैयर्थ्यात् । यत्तु सध्याभाववति यद्वृत्तौ प्रकृतानुमिति-विरोधित्वं नास्ति तत्त्वं व्याप्तिरिति तन्न अनुमित्यविरोधित्व-ज्ञानस्यानुमिति-जनकत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभि-चारिण्यतिप्रसङ्गात् ।

इति दीधितौ प्रगल्भ-लक्षण-प्रकरणं समाप्तम् ।

---

प्रगल्भ-लक्षणे-दीधिति-प्रकाशः।

प्रगल्भीयं लक्षणमाह "साध्ये"ति। गुणान्यत्वविशिष्ट-सत्तावान् जातेरित्यत्र जाति-समानाधिकरण-यावदभावानां सत्ता-रूपसाध्य-सामानाधिकरण्यत्वादतिव्याप्तिरतः "साध्यतावच्छेदका-वच्छिन्ने"ति। तदर्थश्च साध्यतावच्छेदकसम्बन्धेन साध्याधि-करणे दैशिकविशेषणतया-वृत्तित्वं, तेन समवायेन साध्यतायां ज्ञानवान् द्रव्यत्वादित्यादौ नातिप्रसङ्गः, न वा अयं काल-परि-माणवान् प्रमेयत्वादित्यादौ सर्व्वेषामेव साध्याभावानां काले कालिकसम्बन्धेन वृत्तेरतिप्रसङ्गः। न चैवं कालिकसम्बन्धा-वच्छिन्न-प्रतियोगिताके आकाशाभावस्याभावे साध्ये मेयत्वादि-हेतावतिव्याप्तिः, अत्र साध्याभावस्याकाशाभावात्मकस्य दैशिक-विशेषणतया सर्व्वत्र सत्त्वादिति वाच्यम्। दैशिकविशेषणतया कालभिन्नवृत्तित्वविशिष्टस्य योऽभावस्तस्यापि साध्याभावात्मकस्य कालमात्रवृत्तितया साध्य-सामानाधिकरण्याभावात्। अव-च्छेदकत्वञ्चानतिरिक्तवृत्तित्वं, तेन धूमवान् वह्नेरित्यादौ व्यधि-करण-धर्म्मावच्छिन्नस्य साध्याभावस्य धूम-समानाधिकरणत्वेऽपि न क्षतिः। "स्वे"ति हेतुतावच्छेदकावच्छिन्न-हेतोर्हेतुतावच्छे-दकसम्बन्धेन यदधिकरणं दैशिकविशेषणतया तद्वृत्तित्वमित्यर्थः। तेन द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वात्, अयमात्मात्मज्ञानात्, जातिमान् सत्त्वादित्यादौ ( हेतुतावच्छेदकसमवायसम्बन्धेन सत्त्वाधिकरणे स्पन्दादौ वर्त्तमानस्य समवायेन जाति-सामान्याभावस्य यथोक्तसाध्याभावस्य साध्य-सामानाधिकरण्या-

भावात्) (१) नाव्याप्तिः। धूमवान् वह्नेरित्यादौ विशेषणतया योगोलकावृत्तेरभावस्यापि साध्याभावतया धूम-सामानाधिकरण्याभावादेव नातिव्याप्तिः।

"यत्समानाधिकरणे"ति। यत्समानाधिकरणा ये साध्याभावा स्तत्प्रमासामान्ये इत्यर्थः। तेन अधिकरणधर्म्मावच्छिन्न-साध्याभाव-प्रमायां साध्यवत्त्व-ज्ञानाप्रतिबन्धकत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। प्रमात्वञ्च यावद्भ्रमभिन्नत्वं, तेनाव्याप्यवृत्तेः साध्याभावस्य व्याप्यवृत्तित्व-भ्रमदशायां अधिकरण-धर्म्मावच्छिन्न साध्याभावस्य साध्यतावच्छेदकावच्छिन्न-साध्याभावत्व-भ्रमदशायां च साध्यवत्त्व-ज्ञान प्रतिबन्धकत्वेऽपि न क्षतिः। साध्यवत्त्वज्ञान प्रतिबन्धकत्वञ्च हेत्वधिकरणमात्रवृत्तियद्धर्म्मतावच्छेदकं * तदवच्छेदेन यत्साध्यवत्त्व-ज्ञानं तत्प्रतिबन्धकत्वं, तेन

* ननु हेतुतावच्छेदकधर्म्मावच्छिन्नावच्छेदकताकविशेष्यताकसाध्यवत्ताज्ञानविरोधित्वनिवेशेनैव दोषवारणसम्भवे हेत्वधिकरणमात्रवृत्तिधर्म्मावच्छिन्नत्वनिवेशो व्यर्थ इति चेन्न वह्निमान् महानसीयवह्नेरित्यादावव्याप्तेः, महानसीयवह्निमान् वह्न्यभाववान् इत्याकारकज्ञानस्याहार्य्यतया महानसीयवह्निमान् वह्निमान् इत्याकारकज्ञानीयप्रतिबन्धकत्वाप्रसिद्धेरिति। न च साध्यवत्ताज्ञानप्रतिबन्धकत्वं कामिनीजिज्ञासायां प्रसिद्धं ज्ञानत्वावच्छिन्नं प्रत्येव कामिनीजिज्ञासात्वेन प्रतिबन्धकत्वादिति वाच्यं, संयोगाभाववान् संयोगादित्यादौ संयोगवद्वृत्तिकसंयोगाभावज्ञानस्याहार्य्यतया तत्प्रतिबन्धकत्वाप्रसिद्ध्याऽव्याप्तेः। तस्याहार्य्यत्वेन कामिनीजिज्ञासाया अपि तत्प्रतिबन्धकत्वासम्भवात्, कामिनीजिज्ञासाभिन्नप्रतिबन्धकतानिरूपितप्रतिबन्धकतायामपि अनाहार्य्यत्वस्य प्रविष्टत्वात्। यदि कामिनीजिज्ञासां प्रति आहार्य्यज्ञानस्यापि प्रतिबध्यत्वमङ्गीक्रियते तदा संयोगवान् संयोगाभावादित्यत्रापि व्याप्तिर्बोध्या इति भावः।

(१) ( ) चिह्नमध्यस्थपाठो नास्ति घ पुस्तके।

वह्निमान् धूमादित्यादावुत्पत्तिकालावच्छेदेन धूमसमानाधिकरणस्यैवाभावस्य ह्रदादौ प्रमायाः साध्यवत्ता-ज्ञान-विरोधित्वेऽपि न क्षतिः। हेतुतावच्छेदकावच्छिन्नत्वादेः सम्बन्ध-भेदादेश्च विवक्षणं तत्प्रयोजनञ्च पूर्व्ववद्बोध्यम्। "सर्व्वे"ति तादृशसामानाधिकरण्यावच्छेदकं स्वसमानाधिकरणत्वकत्वमित्यत एवाद्यस्य, यत्समानाधिकरण-प्रमात्वावच्छेदेन तादृश-प्रतिबन्धकत्वं, नास्तीत्यत एव द्वितीयस्य समकत्वादिति। *

प्रथमलक्षणे साध्यतावच्छेदकावच्छिन्न-प्रतियोगि-सामानाधिकरण्यं, द्वितीयलक्षणे साध्यतावच्छेदकावच्छिन्न-प्रतियोगिमत्ताज्ञानं वाच्यं, इत्यञ्च हेतुसमानाधिकरणघटाभावे तत्प्रमायाश्च वह्नित्वावच्छिन्नघटस्याप्रसिद्ध्या तत्सामानाधिकरण्यस्य तज्ज्ञान-प्रतिबन्धकत्वस्य चाभावादसम्भव इत्युभयत्र साध्याभावपदम्। अवच्छेदकत्वे चाऽनतिरिक्तवृत्तित्वरूपे साध्यतावच्छेदकावच्छिन्न-प्रतियोगि-सामानाधिकरण्याभावस्याखण्डस्यैव, प्रतिबन्धकत्वे च कार्य्यानुत्पत्तिनियतत्वरूपे साध्यतावच्छेदकावच्छिन्न-प्रतियोगि-मत्ताज्ञानाभावस्य चाखण्डस्यैव निवेशादुभयत्र प्रतियोगिपदवैयर्थ्यमिति तु केचित्।

---

* न च द्वितीयलक्षणे साध्याभावपदानुपादाने यत्समानाधिकरणप्रमा-सामान्यान्तर्गत-त्रिविधरूपप्रमायां वह्निमत्त्वात्मकसाध्यवत्ताज्ञान-प्रतिबन्धकत्व सत्त्वादसम्भव इति वाच्यं साध्यवत्त्वप्रकारतावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य विवक्षितत्वात् तस्य च त्रिविधरूपप्रमायामसत्त्वात् तस्याः प्रतिबध्यतावच्छेदकानवच्छिन्नत्वमिति भावः।

साध्याभावपदं सार्थकीकर्त्तुं प्रकारान्तरेण दूषयितुं तन्मत-मुपन्यस्यति "यत्त्वि"ति "यद्वृत्तौ" यन्निष्ठ-तादृशवृत्तित्वसामान्ये। तेन * व्यधिकरणधर्म्मावच्छिन्न-साध्याभाववद्वृत्तित्वस्य व्यभिचारि-हेतुनिष्ठस्याविरोधित्वेऽपि न क्षतिः। विरोधित्वञ्च ज्ञाननिष्ठ-विरोधितायां विषयतयाऽवच्छेदकतापर्य्याप्त्यधिकरणत्वम्। व्यभि-चारिहेतुनिष्ठ-केवलवृत्तित्वस्यातथात्वात् "साध्याभाववती"ति। न चैवमपि व्यभिचारिण्यतिव्याप्तिः, साध्यतावच्छेदकावच्छिन्न-साध्याभाववद्वृत्तित्वेनैव विरोधितया साध्याभाववद्वृत्तित्वस्या-तथात्वादिति वाच्यं, एतस्य दूषणस्य स्वयमेवोद्भावनीयत्वादिति।

व्यभिचारिणि साध्याभाववद्वृत्तित्वेनासाधकत्वानुमितेर्जनना-दनुमितिसामान्य-विरोधित्वं न सम्भवतीत्यत आह, "प्रकृते"ति, साध्यतावच्छेदकसम्बन्धेन तत्साध्यकतत्साधनकानुमितिकारणी-भूतज्ञानविरोधित्वमित्यर्थः। तेन समवायावच्छिन्नप्रतियोगिता-कवह्न्यभाववति धूम इति ज्ञानस्य समवायेन वह्न्यनुमिति-विरो-धित्वेऽपि व्यभिचारधियोऽनुमित्यविरोधित्वेऽपि न क्षतिः।

यत्तु अनुमिति विरोधित्वम् अनुमिति-प्रतिबन्धकत्वं तच्च न व्यभिचारि इत्यतः "प्रकृते"ति विशेषणं, तथाचानुमितिकार-णीभूतज्ञान-प्रतिबन्धकज्ञानविषयत्वं प्रकृतानुमिति-विरोधित्वम् तथाच (१) भ्रम-भिन्न-साध्याभाववति हेतुरित्याकारक यद्धेतुविषय-

* सामान्यपदोपादानेनेत्यर्थः।

(१) यत्तु इति च पुस्तके।

वा ज्ञानसामान्ये अनुमितिकारणीभूतज्ञानप्रतिबन्धकत्वाभावस्तत्त्वं फलितोऽर्थः, तेन घटाभाववद्वृत्तिर्हेतु(१)रिति ज्ञानस्य घटानुमिति-विरोधित्वादसम्भव इत्यत: "साध्याभाववती"ति। विशेषणान्तरप्रयोजनञ्च पूर्व्ववदिति। तत्र एवमपि साध्याभाववद्वृत्ति-र्हेतुर्घटाभाववद्वृत्तिश्चेति ज्ञानस्य घटानुमिति-विरोधित्वेनासम्भवात्। न च साध्याभाववद्वृत्तित्वं (२) न प्रतिबन्धकतायां विषयतयावच्छेदकं, * साध्याभाववद्वृत्तित्व (३) मेव यत्र घटानुमितौ (४) हेतुतावच्छेदकं तत्र तथात्वस्यापि सम्भवात्। न च तत्रावच्छेदकताया न पर्य्याप्ति(५)रिति † वाच्यं तथा सति केवल-वृत्तित्व-विशिष्टहेतौ तत्पर्य्याप्त्यभावेन साध्याभाववतौ(६)त्यस्य उक्त-व्यावृत्ति-दानस्यासङ्गतिरिति दिक्।

"अनुमित्यविरोधित्वज्ञानस्ये"ति, अनुमिति-विरोधित्वम् अनुमिति-कारणीभूतज्ञान-विरोधित्वमित्युक्तं तत्कारणञ्च प्रकृतव्याप्ति-ज्ञानं, तद्विरोधि च न साध्याभाववद्वृत्तित्व-ज्ञानं, वह्निप्रतियोगिकाभाववद्वृत्तिर्धूम इति ज्ञाने सत्यपि उक्तव्याप्ति ग्रहात्, किन्तु

---

* तथाच तादृशप्रतिबन्धकतायां विषयतयाऽवच्छेदकत्वाभाववत्तादृशवृत्ति-यद्धेतुत्वं तत्त्वमिति लक्षणं कर्त्तव्यमिति भावः।

† तथाच पर्य्याप्तिसम्बन्धेनावच्छेदकत्वाभावो वक्तव्य इति भावः।

(१) हेतुरित्यत्र मेयत्वमिति घ पुस्तके।

(२) वृत्तिहेतुमिति घ पुस्तके।

(३) वृत्तिहेत्व इति घ पुस्तके।

(४) घटानुमिति इति घ पुस्तके।

(५) अवच्छेदकतायामपर्य्याप्ति इति घ पुस्तके।

(६) केवलसाध्याभाववती इति ग पुस्तकयोः।

अनुमिति-विरोधिसाध्याभाववद्वृत्तित्वज्ञानं * तथा (१) तथाच-तादृशविरोधित्वघटितलक्षणकरणे असम्भवः, सद्धेतौ प्रकृतानुमितिविरोधिसाध्याभाववद्वृत्तित्वाभावात्, इतरथा तु व्यभिचारिण्यतिव्याप्तिरिति भावः † ।

यदि चानुमितिपदं प्रकृतव्याप्त्यनुमितिपरं तच्च साध्याभाववद्वृत्तिर्हेतुरित्याकारकं, तथाच यद्धेतुनिष्ठतत्तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वसामान्ये साध्याभाववद्वृत्तिर्हेतुरित्याकारकज्ञान-विरोधि-ज्ञान विषयतावच्छेदकत्वाभावस्तत्त्वं व्याप्तिरित्यर्थः क्रियते तदा नायं दोष इति मन्तव्यम् ।

इति श्रीमद्भवानन्दीये दीधिति-प्रकाशे प्रगल्भ-लक्षण-व्याख्या समाप्ता ।

---

अथ सिंह-व्याघ्र-लक्षण-प्रकरणे दीधितिः ।

## केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया

---

* साध्याभाववद्वृत्तित्वं अनुमिति-विरोधि इत्याकारकं ज्ञानमित्यर्थः ।

† अयं भावः तादृशानुमिति-विरोधित्वाभावस्य व्याप्तित्वे एतादृशव्याप्तिज्ञानमेवानुमिति-कारणं वाच्यं एवञ्च धूमवान् वह्नेरित्यादौ सर्वत्र व्यभिचारिण्यतिप्रसङ्गः वह्निनिष्ठतादृशवृत्तित्वे अनुमितिकारणीभूततादृशानुमित्यविरोधित्वरूपव्याप्तिज्ञानप्रतिबन्धकज्ञानविषयत्वाभावसत्त्वात्, एतादृशानुमित्यविरोधित्वरूपव्याप्तिज्ञानं प्रति साध्याभाववद्वृत्तित्वज्ञानस्य प्रतिबन्धकत्वाभावादित्यर्थ इति ।

(१) तथा इति नास्ति ग पुस्तके ।

ये तत्तदधिकरण-वृत्तित्वाभावास्तद्वत्त्वं तत्त्वं, साजात्यञ्च समानासमानाधिकरण--धर्म्मावच्छिन्न–प्रतियोगिताक-त्वान्यतररूपेण, साध्याभावश्च पूर्व्वोक्त-द्वितीय-रीत्या प्रत्येतव्यो व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिव्यधिकरणो वा, तेन तत्तत्साध्यव्यक्तेरव्याप्य-वृत्तेर्वा साध्यास्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः। तद्वद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्तित्वव्यापक-व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताको बोध्यः, तेन साध्याभाववद्व्यक्तिविशेष-वृत्तित्वस्य पार्थिवत्वादि-विशे-षितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्या-भावमादाय नातिप्रसङ्गः। अत्र च हेतुतावच्छेदकसम्ब-न्धेन साध्याभाववद्वृत्तित्वं बोध्यं, तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः। इत्थञ्च साध्या-भावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानो ग्राह्यः, तेन जातिमान् सत्त्वादित्यादौ हेतु-तावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः।

---

मिश्र-लक्षणे दीधिति-प्रकाशः।

मिश्रलक्षणमेव परिष्कृत्य दर्शयति "केचित्त्वि"ति। साजात्यं

सादृश्यं, तच्च तद्वृत्तिधर्मवत्त्वं, (१) तादृशधर्म एव तृतीयार्थेऽन्वेति, तृतीयार्थस्याभेदः धान्येन धनवानितिवत्, तथाचाह्लादकत्वेन चन्द्र-सदृशं मुखमित्यत्राह्लादकत्वाभिन्नचन्द्रवृत्तिधर्माश्रयो मुखमिति शाब्दबोधः। एवञ्च तादृशान्यतररूपेण यावत्साध्याभावसजातीया इत्यत्र तादृशान्यतररूपाभिन्नयावत्साध्याभाववृत्तिधर्मवन्त इत्यर्थः। तथाच व्यतिरेकि-साध्यकेऽव्याप्तिस्तत्र तादृश-यावत्साध्याभाववृत्त्यन्यतररूपस्याप्रसिद्धेरतः "प्रत्येक"मिति। तेन तत्तदभावानां प्रातिस्विकरूपेण साजात्य-निरूपकता लभ्यते। यावतामभावानां प्रत्येकनिरूपितं यत्साजात्यं तद्वान् न कोऽप्यभावो व्यतिरेकि-साध्यके इत्यत"स्तत्त"दिति। तेन प्रत्येक वृत्तित्वाभावस्य प्रत्येकसाध्याभावसाजात्यं लभ्यते। तदधिकरणेत्यत्र केवलेन तत्पदेन यावत्त्वविशिष्टसाध्याभावानुकर्षणे (२) वह्निमान् धूमादित्यादौ तत्तद्कूटावृत्तित्वावच्छिन्नप्रतियोगिताकाभावानां तत्तद्कूटमात्रवृत्तीनां यावतामधिकरणमप्रसिद्धम् अत"स्तत्तदधिकरणे"ति, यावत्पदादाने व्यधिकरण धर्मावच्छिन्न-साध्याभाव सजातीयस्य तद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्य (३) व्यभिचारिणि सत्त्वादतिव्याप्तिरिति तदुपात्तम्। समानाधिकरण धर्मावच्छिन्न साध्याभाववद्वृत्तित्वस्यापि व्यधिकरणधर्मावच्छिन्नाभावसत्त्वाद्व्यभिचारिण्यतिव्याप्तिरतः "सजातीया" इति, तस्याप्यभाव-

---

(१) तद्वृत्तधर्मवत्त्वं इति न पुस्तके।

(२) अनुकर्षणे इति च पुस्तके।

(३) साध्याभावसजातीयतद्वृत्तित्वाभावस्य इति च पुस्तके।

त्वादिना सजातीयत्वात्तथैवातिव्याप्तिरत आह "साजात्यञ्चे"ति, "समाने"ति, समानश्चासमानश्च समानासमाने, ते अधिकरणे ययोस्तौ समानासमानाधिकरणौ तौ च तौ धर्म्मौ च ताभ्यामवच्छिन्ने (१) प्रतियोगिते (२) ययोरभावयोस्तत्त्वमित्यर्थः। तेन साध्याभावनिष्ठं यत् स्वप्रतियोगिता-समानाधिकरणधर्म्मावच्छिन्न-प्रतियोगिताकत्व-स्वप्रतियोगित्वासमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपं तद्वत्त्वं तादृशवृत्तित्वाभावे लभ्यते। स्वप्रतियोगिता-समानाधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकत्वञ्च स्वप्रतियोगित्वासमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताका ये ये तत्तद्भेदकूटवत्त्वं, एवं स्वप्रतियोगित्वासमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वञ्च स्वसमानाधिकरणधर्म्मावच्छिन्नस्वसमानाधिकरणसम्बन्धावच्छिन्नप्रतियोगिताका ये ये तत्तद्भेदकूटवत्त्वं, तेन न स्वत्वाननुगमः, समनियताभावैक्यमते सर्व्वस्यैव व्यधिकरणधर्म्मावच्छिन्नाभावस्य समवायावच्छिन्नाकाशाद्यभावात्मकसमानाधिकरणधर्म्मावच्छिन्नाभावाभिन्नतया तद्भेदकूटवदभावस्याप्रसिद्धेः (३) समानाधिकरणसम्बन्धावच्छिन्नत्वमपि प्रतियोगितायां विशेषणम्। वस्तुतस्तु समनियताभावैक्यमते आकाशाभावत्वाकाशाभावभिन्नत्वान्यतररूपेण सजातीयत्वमेव वाच्यं, लाघवादिति ध्येयम्। "पूर्व्वोक्तद्वितीये"ति, प्रथमरीतौ तु वक्ष्या-

---

(१) अवच्छिन्ना इति ग पुस्तके।

(२) प्रतियोगिता इति ग पुस्तके।

(३) चरमे इति अधिक पाठः ख पुस्तके।

कालोभयाभावस्य जलवृत्तित्वविशिष्टद्रव्यत्वाद्यभावस्य तादृशस्य सजातीयो यस्तद्वृत्तित्वाभावस्तस्य धूमादावभावादसम्भव इति भावः । अत्र च साध्यतावच्छेदकसम्बन्धेन व्यापकत्वस्य अभावस्य च विवक्षणे स्वाधिकरीभूतयत्किञ्चिद्व्यक्तिवृत्त्यभाव-प्रतियोगितायां दैशिकविशेषणताविशेषावच्छिन्नायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वं व्याप्यवृत्तित्वं बोध्यं, तेन (१) संयोगेन साध्यतायां व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव सर्व्वाधिकरणावच्छेदेन व्याप्यवृत्तितया तज्जातीयतद्वृत्तित्वाभावस्य व्यभिचारिणि-सत्त्वेऽपि नातिव्याप्तिः । तद्वृत्तित्वाभावोऽपि व्याप्यवृत्तितानिरूपकाधिकरण-वृत्तित्वस्याभावो बोध्यः । तेन वह्निमान् धूमात् संयोगि (२) एतत्त्वादित्यादौ वह्न्यभावस्य संयोगाभावस्य (३) च जले गुणादौ च व्याप्यवृत्तेः केवलान्वयितया तद्वृत्तिताऽत्व-व्यापकप्रतियोगिताकस्य सजातीयाभावस्य (४) धूमादावसत्त्वेऽपि नाव्याप्तिः । व्यापकताघटकसम्बन्धेनाभावस्य विवक्षणे तु व्याप्यवृत्तित्वं यत्किञ्चिद्व्यक्ति वृत्तित्वान्तर्भावेण न वाच्यं, धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वाभावस्य व्याप्यवृत्तेः सजातीयो यस्तद्वृत्तित्वाभावस्तस्य वह्नावसत्त्वादेवातिव्याप्त्यनवकाशात् । ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावस्याभावे साध्ये 'घटत्वादि'-हेतावव्याप्तिः उक्तसाध्याभावस्याकाशाभावस्य व्याप्यवृत्तेरधिक-

(१) तेन इत्यत्र अतः इति ग पुस्तके ।

(२) कपिसंयोगि इति ग पुस्तके ।

(३) कपिसंयोगाभावस्य इति ग पुस्तके ।

(४) सजातीयस्याभावस्य इति ग पुस्तके ।

रणे आत्मत्वस्य वृत्तेरत आह "प्रतियोगी"ति, प्रतियोगितावच्छे-
दकसम्बन्धेन साध्यव्यापकतावच्छेदकीभूत-यत्किञ्चित्प्रतियोगिताव-
च्छेदकावच्छिन्न-प्रतियोग्यनधिकरणवृत्तित्वविशिष्टत्वस्येहप्रतियो-
गि-व्यधिकरणत्वम् । ज्ञानवानात्ममहाकालान्यतरत्वादित्यादौ
आत्मत्वाद्यभावरूपस्य तादृशसाध्याभावस्य काले कालिकसम्बन्धेन
प्रतियोगि-समानाधिकरणत्वात्प्रतियोग्यनधिकरणवृत्तित्वविशिष्ट-
तदधिकरणमाकाशाद्येव तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्ति-
रतः प्रतियोगितावच्छेदकसम्बन्धेनेति । वह्निमान् धूमादित्यादौ
तद्धूम-संयोगस्य वह्निव्यापकतावच्छेदक-तद्धूम-संयोगाभावत्वाव-
च्छिन्नप्रतियोगिताकस्य गुणसामान्याभावत्वरूप-यत्किञ्चित्प्रतियो-
गितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टस्याधिकरणे धूमस्य
वृत्तेरव्याप्तिरतः साध्य-व्यापकतावच्छेदकीभूतेति, गुणसामान्या-
भावत्वस्य वह्नि-व्यापकतावच्छेदकत्वाभावान्न तत्र दोषः । सर्व्व-
स्यैवाभावस्य यत्किञ्चिदात्म्य-(१)धिकरण-वृत्तित्वविशिष्ट-स्वाभाव(२)
पूर्व्वक्षणवृत्तित्वविशिष्ट-स्वाभावात्मक (३) तादृश-प्रतियोग्यधि-
करण-वृत्तित्वात्, तादृशाभावाप्रसिद्धेरतो यत्किञ्चिदिति । केवला-
न्वयिसाध्यके सर्व्वस्यैव तादृशाभावस्य साध्य-व्यापकतावच्छेदक-
प्रमेयत्वत्वाद्यवच्छिन्न-समानाधिकरणत्वात्(४) प्रतियोगितावच्छेद-

---

(१) व्यधि इति नास्ति ग पुस्तके ।

(२) वृत्तित्वविशिष्टाभावाभाव इति ख पुस्तके ।

(३) वृत्तित्वविशिष्टाभावाभावात्मक इति ख पुस्तके ।

(४) सामानाधिकरण्यात् इति ग पुस्तके ।

केति । प्रतियोगिपदोपादानमपि एतदर्थमेव अन्यथा घटादि-निष्ठप्रतियोगितावच्छेदक-वाच्यत्वत्वावच्छिन्न-समानाधिकरणत्वात्, सर्व्वाभावानामप्रसिद्ध्यापत्तेः (१)। अत्रच यत्प्रतियोगिताव्यक्तेर्यद-वच्छेदकं तदवच्छिन्न-तत्प्रतियोगिताश्रयानधिकरण-वृत्तित्वं बोध्यं, तेन समनियताभावैक्य-नये ज्ञेयत्वत्वेन घटाभावस्यापि घटत्वेन ज्ञेयत्वाभावाभिन्नतया सर्व्वस्यैवाभावस्य ज्ञेयत्वत्वरूपताहृश-प्रति योगितावच्छेदकावच्छिन्न—ज्ञेयत्वरूप-प्रतियोगि समानाधिकरण-त्वात् केवलान्वयिसाध्यके नाप्रसिद्धिः। इत्थञ्च ज्ञेयत्वत्वावच्छिन्न-घटानधिकरणत्वं चक्रवर्त्ति-लक्षणोक्त-दिशा बोध्यम्(२)। ताहृश-(३) प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिसमानाधिकरणभिन्नत्वन्तु न वाच्यम् (४)। एतदभाव-भिन्नं प्रमेयत्वादित्यत्रातिव्याप्तेः, अभाव-मात्राधिकरणकाभावस्यातिरिक्तस्यानवस्थाभयेनानङ्गीकारेण, तत्र तदभावभेदाभावस्यैतदभावात्मकतया ताहृग-प्रतियोगितावच्छेद-कावच्छिन्न-सामानाधिकरण्य(५)नियमेन व्यधिकरण-धर्म्मावच्छि-न्नाभावस्यैव ताहृशप्रतियोगि-व्यधिकरणतया तत्सजातीय तद्वृत्ति-त्वाभावस्य प्रमेयत्वे सत्त्वादिति। अस्मद् विवरणे तु एतदभाव-भेदानधिकरण-वृत्तित्वविशिष्टैतदभाव-भेदाभाववानेतदभाव एव तद्वृत्तित्वाभावस्य प्रमेयत्वेऽसत्त्वान्नातिव्याप्तिरिति।

(१) सर्व्वेषामभावानामप्रसिद्ध्यापत्तेः इति ग पुस्तके।

(२) बोध्यमित्यत्र अवसेयं इति ग पुस्तके।

(३) न च ताहृश इति ग पुस्तके।

(४) भिन्नत्वं वाच्यं इति ग पुस्तके।

(५) समानाधिकरणत्व इति ग पुस्तके।

केचित्तु प्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्न-भावरूप-प्रतियोगि-समानाधिकरणं यद्यत्तत्तद्भिन्नत्वं तद्वाच्यम् (१)। ज्ञानवान् आत्म-महाकालान्यतरत्वादित्यादौ आत्मत्वाभावानां काले प्रतियोगि-समानाधिकरणत्वात्, द्रव्यत्वप्रकारकप्रमाविशेष्यत्व,-कालत्व—प्रकारकप्रमाविशेष्यत्वान्यतराभाव एव * तादृगसाध्याभावस्तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरत: प्रतियोगितावच्छेदकसम्बन्धेनेति, समनियताभावैक्य-नये गोत्वाभावादेरपि गोत्वेन प्रमेयाभाव-समनियततया द्रव्यत्वाभावादेरपि गुणकर्म्मान्यत्वविशिष्टसत्त्वाभाव-समनियततया ज्ञेयत्वत्वेनाकाशाभावस्यापि आकाशत्वेन ज्ञेयत्वाभाव-समनियततया तत्तत्प्रतियोगि-समानाधिकरणत्वात् प्रतियोगि-समानाधिकरण-भिन्नाभावाप्रसिद्धिरत: प्रतियोगितावच्छेदकावच्छिन्नेति। सर्व्वस्यैवाभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टाभावाभावात्मक-स्वप्रतियोगि-समानाधिकरणत्वात् भावेति, आकाशाभावत्वेन घटाभावस्यापि ज्ञेयत्वेन घटाभावाभिन्नतया सर्व्वस्यैव व्यधिकरण-धर्म्मावच्छिन्नाभावस्य ज्ञेयत्वावच्छिन्नभाव-समानाधिकरणत्वात् केवलान्वयिनि-तादृशाभावाप्रसिद्धिरत: प्रतियोगीति। साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकाभावोपि भाव-

* द्रव्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्तु जन्यगुणे कालिकसम्बन्धेन प्रतियोगि-समानाधिकरण इति तदुपेक्ष्यान्यतराभावानुसरणम्, अन्यतराभावस्तु न जन्यगुणे, तस्य जन्यत्वेन कालत्वविशिष्टत्वादिति भाव:।

(१) तद्वाच्यमित्यत्र वाच्यमिति ग पुस्तके।

भिन्नो वाच्यः (१) तेन वह्निमान् धूमादित्यादौ तत्तद्धूमसंयोगाभावाभावस्य तत्तद्धूमसंयोगस्य निरुक्तप्रतियोगि-व्यधिकरणत्वशालिनोऽधिकरणवृत्तित्वाभावस्य धूमादावसत्त्वेऽपि न क्षतिरित्याहुः। तच्चिन्त्यं, कपिसंयोगाभाववभिन्नं मेयत्वादित्यादौ पूर्व्वोक्तरीत्या कपिसंयोगाभावभेदाभावस्य कपिसंयोगाभावात्मकतया तस्य च कपिसंयोगरूपतादृशप्रतियोगि-समानाधिकरणतया तद्भिन्नत्वाभावेनातिव्याप्तेर्व्वज्रलेपायितत्वात्। आकाशाभावस्य कालिकसम्बन्धेनाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः, तत्राकाशाभावात्मकस्य साध्याभावस्य निरुक्तप्रतियोगिव्यधिकरणत्वशालिनोऽधिकरणे आत्मत्वादेर्वृत्तेरिति दिक्।

साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः। तेन वह्निमान् धूमादित्यादौ समवायेन वह्न्यभाववति धूमादेर्वृत्तावपि न क्षतिः। इत्यञ्च साध्यतावच्छेदकावच्छिन्न-व्यापकतापि तेनैव सम्बन्धेन वाच्या, तेन कालिकसम्बन्धेन वह्निव्यापकस्य घटस्य संयोगेनाभाववति धूमस्य वृत्तावपि न क्षतिः। अतएव प्रतियोगि-व्यधिकरणत्वं व्यापकतायां निवेश्य कपि संयोगाभावादेरपि व्यापकतावच्छेदकरूपावच्छिन्नाभावत्वमुपपाद्य पुनस्तद्वारणार्थं व्याप्यवृत्तीत्यादिविशेषणं "प्रक्षालनाद्धी"ति न्यायमनुसरतीति प्रत्युक्तम्। प्रतियोगिव्यधिकरणत्वगर्भतां विना संयोगेन व्यापकत्वस्य (२) दुर्व्वचत्वात् संयोगेन साध्यतायामव्याप्तेः।

(१) वाच्यः इत्यत्र प्राहुः इति ग पुस्तके।

(२) व्यापकत्वस्यैव इति ग पुस्तके।

केचित्तु व्यापकताघटकसम्बन्धेनाभावो वक्तव्यः, एवञ्च सम्बन्धभेदेन (१) व्यापकता न निवेशनीयेत्याहुः। साध्याभावस्याधिकरणतायाञ्च सम्बन्धभेदो न निवेशनीयः, कालः काल-परिमाणवान् कालत्वादित्यादौ, कालिकसम्बन्धावच्छिन्न-प्रतियोगिताकाकाशाभावाभाववान् आत्मत्वादित्यादौ च हेत्वधिकरणस्य कालस्य कालिकतया तादृशसाध्याभावात्मक (२) कालपरिमानाभावाधिकरणत्वेऽपि आत्मनोदैशिकतया तादृशसाध्याभावात्मकाकाशाभावाधिकरणत्वेऽपि काले आत्मनि च तादृशाभावद्वयस्य प्रतियोग्यनधिकरणवृत्तित्ववैशिष्ट्याभावादव्याप्तिरिति अलमतिविस्तरेण।

साध्याभावत्वरूपेणाभाव-प्रवेशे निर्व्वह्निवृत्तित्वाभावस्य साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकत्वाभावात् समानाधिकरणधर्म्मावच्छिन्नाभावसजातीयस्य साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकाभावस्य धूमादावभावादाह "तत्तदि"ति। तत्तत्साध्याभाववद्वृत्तित्वत्व-व्यापिका व्यासज्यवृत्तिधर्म्मानवच्छिन्ना च या प्रतियोगिता तादृशप्रतियोगिताका इत्यर्थः। "व्यक्तिविशेष"ति, धूमाभाववज्जलवृत्तित्वस्य वह्नावसत्त्वादित्यर्थः। तत्तद्योगोलकावृत्तित्वावच्छिन्नप्रतियोगिताकस्य तत्तदयोगोलकमात्रवृत्तेः साध्याभावस्य यदधिकरणं तद्वृत्तित्वाभावस्य वह्न्यादाव-

---

(१) सम्बन्धविशेषेण इति ग पुस्तके।

(२) तादृशसाध्याभावात्मक इति नास्ति घ पुस्तके।

सत्त्वादतिव्याप्तेरभावादाह "पार्थिवे"ति । पार्थिवत्वविशिष्टं (१) यन्निर्धूमवृत्तित्वं तद्वह्नौ नास्ति वह्नेस्तैजसत्वादिति भावः । "व्यासज्यवृत्तिधर्मावच्छिन्नेत्यस्य व्यावृत्तिमाह "द्वित्वाद्यव-च्छिन्ने"ति । निर्धूमवृत्तित्व-धूमवद्वृत्तित्वोभयत्वावच्छिन्न-विरहस्य तत्तत्साध्याभाववद्वृत्तित्वत्व-विषमव्यापकप्रतियोगिताकस्य, निर्धूम-वह्न्यधिकरणवृत्तित्व-निर्धूमवह्न्यनधिकरणवृत्तित्वोभयाभावस्य तत्त-त्साध्याभाववद्वृत्तित्वत्व-समनियतप्रतियोगिताकस्य वह्न्यादौ सत्त्वा-दित्यर्थः । तादृशवृत्तित्वाभावोऽपि व्याप्यवृत्तिर्बोध्यः । तेन संयोगात्मकवृत्तित्वाभावस्याव्याप्यवृत्तेः पूर्व्वक्षणवृत्तित्वविशिष्ट-वृत्तित्वाभावस्य च व्यभिचारिणि सत्त्वेऽपि नातिव्याप्तिः । न च ह्रदवृत्तित्वत्वेन निर्धूमवृत्तित्वसामान्यस्य तत्तत्साध्याभाव-वद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य वह्नौ (२) सत्त्वादतिव्याप्ति-रिति वाच्यं – स्वन्यूनवृत्तिसमानाधिकरणधर्म्मानवच्छिन्ना या प्रतियोगिता तस्यास्तत्तत्साध्याभाववद्वृत्तित्वत्व-व्यापकव्यासज्य-वृत्तिधर्म्मानवच्छिन्नत्वस्य विवक्षणात्तादृशी च प्रतियोगिता स्वान्यूनवृत्तिसमानाधिकरणधर्म्मावच्छिन्ना स्वव्यधिकरणधर्म्माव-च्छिन्ना च भवतीति, न एतादृशाभावमादाय दोषः । "वृत्ता-वपी"ति, इदञ्च सम्बन्धसामान्येन वृत्तित्वाभावविवक्षणेऽव्याप्ति-रभिहिता, यदि च सम्बन्धत्वं नैकमिति यत्किञ्चित् सम्ब-न्धेनैव तादृशवृत्तित्वाभावो विवक्षणीयइत्युच्यते तदा व्यभि-

(१) विशिष्टमित्यत्र विशेषितमिति ग पुस्तके ।

(२) वह्न्यादौ इति ग पुस्तके ।

चारिण्यतिव्याप्तिरेव द्रष्टव्या। “इत्यत्र” हेतुतावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणे च, “वर्त्तमानः” व्याप्यवृत्तितया वर्त्तमानः, तेन संयोगेन द्रव्यसामान्याभावस्य द्रव्यवृत्तेर्व्याप्यवृत्तितानिरूपकाधिकरणे गुणादौ संयोगेन वृत्तेरसिद्धावपि न क्षतिः। साध्यतावच्छेदकसम्बन्धेन व्यापकत्वस्याभावस्य च विवक्षणे तु वह्निमान् धूमादित्यादौ जातित्वावच्छिन्नाभावो न लक्षणघटकः संयोगेन द्रव्यसामान्याभावस्य च(१) तथात्वेऽपि उत्पत्तिकालावच्छेदेन तस्य द्रव्य-वृत्तितया व्याप्यवृत्तितानिरूपकाधिकरण-पर्य्यन्तानुसन्धानेनैवा(२)व्याप्तिनिर्णयः(३) सम्भवतीति तदुपेक्ष्याह “जातिमानि”ति। समवायेन साध्यतायामेवोक्ताभावमादायाप्रसिद्धि-र्यद्यपि, तथापि साध्यतावच्छेदकावच्छिन्नसाध्याभावाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धि-प्रतिपादनाय जातित्वरूपेण साध्योल्लेखः। इत्यत्र जातिमान् सत्त्वादित्यादौ व्यधिकरण-धर्म्मावच्छिन्नाभावमादायैव लक्षणसमन्वयः(४)।

ननु द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यत्राव्याप्तिः विशिष्टस्यानतिरिक्ततया द्रव्यत्वत्वावच्छिन्नप्रतियोगिताक-द्रव्यत्वाभाववृत्तित्वस्य सत्तायां सत्त्वेन तदभावासत्त्वात्। न चैवं गुणकर्म्मान्यत्वविशिष्टसत्ता गुणवृत्तिरिति प्रतीतिः स्यादिति वाच्यं गुणकर्म्मान्यत्वविशिष्टसत्तात्वावच्छेदेन गुणवृत्तित्वस्य सत्तायामभा-

---

(१) च इति नास्ति ग पुस्तके।
(२) अनुधावनेनैवा इति ग पुस्तके।
(३) निश्चयः इति ग पुस्तके।
(४) लक्षणसङ्गतिर्बोध्या इति ग पुस्तके।

वात् तादृशविशिष्टे अवच्छेदकत्वानवगाहिप्रत्ययस्य चेष्टत्वादत आह यद्वेति ।

---

दीधितिः ।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम् । साधनस्य तादृशाभाव-प्रतियोगित्वं, तदवच्छेदकत्वं वा साधनतावच्छेदकस्येति तु न वक्तव्यम् । द्रव्यं सत्त्वादित्यादौ सत्तादेर्गुणकर्म्मान्यत्वविशिष्टसत्त्वात्वाद्यवच्छिन्नप्रतियोगिताक–तादृशाभाव-प्रतियोगित्वादतिव्याप्तेः, नेयं प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वादव्याप्तेश्च, प्रमेयत्व-व्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः । यद्वा यावन्तस्तादृशाः साध्याभावाः-प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः ।

इति दीधितौ मिश्र-लक्षण-प्रकरणं समाप्तम् ।

---

## दीधिति-प्रकाशः ।

"तादृशा"व्याप्यवृत्तय: प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-व्यधिकरणा वा "साध्याभावा:" साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकाभावा: "तेषा"-मिति, तस्य च तस्य च तस्य च तेषामिति, स्वरूपैकशेषेण तत्तद-भाव-सजातीयत्व-लाभ: । अत्रापि यावत्प्रत्येकतत्तत्पदानां, व्याप्य-वृत्तित्वस्य, द्वितीयरीत्या साध्याभावस्य च प्रयोजनं पूर्ववद्बोध्यम् । धूमत्वावच्छिन्नधूमाभाव-व्यापकस्य वह्नित्वेन घटाभावस्य प्रति-योगितावच्छेदकवह्नित्वेन (१) वह्नित्वावच्छिन्नं प्रति वह्नेः(२)व्याप-कत्वात् अतिव्याप्तिरत: "सजातीयस्ये"ति, धूमाभाव-सजातीयस्य तत्समानाधिकरणस्य(३) वह्न्यभावस्य प्रतियोगितावच्छेदकेन वह्नि-त्वेन वह्नित्वावच्छिन्नं प्रति व्यापकत्वादतिव्याप्तिरतो "व्यापकीभूत-स्ये"ति । व्यापकत्वन्तु तदभावमात्रवृत्ति-धर्मेण, दैशिकविशेषण-तया च बोध्यं, तेन वह्न्यभावस्य अभावत्वादिना धूमाभाव-व्याप-कत्वेऽपि न क्षति:, न वा महाकालभिन्न: कालत्वादित्यत्र कालत्वाभावस्य कालिकतया महाकाल-भेदाभाव-व्यापकत्वेऽपि क्षति: । संयोगेन द्रव्यस्याव्याप्यवृत्तितया(४) धूमवान् वह्नेरित्यादौ वह्न्यभावस्यापि धूमाभाव-व्यापकत्वात्, रूपवान् कपि-संयोगादि-

---

(१) प्रतियोगितावच्छेदकेन इति न पुस्तके ।

(२) वह्नेरिति नास्ति न पुस्तके ।

(३) तत्समानाधिकरणस्य इति नास्ति न पुस्तके ।

(४) अव्याप्यवृत्तितामते इति न पुस्तके ।

त्वादौ च कपि-संयोगाभावस्यापि रूपाभाव-व्यापकत्वादतिव्याप्ति-रतो "व्याप्यवृत्ती"ति । अत्र तादृशाभावस्य हेतुतावच्छेदक-सम्बन्धावच्छिन्ना या प्रतियोगिता तदवच्छेदकधर्म्मेण हेतुतावच्छेदक-सम्बन्धेन हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकत्वं बोध्यम् । तेन स्वरूपसम्बन्धेन वह्न्यभावस्य संयोगेन द्रव्यत्वाभावाभिन्नस्य केवला-न्वयिनो धूमाभाव-व्यापकतया स्वरूपसम्बन्धावच्छिन्न-तत्प्रतियोगि-तावच्छेदकीभूत-वह्नित्वेन वह्नित्वावच्छिन्नं प्रति संयोगेन, संयोगाव-च्छिन्न-तत्प्रतियोगितावच्छेदकीभूत-द्रव्यत्वत्वेन समवायेन च व्याप-कत्वेऽपि न क्षतिः । हेतोर्व्याप्यतापि हेतुतावच्छेदकसम्बन्धेन बोध्या, तेनायमात्मा ज्ञानादित्यत्र विषयतासम्बन्धेन हेतुतायाम् आत्मविषयकज्ञानत्वेन तादृशाभावप्रतियोगितावच्छेदकेन सम-वायसम्बन्धावच्छिन्नज्ञानं प्रति विषयतया व्यापकत्वेऽपि न क्षतिः ।

केचित्तु यत्प्रतियोगितावच्छेदकीभूतो यो धर्म्मस्तत्प्रतियोगि-तावच्छेदक-सम्बन्धेन व्यापकता बोध्या । यत्तदिति करणात् स्वरूपसम्बन्धेन वह्न्यभावस्य संयोगेन द्रव्यत्वाभावाभिन्नतया तत्प्रतियोगितावच्छेदक (१) संयोगेन वह्निर्व्यापकत्वेऽपि न क्षति-रित्याहुः ।

"तादृशे"ति, तादृश साध्याभाव-व्यापकीभूत-सजातीय-व्याप्य-वृत्त्यभाव-प्रतियोगित्वमित्यर्थः । "तदवच्छेदकत्व"मित्यत्र तत्प-

(१) अवच्छेदकीभूत इति ग पुस्तके ।

देन (१) अव्यवहितोक्त-प्रतियोगित्व-परामर्शः। लक्षणयोः क्रमेण दोषमाह "द्रव्य"मित्यादिना, "तादृशाभावे"ति, द्रव्यत्वाभाव-व्यापक-सजातीय-व्याप्यवृत्त्यभावेत्यर्थः। समवायेन प्रमेय-सामान्याभावस्य (२) प्रमेयत्वमपि तादृश(३)प्रतियोगितावच्छेदकमत "स्तादृशे"ति, प्रकृत-साध्याभाव-सजातीयाभाव-प्रतियोगितेत्यर्थः। अतएव केवलान्वयि-साध्यक-पर्य्यन्तानुधावनम्। तत्र व्यधिकरण-धर्म्मावच्छिन्नस्यैव साध्याभावस्य सम्भवात् प्रमेयत्व-व्यधिकरण प्रतियोगित्वस्य चाप्रसिद्धा प्रमेयत्वस्य तथानवच्छेदकत्वात् इति भावः। न च कालिकसम्बन्धेन प्रमेयत्वस्यात्माऽवृत्तितया तत्सम्बन्धमवच्छेदकी(४)कृत्य प्रमेयत्वेनात्मा नास्तीति प्रत्यय-विषयीभूतमभावमादाय प्रमेयत्वस्यापि व्यधिकरणतयाऽवच्छेदकत्वमिति वाच्यं, हेतुतावच्छेदकतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकत्वस्यावश्यं वक्तव्यत्वात्,(५) अन्यथा धूमवान् वह्निरित्यादौ विषयितया वह्नित्व-विशिष्टस्य ज्ञानादेरभावस्य धूमाभाव-व्यापकस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यतिव्याप्तः, "प्रमेया"दित्यत्र तु तादृशः सम्बन्धो विषयत्वीय-स्वरूपसम्बन्धः, न च तेन सम्बन्धेन प्रमेयत्वं तथेति भावः।

सजातीयादि-पदपरित्यागेन लघु-लक्षणमाह "यद्वे"ति,

(१) तत्पदेनेत्यत्र तदा इति पाठः ग पुस्तके।

(२) सामान्याभावे इति घ पुस्तके।

(३) तादृश इति नास्ति ग पुस्तके।

(४) सम्बन्धं प्रतियोगितावच्छेदकतावच्छेदको इति घ पुस्तके।

(५) वाच्यत्वादिति इति घ पुस्तके।

"तादृशाः" साध्यतावच्छेदकावच्छिन्न व्यापकतावच्छेदक-रूपाव-च्छिन्न-प्रतियोगिताकाः, "साध्याभावा" इति स्वरूप-कथनम्, अत्र च व्याप्यवृत्तित्वमपि त्याज्यं, निष्प्रयोजनकत्वात् । व्यतिरेकि-साध्यके यावत्साध्याभावीय-प्रतियोगितावच्छेदकस्याप्रसिद्धेराह "प्रत्येक"मिति, अत्र च तादृशाभावस्य साध्यतावच्छेदक सम्बन्धा-वच्छिन्ना या प्रतियोगिता तदवच्छेदक(१)धर्म्मेण तेनैव सम्बन्धेन हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकत्वं बोध्यं, तेन कालत्व प्रका-रक प्रमा-विषयो द्रव्यत्वादित्यत्र कालिक सम्बन्धेन प्रमेयत्वाभावस्य स्वरूप-सम्बन्धावच्छिन्न-साध्याभाव समनियततया तत्प्रतियोगिता-वच्छेदकीभूत-प्रमेयत्वत्वेन स्वरूपसम्बन्धेन द्रव्यत्व व्यापकत्वेऽपि न क्षतिः, प्रमेयत्वत्वस्य साध्यतावच्छेदकीभूत-स्वरूप सम्बन्धावच्छिन्न-प्रतियोगितानवच्छेदकत्वात् । न वा अयं घट एतद्घट-पटान्यतरत्वा-दित्यत्र तादृश-प्रतियोगितावच्छेदकीभूत-घटत्वत्वादिना कालि-कतया हेतु-व्यापकत्वेऽप्यतिव्याप्तिः साध्यतावच्छेदकीभूत सम-वाये(२)नाव्यापकत्वात् । इत्यञ्च तादृश-साध्याभावः, तादृश साध्य-व्यापकत्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यं, तेन वह्निमान् धूमा-दित्यादौ समवायेन वह्न्यभावस्य साध्यतावच्छेदक सम्बन्धावच्छिन्न-प्रतियोगित्वाप्रसिद्धावपि, संयोगेन द्रव्यत्वाभावस्य प्रतियोगिता-वच्छेदकीभूत-द्रव्यत्वत्वेन संयोगेनाव्यापकत्वेऽपि च न क्षतिः ।

केचित्तु स्व-प्रतियोगितावच्छेदक सम्बन्धेन साध्य-व्यापकता,

(१) तदवच्छेदकेन इति च पुस्तके ।

(२) समवायसम्बन्धे इति च पुस्तके ।

तेन संयोगेन द्रव्यत्वाभाव-निरासः। यत्सम्बन्धावच्छिन्न-प्रतियोगि-तावच्छेदकं यत्तेन धर्म्मेण तेन सम्बन्धेन च हेतुं प्रति व्यापकता-बोध्या, तेन कालत्व-प्रकारक प्रमा विषयो द्रव्यत्वादित्यादौ पूर्व्वोक्त-रीत्या नातिव्याप्तिरित्याहुः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे मिश्र-लक्षण-व्याख्या समाप्ता।

---

अथ सार्व्वभौम-लक्षण-प्रकरणे दीधितिः।

परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्ति-त्वाभावास्तद्वत्त्वं व्याप्तिः, येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वमपि बोध्यं, तेन व्यधिकरण-धर्म्मावच्छिन्न-वह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः। साध्याभावश्च पूर्व्ववद्बोध्यः, तद्वद्वृत्तित्वाभावोऽपि स्व-व्यापक-तत्त-त्साध्याभाववद्वृत्तित्वत्व-व्यापक-प्रतियोगिताकः, तत्त-त्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्व-वृत्तिना वा धर्म्मेणानवच्छिन्न-प्रति-योगिताको बोध्यः। तेनालोकाद्यवृत्तित्वेन रूपेण यो वह्नि-सामान्याभाववद्वृत्तित्वस्य यत्नेन्धनत्वाद्यवच्छि-

न्न-वह्न्यभावाधिकरणीभूत-महानस-वृत्तित्वादेरभाव-स्तस्य धूमादौ, स्व-निष्ठ-साध्याभाववद्वृत्तित्व-विरहस्य हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेऽपि न क्षतिरित्याहुः।

---

दीधिति-प्रकाशः।

सार्व्वभौम-लक्षणे समुदाय-पदादाने तत्तद्दोषाणामलग्नकतेत्याशयेन समुदाय-पदानन्तर्भावेन (१) तल्लक्षणमाह "परे त्वि"ति। साध्याभाववद्वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेनेत्यस्य पूर्व्वोक्तत्वात्तदनुक्त्वा वृत्तिमद्वृत्तित्वस्य व्याख्यान-सम्बलितं प्रयोजनमाह "येने"त्यादिना, (२) यावत्पदानाने अतिव्याप्तिरेव (३)। अत्र वृत्तिमत्पदादाने असम्भवो नास्ति, तादात्म्य-सम्बन्धेन विषयिता-सम्बन्धेन च हेतुतायां व्यधिकरण-धर्मावच्छिन्न तादृश-साध्याभाववद्वृत्तित्वत्व-व्यापक-प्रतियोगिताकस्य व्यधिकरण धर्मावच्छिन्न-प्रतियोगिताकाभावस्यैव सम्भवात्, तादात्म्येन विषयितया च सर्व्वस्यैव वृत्तिमत्त्वादिति ध्येयम्। जात्यादावित्यनेन सम्बन्धान्तरेण वृत्तिमन्निष्ठत्वं तदभावस्य दर्शितम्। "पूर्व्वव"दिति, साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदक-रूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिः, प्रथम-रीत्या वह्निमान् धूमादित्यादौ सत्तावत् द्रव्यत्वादित्यादौ च तार्णातार्णोभयत्वावच्छिन्नाभाववद्वृत्तित्वाभावस्य (४)

(१) येनैव इति च पुस्तके।

(२) येनेत्यादिनेत्यत्र येनेति इति पाठः ग पुस्तके।

(३) यावत्पदादाने अतिव्याप्तिरेव इति नास्ति ग पुस्तके।

(४) वृत्तित्वस्य इति च पुस्तके।

पृथिवीवृत्तित्वविशिष्टसत्ताभाववद्वृत्तित्वाभावस्य (१) च धूमे द्रव्यत्वे च असत्त्वात् (२) असम्भवः स्यात्। व्याप्यवृत्तित्वोपादानाच्च कपि-संयोगाभाववान् द्रव्यत्वादित्यादौ तादृश-साध्याभावात्मक-कपिसंयोगवद्वृत्तित्वाभावस्य गुणत्वादि-निष्ठस्य द्रव्यत्वादावसत्त्वेऽपि न क्षतिः। साध्याभावश्च साध्यतावच्छेदक-सम्बन्धेन साध्य-व्यापकताघटकसम्बन्धेन वा बोध्यः। तेन वह्निमान् पर्व्वत-रूपादित्यत्र संयोगेन साध्यतायां समवायावच्छिन्न-वह्न्यभाववत्समवेतत्वाभावस्य वह्न्यवयव-रूपादि-निष्ठस्य हेतावसत्त्वेऽपि न क्षतिः। अत्र पूर्व्वोक्त-तत्तत् (३) साध्याभाववद्वृत्तित्वत्व-व्यापक व्यासज्यवृत्ति-धर्म्मानवच्छिन्नप्रतियोगिताक (४)त्व-विवक्षणे आलोकावृत्तित्वावच्छिन्नाभावस्य तादृशस्य यावदन्तर्भूतस्यासत्त्वादव्याप्तिरतस्तदुपेक्ष्याह "स्वव्यापके"ति, स्वं प्रतियोगिता, तद्व्यापकं यत् तत्तत्साध्याभाववद्वृत्तित्वत्वं तद्व्यापक-प्रतियोगिताक इत्यर्थः। प्रतियोगिता व्यापक-साध्याभाववद्वृत्तित्वत्व-व्यापक प्रतियोगिताकत्व (५) विवक्षणे आलोकावृत्ति-वृत्तित्वत्वावच्छिन्नाभावस्य वह्नित्वावच्छिन्न वह्न्यभाववद्वृत्तित्वत्व व्यापकप्रतियोगिताकस्य निरुक्तसाध्याभाववद्वृत्तित्वत्व-व्याप्यप्रतियोगिताकस्यालोकवृत्तेर्धूमेऽभावादव्याप्तिरतो व्यापकतावच्छेदके "तत्त"दिति।

(१) वृत्तित्वस्य इति ख पुस्तके।

(२) सत्त्वात् इति ख पुस्तके।

(३) तत्तदिति नास्ति ख पुस्तके।

(४) प्रतियोगिताक इति नास्ति ग पुस्तके।

(५) व्यापकप्रतियोगिताकत्व इति नास्ति ख पुस्तके।

तथाच तादृशाभावं शृङ्गग्राहिकतयोपादाय तद्वद्वृत्तित्वत्वस्य प्रतियोगिता-व्यापकत्वं बोध्यं, आलोकावृत्ति-वृत्तित्वाभाव-प्रतियोगिता व्यधिकरण-धर्म्मावच्छिन्न वह्न्यभाववद्वृत्तित्वत्व-व्याप्या, न तु तद्व्यापिका, समानाधिकरण-धर्म्मावच्छिन्न वह्न्यभाववद्वृत्तित्वत्व-व्यापिका न तु तद्व्याप्येति तादृशाभाव निरासः। धूमवान् वह्नेरित्यादौ साध्याभाववद्वृत्तित्वत्व-व्यापकप्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तेः सम्भवादतिव्याप्तिः व्यधिकरण-धर्म्मावच्छिन्नाभावस्यापि साध्याभावतया तत्साधारण-साध्याभाववद्वृत्तित्वत्वं प्रति निर्द्धूमवृत्तित्वाभाव-प्रतियोगितायाः अव्यापकत्वादतो व्याप्यतावच्छेदकेपि "तत्त"दिति। वह्निमान् धूमादित्यादौ व्यधिकरण-धर्म्मावच्छिन्न साध्याभाववत्संयोगित्वत्व-समनियत-प्रतियोगिताकस्य पर्व्वत संयोगित्व-तदन्य-संयोगित्वोभयत्वावच्छिन्नाभावस्य महानस-वृत्त्यालोकवृत्तेः, सत्तावान् द्रव्यत्वादित्यादौ च व्यधिकरण धर्म्मावच्छिन्न-साध्याभाववत्समवेतत्व-समनियतप्रतियोगिताकस्य घटसमवेतत्व घटान्यसमवेतत्वोभयत्वावच्छिन्नाभावस्य घटत्वादिवृत्तेर्हेतावभावात्, एवं एतद्रूपवान् एतद्रसादित्यादौ तादृशसाध्याभाववत्समवेतत्वत्व-समनियत प्रतियोगिताकस्यैतत्क्षणावच्छिन्नैतद्रसवत्समवेतत्व-तदन्यक्षणावच्छिन्नसमवेतत्वोभयत्वावच्छिन्नाभावस्य रूपादि-वृत्तेर्हेतावभावाच्चासम्भवः। तादृशप्रतियोगितायां व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्व-विवक्षणेऽपि (१)

---

(१) विवक्षणेऽपि इत्यत्र विशेषणेऽपि इति ख, ग पुस्तकयोः।

धूमनिष्ठवृत्तित्वत्वरूपेण वृत्तित्व सामान्याभावस्य व्यधिकरण-धर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्व-समनियत-प्रतियोगिताकस्या-लोकादि वृत्तेर्धूमाद्यवृत्तित्वादसम्भव इत्यत "स्वस्वसाध्याभाव-वद्वृत्तित्वत्वे"ति। धूमवान् वह्नेरित्यादौ (समानाधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वस्य व्यधिकरण-धर्म्मणाभावस्य) (१) हेतौ सत्त्वादतिव्याप्तिरतोऽतिरिक्तान्तम्। तत्रापि साध्याभाववद्वृत्तित्वत्वातिरिक्त-समानाधिकरण-धर्म्मानव-च्छिन्न प्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव सम्भ-वात्तत्रैवातिव्याप्तिरतः "तत्त्व"दिति। केवलान्वयि-साध्यके व्यधि-करण-धर्म्मावच्छिन्न-साध्याभाववद्वृत्तित्वत्वातिरिक्त धर्म्मानवच्छिन्न-प्रतियोगिताकस्याभावस्या (२) प्रसिद्धिस्तादृशसाध्याभाववद्वृत्तित्व-त्वस्य गुरुतया तदपेक्षवृत्तित्वस्यैव लघुतया अवच्छेदकत्वात् (३) अतः "समानाधिकरणेने"ति। अतएव साध्याभाववद्वृत्तित्वत्वा-वच्छिन्न-प्रतियोगिताकेत्यादि न कृतम्। न च वृत्तिमद्वृत्तिपदं व्यर्थं (४) अत्र कल्पे तत्पदानुपादानस्य (५) इष्टत्वात्। केचित्तु (६) तादात्म्येन विषयितया च हेतुतायां व्यधिकरण-धर्म्मावच्छिन्न-

(१) ( ) चिह्नितस्थले समानाधिकरण-धर्म्मानवच्छिन्न-प्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्न-वृत्तित्वाभावस्य इति पाठः घ पुस्तके।

(२) प्रतियोगिताकतादृशाभावस्या इति घ पुस्तके।

(३) तदवच्छेदकत्वात इति ग पुस्तके।

(४) वृत्तिमद्वृत्तिपदवैयर्थ्यम् इति घ पुस्तके।

(५) तत्पदानुपादानस्य इति नास्ति ग पुस्तके।

(६) केचित्तु इति नास्ति घ पुस्तके।

साध्याभाववतस्तादात्म्यस्य (१) केवलान्वयितया तादात्म्यत्वावच्छिन्न(२)प्रतियोगिताकस्याभावस्याप्रसिद्धिरतो गुरुधर्म्मस्यावच्छेदकत्वेऽपि सामानाधिकरण्येनेत्यस्यावैयर्थ्यं (३) अतएव वृत्तिमद्वृत्ति-पदमप्यत्र कल्पे सार्थकमित्याहुः।

वस्तुतो (४) विशिष्टस्यानतिरिक्ततया महानस-वृत्तित्वत्वादिकमपि न (५) साध्याभाववद्वृत्तित्वत्वातिरिक्तं, अतस्तदवच्छिन्नाभावमादाय तथैवासम्भवः, अतः स्वाविषयक प्रतीति-विषय-तत्तत्साध्याभाववद्वृत्तित्वत्वकत्वं तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तत्वं निर्व्वाच्यं, अतो वृत्तित्वत्वमपि न तादृश-साध्याभाववद्वृत्तित्वत्वातिरिक्तं, वृत्तित्वत्वाविषयक-प्रतीत्या तादृश-साध्याभाववद्वृत्तित्वत्वस्याविषयीकरणात्, एवञ्च वृत्तित्वत्वावच्छिन्न-वृत्तित्वाभावमादाय पूर्व्वोक्ताव्याप्ति-वारणाय एतत्कल्पेऽपि (६) वृत्तिमद्वृत्ति पदं सार्थकम्। अत्र च तत्तत्साध्याभावं प्रतियोगितावच्छेदकाद्यविशेषितं तत्तद्व्यक्तित्वेनोपादाय तद्वद्वृत्तित्वत्वं स्वाविषयक प्रतीति विषयकत्वं वाच्यं, तेनालोकावृत्तित्वेनालोकावृत्तेरभावस्य वह्नित्वावच्छिन्न-व्यापकतावच्छेदक-रूपावच्छिन्न-प्रतियोगिताकतया आलोकावृत्ति-

(१) साध्याभाववत्तादात्म्यस्य इति ग पुस्तके।
(२) तादात्म्यत्वावच्छिन्नेत्यत्र तदवच्छिन्न इति घ पुस्तके।
(३) त्यस्य न वैयर्थ्यमिति घ पुस्तके।
(४) वस्तुतस्तु इति घ पुस्तके।
(५) तादृश इत्यधिकपाठः घ पुस्तके।
(६) अपि इति नास्ति घ पुस्तके।

त्वाद्यवच्छिन्न-प्रतियोगिताक (१) तद्वृत्तित्वत्वस्यालोकावृत्तित्वा-विषयक-प्रतीत्यविषयत्वेऽपि आलोकावृत्तित्वावच्छिन्नाभावमादाय नाव्याप्तिः ।

तादृश--वृत्तित्वाभाव--प्रतियोगिता--समानाधिकरणत्वाद्यपेक्षया(२) लाघवादाह "वृत्तित्व-वृत्तिना वे"ति, तादात्म्येन विषयितया च हेतुतायां केवलान्वयिनि विरुद्ध-घटत्व पटत्वाभ्यामेव तादृश-वृत्तित्वाभावः सुलभः । साध्याभाववद्वृत्तित्वत्वातिरिक्त-वृत्तित्व-वृत्ति-धर्मानवच्छिन्न-प्रतियोगिताकस्य धूमत्वाद्यभावस्य धूमादावभावात् अव्याप्तेर्वारणाय "तद्वृत्तित्वाभाव" इत्यनेन तद्वृत्तित्व-प्रतियोगिकत्वमभावे विशेषणम् ।

ननु धूम-निष्ठ-वृत्तित्वाभाव-धूमत्वाभावयोः समनैयत्यात् धूमत्वाभावोपि वृत्तित्व-प्रतियोगिक एवेत्यव्याप्तिः । न चैवं तत्र-साध्याभाववद्वृत्तित्वत्वातिरिक्त-वृत्तित्व-वृत्तिना धूम-निष्ठ-वृत्तित्व-त्वेनावच्छिन्न-प्रतियोगिताकत्वाद्यमभावो लक्षण-घटक इति वाच्यं तथा सति केवलान्वयिन्यप्रसिद्ध्यापत्तेः, घटत्वेन तादृश-वृत्तित्वा-भावस्य (३) वृत्तित्वत्वेन घटाभावाभिन्नत्वात् । न च तत्र साध्या-भाववद्वृत्तित्वत्वातिरिक्त-वृत्तित्व-वृत्ति-धर्मेणानवच्छिन्नापि घटत्वे-नावच्छिन्ना प्रतियोगितास्तीति वाच्यं प्रकृतेऽपि तुल्यत्वात्, धूम-निष्ठ-वृत्तित्वाभावेऽपि साध्याभाववद्वृत्तित्वत्वातिरिक्त-वृत्ति-

---

(१) आलोकावृत्तित्वाद्यवच्छिन्न प्रतियोगिताक इति नास्ति ख पुस्तके ।

(२) सामानाधिकरण्यापेक्षया इति ख पुस्तके ।

(३) भावस्यापि इति ख पुस्तके ।

स्व-वृत्ति-धर्म्मानवच्छिन्न-धूमत्वत्वावच्छिन्न-प्रतियोगितायाः सत्त्वादिति चेन्न साध्याभाववद्वृत्तित्वत्वातिरिक्त-वृत्तित्व-वृत्ति-धर्म्मानवच्छिन्न-वृत्तित्व-निष्ठ-प्रतियोगिताकाभावस्य विवक्षितत्वात्, धूमत्वाभावस्तु धूम--निष्ठ--वृत्तित्वत्वरूप--तादृश- धर्म्मावच्छिन्न-वृत्तित्व-निष्ठ-प्रतियोगिताक इति न तमादायाव्याप्तिः (१)। न च धूम-त्वत्वेन धूमत्व-निर्व्वह्नि-वृत्तित्वान्यतराभावस्य तादृशस्य धूमावृत्तितयाऽव्याप्तिरिति वाच्यं तत्र पूर्व्वोक्त-रीत्या धूमत्वत्व-विशिष्ट-तादृशान्यतरत्वस्यैव प्रतियोगितावच्छेदकत्वेन तस्य च तत्साध्याभाववद्वृत्तित्वत्वातिरिक्त-तादृश-वृत्तित्व-वृत्तित्वात्, स्व-न्यूनवृत्ति-समानाधिकरण-धर्म्मानवच्छिन्नत्वेन प्रतियोगिताया विशेषणाद्वा ।

स्वव्यापकेत्यस्य फलमाह "आलोकाद्यवृत्तित्वेने"ति, निर्व्वह्नि-वृत्तित्वत्वन्तु घटादि-साधारण्या आलोकाद्यवृत्त्यभाव-प्रतियोगितायां न व्यापकमिति भावः। तादृश-वृत्तित्वत्व-व्यापक-प्रतियोगितेत्यस्य फलमाह "यद्ये"ति, वह्नित्वावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकाभाव(२) प्रदर्शनार्थम् "इन्धने"ति,(३) साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्व(४) प्रदर्शनाय "वह्न्यभाव" इत्युक्तम् । मत्तानम-वृत्तित्वाभावस्य पर्व्वतीय-धूमादौ सत्त्वेऽपि धूमत्वावच्छेदेनासत्त्वात्, अन्यथा निर्धूम-वृत्तित्वाभावस्यार्द्रेन्धनज-वह्नौ

---

(१) तादात्म्येनेति तमादायाव्याप्तिः इति ग पुस्तके ।

(२) अभावत्व इति ख च पुस्तकयोः ।

(३) इन्धनत्वेनेति इति क ख पुस्तकयो ।

(४) त्वावच्छिन्न इति ग पुस्तके ।

सत्त्वादतिव्याप्तिस्तथाचासम्भव इति भावः। महानसावृत्ति-हेतु-स्थले महानस-वृत्तित्वाभावस्य सत्त्वात्तमादायासम्भवस्य स्फुटता न स्यादतोऽसम्भवमेव स्फुटीकर्त्तुं साधारण शब्देनाह "स्वनिष्ठे"ति, स्वनिष्ठं यत्साध्याभाववद्वृत्तित्वं तद्विरहस्येत्यर्थः। प्रमेयहेतुक-स्थलेऽपि एक-प्रमेय-निष्ठ-तादृश-वृत्तित्वस्य प्रमेयान्तरे योऽभावस्तस्य तत्रासत्त्वादसम्भव इत्येतत्सूचनायाह "हेत्वन्तरवृत्ते"रिति, हेतुता-वच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्व-प्रदर्शनायाह "हेत्वन्तरवृत्ते" रिति (१) कश्चित्। "वृत्ति"रव्याप्तिरसम्भवश्च (आद्यविशेषणा-भावेऽव्याप्तिः, द्वितीयाभावेऽसम्भव इति भावः (२)।

यत्तु (३) साध्य-समानाधिकरणत्वं हेतो(४)र्विशेषणं, (५) तेन जात्यभाववान् सत्त्वादित्यादौ जात्यभावाभाववत्समवेतत्वस्य तादृशा(६)भावो व्यधिकरण-धर्म्मावच्छिन्नाभाव एव, तस्य च सत्त्वादौ सत्त्वेऽपि नातिव्याप्तिरिति तन्न घटावृत्तित्वादेरपि जात्यभाव-व्याप-कतावच्छेदकतया तदवच्छिन्नाभाववत्समवेतत्वाभावस्य पटत्वादि-वृत्तेः सत्तायामभावादेवातिव्याप्त्यनवकाशात्। (परत्ववृत्तिसाध्यके अवृत्तिहेतुके वा अतिव्याप्ति-वारणाय साध्य-समानाधिकरणत्वं

---

(१) रिति तु इति क ख पुस्तकयोः।

(२) ( ) चिह्नमध्यस्थपाठो नास्ति क. ख. घ पुस्तकेषु।

(३) अत्र इति अधिक पाठः ख पुस्तके।

(४) हेतौ इति क पुस्तके।

(५) तद्धतो विशेषणं इति ख पुस्तके।

(६) एतादृशा इति क ख पुस्तकयोः।

हेतौ साध्यहेत्वोर्व्वा (१) तादृशवृत्तिमत्त्वं विशेषणमिति तत्त्वम्) (२)।

अत्रापि महाकालान्यत्वादि-साध्यके कालिकसम्बन्धेन हेतौ वक्ष्यमाणातिव्याप्तिर्ब्बोध्या, कालिकसम्बन्धेन वृत्तिमद्‌वृत्तेर्महाकालान्यत्वाभाववद्‌वृत्तित्वाभावस्य व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव (३) सम्भवात्। परन्तु तदतिरिक्त दोषाणामत्रासम्भव इति ज्ञात्वैव परेत्विति ज्ञात्वा एतस्य लक्षणस्य पृथगुपन्यास इति ध्येयम्।

दीधितिः।

अन्ये तु वृत्तिमद्‌वृत्तयो यावन्तः साध्याभाव-समुदायाधिकरण-वृत्तित्वाभावास्तद्वत्त्वं, तादृश-वृत्तित्वाभावश्च स्व--व्यापक--तादृशवृत्तित्वत्व--व्यापक--प्रतियोगिताको बोध्यः, प्रयोजनञ्चोक्तप्रायम्। साध्याभावाधिकरण-वृत्तित्वत्व-व्यापक-प्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्‌वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः समुदायेति। साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः, तेन समवायेन वह्निः साध्यत्वे धूमे, संयोगेन च तथात्वे वह्न्यवयवत्वे, पर्व्वत-वह्न्यवयव-संयोगे च

(१) साध्ये हेतौ वा इति क ख पुस्तकयोः।

(२) ( ) चिह्नितस्थले परन्त्ववृत्तिहेत्वोरतिव्याप्तिवारणाय यत्समानाधिकरणत्वं हेतौ तादृशवृत्तित्वं वा विशेषणमिति तत्त्वम् इति पाठः ग पुस्तके।

(३) धर्म्मावच्छिन्नस्यैव इति क ख पुस्तकयोः।

पर्व्वतस्य वह्न्यवयवस्य च सम्बन्ध-द्वयावच्छिन्न-वह्न्यभाव-द्वयानधिकरणत्वेऽपि नातिव्याप्तिः। तथा स्व-व्यापकी-भूत-साध्यतावच्छेदक-व्यापक-प्रतियोगिताकोऽपि बोध्यः, तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्ति-त्वाद्यवच्छिन्न-प्रतियोगिताकाभाव-कूटाधिकरणमप्रसिद्धं तत्र सद्धेतौ, पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्ना-भाववति सामान्यादाववर्त्तमाने द्रव्यत्व-प्रकारक-प्रमा-विषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्व्वा, नाप्यभावत्वा-दिना अभावादौ साध्ये तत्तत्साध्याभाव-कूटाधिकरणा-प्रसिद्ध्याऽव्याप्तिरित्याहुः।

---

दीधिति-प्रकाशः।

प्रमेयं घटत्वादित्यादौ साध्याभाव-समुदायाधिकरण-समवेतत्व-त्व-समनियत-प्रतियोगिताकस्य समवेतत्वत्वावच्छिन्न-प्रतियोगिता-क-समवेतत्वाभावस्याभावादि-वृत्तेर्हेतावभावादव्याप्तिरतो "वृत्ति-मद्वृत्तय" इति, तदर्थश्च पूर्व्ववद्बोध्यः। व्यधिकरण धर्म्मावच्छिन्न-प्रतियोगिताकस्य साध्याभाव-समुदायाधिकरण-वृत्तित्वाभावस्य व्यभिचारिणि सत्त्वादतिव्याप्तिरत उक्तं "यावन्त" इति। तादृश-साध्याभाववद्वृत्तित्वत्व-व्यापक-प्रतियोगिताकत्व-विवक्षया एव समु-दायपद-व्यावृत्ति-दानं सङ्गच्छते इत्याशयेन प्रथमत एव तादृश-वृत्तित्वाभावं व्याचष्टे "तादृशे"ति, "स्वव्यापके"ति, स्वं प्रति-

योगिता, तद्व्यापकं यत्साध्याभाव-समुदायाधिकरण-वृत्तित्वत्वं तद्व्यापक-प्रतियोगिताक इत्यर्थः । "उक्तप्राय"मिति, वह्निमान् धूमादित्यत्र (१) आलोकावृत्ति-वृत्तित्वत्वा(२)वच्छिन्नप्रतियोगिताकस्य वह्न्यभाव-समुदायाधिकरण-वृत्तित्वाभावस्य धूमेऽसत्त्वात् "स्वव्यापक तादृशवृत्तित्वत्वे"ति । तादृशवृत्तित्वत्व-व्यापक-प्रतियोगितेत्यस्य व्यावृत्तिस्तु न वह्निमान् धूमादित्यादौ, तत्र महानसादेः साध्याभाव-समुदायाधिकरणत्वाभावात्, किन्तु प्रमेयं घटत्वादित्यत्र, साध्याभाव-समुदायाधिकरणीभूत-घट-समवेतत्वाभावस्य तादृशस्य घटत्वेऽसत्त्वात्तादृश-वृत्तित्वत्व-व्यापकत्वं प्रतियोगितायामिति (३) । "अधिकरण-धर्म्मावच्छिन्नस्यैवे"ति, निर्धूम-वृत्तित्वाभाव-प्रतियोगिता न साध्याभाववद्वृत्तित्वत्व व्यापिका साध्याभावत्वेन साध्याभावस्य केवलान्वयितया तद्वृत्तित्वत्वस्य धूमादिनिष्ठ-वृत्तित्वेऽपि सत्त्वादतस्तादृश-वृत्तित्वाभावो अधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताक एव वृत्तिमति सम्भवतीति भावः । प्रतियोगिता-व्यापक-तादृश-वृत्तित्वत्वेत्यत्र समुदायपद-व्यावृत्तिस्तु आलोकावृत्ति-वृत्तित्वं नास्तीत्यभावस्य धूमादाववृत्तेरव्याप्ति-वारणाय पूर्व्ववदिति ध्येयम् ।

न च व्याप्यदले समुदायपदादाने धूमवान् वह्नेरित्यादौ नातिव्याप्तिः तत्र(४) जगद्वृत्तित्वाभाव-प्रतियोगितायाः साध्याभाव-

(१) इत्यादौ इति ग पुस्तके ।

(२) आलोकावृत्तित्वा इति घ पुस्तके ।

(३) प्रविष्टमिति शेषः ।

(४) अत्र इति नास्ति ग पुस्तके ।

कूटाधिकरण(१)वृत्तित्वत्वस्याव्याप्यत्वात्(२) निर्धूम-वृत्तित्वाभावस्य प्रतियोगितायाः साध्याभाववद्वृत्तित्वत्वाव्यापकत्वाच्च तादृशाभावाप्रसिद्धेः, किन्तु वह्निमान् धूमादित्यत्राव्याप्तिरुक्त-क्रमेणेति वाच्यं(३) व्याप्यदले हि समुदाय-पदादाने आलोकाद्यत्यभावस्य साध्याभाववद्वृत्तित्वत्व-व्यापक-प्रतियोगिताकत्वाभावात्तमादायाव्याप्तिरसम्भवेन स्व-व्यापकेत्यादि-पूर्व्वदलमेव न देयं, तथाच वह्निमान् धूमादित्यादौ अधिकरण धर्म्मावच्छिन्नाभावमादायैव लक्षण-गमनात्, किन्त्वतिव्याप्तिरेव, अतएव पूर्व्वदलं परित्यज्य "साध्याभाववद्वृत्तित्वत्व व्यापक-प्रतियोगिताकस्ये"ति केवलमुक्तम् । व्याप्यदिग्नि (४) समुदायपद-दाने चालोकाद्यत्यभावोऽपि तादृश-समुदायाधिकरण-वृत्तित्वत्व-व्यापक-प्रतियोगिताक इति तमादायाव्याप्ति-भयेन पूर्व्वदलं सप्रयोजनमिति भावः । "धूमे" इति सप्तम्यन्त-त्रयं "नातिव्याप्ति"रित्यनेनान्वितम् (५) । "तथात्वे" साध्यत्वे, ननु समवायेन वह्निमति धूमस्य वह्न्यन्तरस्य च संयोग-सत्त्वेऽपि तस्य वृत्त्यनियामकत्वात् तादृशसाध्ये धूमो वह्न्यवयवत्वञ्च विरुद्धं, तच्च साध्यसमानाधिकरण्य-निवेशेनैव वारणीयम्, आकाशादि-साध्यक-विरुद्धादि-वारणाय तद्विशेषणस्यावश्यकत्वादत आह "पर्व्वत-वह्न्यवयव-संयोगि चे"ति, समवायेन संयोगेन च (६) साध्यत्वेऽपि पर्व्वत-

(१) भावाधिकरण इति ग पुस्तके । (६) वह्नेः इति अधिकं घ पुस्तके ।

(२) वृत्तित्वत्वस्याव्यापकत्वादिति घ पुस्तके ।

(३) उक्तक्रमेणैतत्कथमिति वाच्यं इति घ पुस्तके ।

(४) व्याप्यदले इति घ पुस्तके ।

(५) अन्वेति इति क, घ पुस्तकयोः ।

वह्न्यवयव-संयोगो व्यभिचारी। इदमुपलक्षणं काल-भिन्नमात्मत्वादित्यत्र दैशिकसम्बन्धावच्छिन्न-काल-भेदाभाव-कालिक-सम्बन्धावच्छिन्न-काल-भेदाभाव-द्वयाधिकरणाप्रसिद्धा, प्रमेयमात्मत्वादित्यत्र कालिकसम्बन्धावच्छिन्न-प्रमेयत्वाभाव-घटित-कूटाधिकरणं काल-भिन्नमेव तद्वृत्तित्वाभावस्यात्मत्वेऽसत्त्वादव्याप्तिरपि द्रष्टव्या। "सम्बन्धद्वये"ति, पर्व्वतस्य संयोगावच्छिन्न-वह्न्यभावानधिकरणत्वं, वह्न्यवयवस्य समवायावच्छिन्नवह्न्यभावानधिकरणत्वमित्यर्थः (१)। यद्यप्युत्पत्ति-कालावच्छेदेनोभयोरभावद्वयाधिकरणत्वमस्त्येव (२) तथापि संयोगी सत्त्वादित्यत्रातिव्याप्ति वारणाय विवक्षणीयस्य तावदभावस्य व्याप्यवृत्तिता-निरूपकाधिकरणत्वस्य पर्व्वते वह्न्यवयवे चासम्भव इत्यभिप्रायेणेदम्। वस्तुतस्तु तत्तदधिकरणे साध्यतावच्छेदक-सम्बन्धेन स्व-प्रतियोगितावच्छेदक विशिष्ट-साध्यवत्ता ग्रह-विरोधिता-नियामकसम्बन्धेनैव साध्याभावाधिकरणता वाच्या। न तु सम्बन्धसामान्येन दैशिकसम्बन्धेन वा, द्रव्यं गुणादित्यादौ कालिकसम्बन्धेन साध्याभावकूटाधिकरणे काले गुणस्य वृत्तेः। कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशत्वाभावस्याभावे साध्ये तदभावस्याकाशत्वाभावस्य दैशिकतयाधिकरणे आत्मनि आत्मत्वादेश्च वृत्तेरव्याप्तेः। तथाच संयोगी-सत्त्वादित्यत्रापि नातिव्याप्तिः, संयोगाभावस्य द्रव्य वृत्तितायाः संयोगवत्ता-ग्रहाविरोधित्वेऽपि गुण-वृत्तितायाः विरोधित्वात्, गुणे

(१) करणत्वमिति बोध्यं इति क ख पुस्तकयोः।

(२) करणत्वमेव इति क च पुस्तकयोः।

च सत्तायाः सत्त्वात् । केवलान्वयिनि च तादृश-प्रतियोगितावच्छे-दक-विशिष्ट-साध्यवत्ता-ज्ञानं भ्रमरूपमेव प्रसिद्धं,भवति हि घटत्वेन वाच्यत्वं नास्तीत्यभाववत्ता-ज्ञाने नियमतो घटत्वविशिष्ट-वाच्यत्व-वत्ता-धी-प्रतिबन्धः । तथाच व्याप्यवृत्तित्वं तदनुरोधेन स्वातन्त्र्येण विशेषणं न देयम्, अतएवाह "पर्व्वतस्य वह्न्यवयवस्य च सम्बन्ध-द्वयावच्छिन्नाभाव-द्वयानधिकरणत्वेऽपी"ति ध्येयम् । किन्तु (१) कपि-संयोगाभाववान् मेयत्वादित्यादौ कपि-संयोग-घटित-तादृश-साध्याभाव-कूटस्य स्व-प्रतियोगितावच्छेदक-विशिष्ट-साध्यवत्ता-ग्रह-विरोधि-ग्रह-विषय-सम्बन्धाप्रसिद्ध्याऽव्याप्तिरतो व्याप्यवृत्ति-त्वमभावे विशेषणमावश्यकं, कपि-संयोगस्तु यत्किञ्चिदधिकरणेऽपि न व्याप्यवृत्तिरिति तत्र व्यधिकरण-धर्म्मावच्छिन्नाभावमादायैव लक्षण-समन्वय इति ध्येयम् ।

अत्र (२) सम्प्रदाय-मते वृत्तिमत्त्वमपि अभावे विशेषणं देयं, तेनाकाशाभाव-साध्यके नाव्याप्तिः । (तत्तुतस्तु व्याप्यवृत्तित्व-विशेषण-दानेनैवावृत्तिरूपोऽभावो वारित इति ध्येयम् ) (३) । अत्र पूर्व्वो-क्त-द्वितीय-रीत्या साध्याभावे उक्ते, नानाविपक्षके प्रायस एवा-व्याप्तिस्तत्तद्विपक्षावृत्तित्वावच्छिन्नाभाव-कूटाधिकरणाप्रसिद्धेरतोऽ-न्यथा साध्याभावं निर्व्वक्ति "तथे"ति । "स्वे"ति, स्वं प्रति-योगिता, तद्व्यापकीभूतं यत्साध्यतावच्छेदकं तद्व्यापिका या

(१) किञ्चित्पात्र यदि च इति च पुस्तके ।

(२) अत्र च इति क पुस्तके ।

(३) ( ) एतच्चिह्नमध्यस्थपाठो नास्ति च पुस्तके ।

तदभावप्रतियोगिता तादृशाभाव इत्यर्थः (१) । "स्व-व्यापके"त्यस्य व्यावृत्तिमाह "पृथिवीत्वाभावादा"विति, वह्निमान् धूमादित्यादौ संयोगावच्छिन्न-तत्तद्वृत्त्यवृत्तित्वावच्छिन्न-प्रतियोगिताकाभावकूटाधिकरणं गुणाद्येव प्रसिद्धम्, अतस्तत्र कूटाधिकरणाप्रसिद्ध्या नाव्याप्तिः, किन्तु कूटाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या, तादृशाव्याप्तिस्तु(२) निरुक्तसाध्याभाव-विवक्षणेऽपि, सत्तावान् जातेरित्यादौ भविष्यतीति तन्नोदाहृतम् । पृथिवीत्वाभावस्य विपक्षः पृथिवी तद्वृत्तित्वावच्छिन्नाभावस्य यावत्-पृथिवी-वृत्तित्वात् कूटाधिकरणस्य नाप्रसिद्धिरत"स्तत्र"दिति । "तत्र सद्धेतौ" "नाव्याप्ति"रित्यनेनान्वयः । यावतामेकाधिकरणं सम्भवतीति विवक्षायामप्युक्ताव्याप्तिरुद्धर्त्तुं शक्यत इत्यत आह "पृथिवीत्वादा"विति, जातित्वावच्छिन्नाभावस्य साधन-समानाधिकरणत्वेन साध्याभावे विशेषितेऽपि वारण-सम्भवादाह "आदौ"ति, तथाच जलावृत्तित्वावच्छिन्नाभावस्य तेजोऽवृत्तित्वावच्छिन्नाभावस्य च तादृशस्य कूटाधिकरणे जात्यादाववृत्तेरतिव्याप्तिर्द्रष्टव्या । समवायेन हेतुतायां तादृशसाध्याभाव-कूटाधिकरणे जात्यादौ समवायेन वृत्तेरप्रसिद्ध्यातिव्याप्ति-विरहात् द्रव्यत्वमुपेक्ष्याह "द्रव्यत्वप्रकारके"ति, सर्व्वं द्रव्यमिति भ्रम-विषयत्वस्य जात्यादावपि सत्त्वादाह "प्रमे"ति । साध्याभावस्य साधन-समानाधिकरणत्व-विशेषणेऽपि

(१) तद्व्यापिका यदभावप्रतियोगिता तदभाव इत्यर्थ इति ख पुस्तके ।

(२) कूटाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धिनिबन्धनाव्याप्तिरित्यर्थः ।

प्रतियोगितायाः साध्यतावच्छेदक-व्यापकत्व-विवक्षण-प्रयोजन-माह "नाप्यभावत्वादिने"ति, आदिपदेन (१) प्रमेयत्वेन प्रमेयादेः साध्यता-लाभः। एवञ्चात्र व्यधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताको भावत्वेनाभावाद्यभाव एव लक्षण-घटक इति ध्येयम्। "तत्तत्साध्ये"ति, घटत्वाभावाभावस्य घटत्वस्य पटत्वाभावाभावस्य पटत्वस्य चैकाधिकरण्याभावेन तद्घटित कूटाधिकरणाप्रसिद्धेरिति भावः।

यावतामेकाधिकरण्यं सम्भवतीति विवक्षायामपि व्यधिकरण-धर्म्मावच्छिन्नाभाव-समूहेन घटत्वस्यैकाधिकरण्य-सम्भवात् तद्घटित-कूटाधिकरण घट वृत्तित्वाभावस्य हेतावभावादव्याप्तिरेव, अतएव भूतत्व-मूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादावतिव्याप्तेर्वारणाय (२) यादृश साध्याभाव कूटाधिकरणं साधनाधिकरणं तादृश-कूटवद्वृत्तित्वाभाव इत्युक्तावपि तत्राव्याप्तिरिति (३) ध्येयम्। न च प्रमेय-साध्यके घटत्वाभावत्वेन प्रमेय-सामान्याभावस्य पटत्वाभावत्वेन प्रमेयसामान्याभावस्य च (४) साध्यतावच्छेदक-समनियत-प्रतियोगिताकस्य तादृश-व्यधिकरण-धर्म्मावच्छिन्नाभावेन समं सम्भवदैकाधिकरण्यस्याधिकरणे घटादौ प्रमेयत्वादि हेतोर्वृत्तेरव्याप्तिरिति वाच्यम्। स्व न्यूनवृत्ति-समाना-

---

(१) आदिपदेनेत्यत्र आदिना इति क, घ पुस्तकयोः।

(२) व्याप्तिवारणाय इति घ पुस्तके।

(३) अव्याप्तिरेवेति इति ग पुस्तके।

(४) पटत्वाभावत्वेन प्रमेयसामान्याभावस्य च इति नास्ति ग पुस्तके।

धिकरण-धर्म्मानवच्छिन्न-प्रतियोगितायाः साध्यतावच्छेदक-सम-नियतत्व-विवक्षणात्। यावत्प्रमेयनिष्ठ-प्रतियोगितायाश्च स्व-न्यून-वृत्ति समानाधिकरणमेव घटत्वाभावत्वादीति तदवच्छिन्न-प्रमेय-सामान्याभावस्य लक्षणाघटकत्वात्। अत्र च तदभाव-निरूपि-ताया यत्किञ्चित्प्रतियोगिता-व्यक्तेः समनैयत्यं वाच्यम्। तेन वह्निमान् धूमादित्यादौ वह्नित्वावच्छिन्न-वह्न्यभाव प्रतियोगिताया वह्नि-ध्वंस-प्रागभाव-निष्ठाया, घटत्वेन वह्न्यभावस्यापि वह्नित्वेन घटाभावाभिन्नतया घटादि-निष्ठायाः, स्वीय-विशिष्टाभावादि-निष्ठाया व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रतियोगिताया अव्याप-कत्वेऽपि वह्नित्वस्य न क्षतिः। इदन्तु प्रतियोगि भेदेऽपि प्रति-योगितावच्छेदकैक्येन प्रतियोगितैक्यमते (१) उक्तम्। प्रतियोगि-भेदेन प्रतियोगिता भेदे तु यदभावीय-यत्किञ्चिदवच्छेदका (२) वच्छिन्न-प्रतियोगितात्वेन साध्यतावच्छेदक-समनैयत्यं वाच्यं, तेन नानाव्यक्तिसाध्यक-संग्रहः। न च प्रमेयं वाच्यत्वादित्यादौ घट-त्वेन प्रमेयत्वा(३)भावस्यापि (४) घटत्वेन वाच्यत्वाभावाभिन्नतया घटत्वावच्छिन्न-प्रतियोगितात्वेनापि न प्रमेयत्वत्व समनैयत्यमिति वाच्यम्। प्रमेयत्व-भिन्नत्वेन प्रमेयत्वं नास्तीति धी बलात् प्रमेयत्व-भेदस्यापि तादृशाभाव-प्रतियोगितावच्छेदकत्वात् तदवच्छिन्न-

(१) मतेन इति क पुस्तके।

(२) यत्किञ्चित्प्रतियोगितावच्छेदक तद इति ग पुस्तके।

(३) प्रमेयत्वाद्य इति क पुस्तके।

(४) अपि इति नास्ति ख पुस्तके।

तादृशाभाव-प्रतियोगितायाः प्रमेयत्वमात्र-निष्ठतया प्रमेयत्वत्व-समनियतत्वात्। एवञ्च (१) वह्नि-भिन्नत्वेन वह्निर्नास्तीति धी (२) बलात् तादृश-प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताया वह्नित्व-समनियतत्वात्, तदभावोपि लक्षण-घटको भवतीति ध्येयम्। पृथिवी-समवेतवान् मेयत्वादित्यत्र पृथिवी-समवेतत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि पृथिवी-समवेतमिति धी(३)विशेष्यत्वावच्छिन्न-प्रतियोगिताकः पृथिव्यवच्छिन्न-प्रतियोगिताको वाऽभावः साध्यतावच्छेदक-समनियत-प्रतियोगिताक इति न तत्रातिव्याप्तिरिति।

दीधितिः।

तन्न द्रव्यत्व-पृथिवीत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः। अपिच इदं पृथिव्यन्य-द्रव्यत्ववत् द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरण-गुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तेः, द्रव्यत्वत्वावच्छिन्न-प्रतियोगितायाः पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्वत्व-सम-व्याप्तत्वात्। किञ्च रूपाभाव-साध्यके सद्धेतौ साध्याभाव-समुदाय--निविष्ट--सकलरूप---व्यक्त्यधिकरणाप्रसिद्धेः।

(१) च इति नास्ति ख पुस्तके। (२) मेतद्धी इति ख पुस्तके।
(३) धी इत्यत्र प्रतीति इति पाठ ख पुस्तके।

यावतामभावानामैकाधिकरण्यं तावतां समुदाये विवक्षितेऽपि इदं पृथिवी-वृत्ति-गुण-शून्यं सत्तान्य-पृथिवी-समवेत-शून्यं वा वायुत्वात्, रूपवदन्यत्वादित्यादावतिव्याप्तिः । तत्र तादृश-साध्याभाव-स्तोमस्य नियमतो रूपादि-घटितत्वेन तद्वति तद्धेतोरवृत्तेः । वस्तुतो निखिलानामेव रूपाणां तादृशाभाव-सहस्र-समानाधिकरणत्वात्, समानाधिकरण-यावदभावाधिकरणाप्रसिद्धिर्दुर्व्वारैव ।

---

दीधिति-प्रकाशः ।

ननु स्व-व्यापक-साध्यतावच्छेदकेत्यस्य स्वावच्छेदक-समानवृत्तिक(१)स्व-व्यापकीभूत-साध्यतावच्छेदकेत्यर्थस्तथाच नेदं दूषणं, साध्यतावच्छेदकोभयत्वस्य व्यासज्यवृत्तितया प्रत्येक-पर्य्यवसित वृत्तिक-तादृश-प्रतियोगितावच्छेदकान्यतरत्वासमान वृत्तिकत्वादत आह "अपि चे"ति "द्रव्यत्वादित्यादा"विति, आदिपदात् जलादि-वृत्तित्व विशिष्ट-द्रव्यत्वत्वानामवच्छेदकानां संग्रहः (२)। ननु सार्व्वभौम-मते विशिष्टमतिरिक्तमेवेति द्रव्यत्वत्वावच्छिन्नाभावो मोक्त-साध्यतावच्छेदक समनियत-प्रतियोगिताकः, अनतिरेके तु परम्परया पृथिव्यन्यत्व द्रव्यत्व-सम्बन्धस्यैव तत्र साध्यत्वाभोक्त-

---

(१) प्रतियोगितावच्छेदक-पर्य्याप्त्यवच्छेदक-धर्म्मावच्छिन्न-पर्य्याप्तिकेत्यर्थः ।

(२) अयं इति ख पुस्तके ।

दोष (१) इत्यत आह "किञ्चे"ति। केचित्तु विशिष्टे (२) पर्य्याप्तैव विशिष्टाभाव-प्रतियोगिता, तथाच समनैयत्यं समनियतावच्छेदकत्वं (३) * द्रव्यत्वाभाव-प्रतियोगिता च (४) पृथिव्यवच्छेदेनापि द्रव्यत्वे वर्त्तते (५) न तु तदवच्छेदेन तत्र पृथिव्यन्यत्व-विशिष्ट-द्रव्य-

---

* समनियतावच्छेदकत्वमित्यस्य समनियतावच्छेदकत्वकत्वमित्यर्थः। एवञ्च साध्यतावच्छेदकावच्छेदकता-समनियतावच्छेदकताक-प्रतियोगिता, साध्यतावच्छेदकसमनियतप्रतियोगितापदेन विवक्षणीया। अथवा अवच्छेदकता-सम्बन्धेन साध्यतावच्छेदक-समनियतप्रतियोगितैव तादृशप्रतियोगितापदार्थः। समनियतत्व-घटक-व्याप्यत्वव्यापकत्वे साध्यतावच्छेदके प्रतियोगितायाश्चोभयत्रैवावच्छेदकता-सम्बन्धेन बोध्यं इति भावः। केचित्तु समनियतावच्छेदकत्वं समानावच्छेदककत्वं एवञ्च प्रतियोगित्व-साध्यतावच्छेदकयोरेकावच्छेद्यत्वं विवक्षितम्। तथाच साध्यतावच्छेदकावच्छेदकं यादृशप्रतियोगिताया अवच्छेदकं भवति, तादृशप्रतियोगिता इति प्रतियोगितान्तार्थः। नोक्तसाध्यतावच्छेदकेत्यादेरपि नोक्तसाध्यतावच्छेदक-समानावच्छेदककप्रतियोगिताक इत्यर्थः इत्यभिप्रायः। किन्तु समनियतो "अवच्छेदो" अवच्छिन्नत्वं ययोः तौ समनियतावच्छेदकौ तयोर्भावः समनियतावच्छेदकत्वं, अवच्छिन्नत्वयोः समनैयत्यं तादात्म्येन। तथाच साध्यतावच्छेदके यदवच्छिन्नत्वं प्रतियोगितायामपि तदवच्छिन्नत्वस्य लाभः। एवञ्च साध्यतावच्छेदकनिष्ठावच्छेद्यत्वाभिन्ना या अवच्छेद्यता तद्वती या प्रतियोगिता तन्निरूपकाभाव इति फलितम्। साध्यतावच्छेदक-समनियतावच्छेदकप्रतियोगिताक इत्यत्र साध्यतावच्छेदकपदस्य साध्यतावच्छेदकावच्छेदोऽर्थः, तथाच तादृशावच्छेदेन समनियतो अवच्छेदो यस्याः सा तादृशी प्रतियोगिता तन्निरूपकोऽभाव इत्यर्थ इति प्राहुः।

(१) साध्यत्वे नोक्तदोषः इति घ पुस्तके।

(२) विशिष्ट इति क, घ पुस्तकयोः।

(३) अवच्छेदकत्वमिति ग पुस्तके।

(४) योगिता तु इति क ख घ पुस्तकेषु।

(५) वर्त्तते इति नास्ति क ख घ पुस्तकेषु।

त्वत्वमिति द्रव्यत्वाभावो (१) नोक्त-साध्यतावच्छेदक-समनियता-वच्छेदक-प्रतियोगिताक * (२) इत्यतः "किञ्चे"तीत्याहुः।

परे तु प्रतियोगितावच्छेदकावच्छिन्न-साध्यतावच्छेदकावच्छिन्नयोः समनैयत्यं वाच्यं, तेन द्रव्यत्वत्वावच्छिन्नाभाव-निरासः। द्रव्यत्वत्वावच्छिन्न-पृथिव्यन्य-द्रव्यत्वत्वावच्छिन्नयोः समनैयत्या-भावादिति (३)। वह्निमान् धूमादित्यत्र वह्नित्वेन घटाभावं वह्नित्वावच्छिन्न-वह्न्यभावं चादाय लक्षण-समन्वयः। प्रमेयवान-भिधेयात् (४) सत्त्वादित्यादौ स्वरूपसम्बन्धेन समवाय-सम्बन्धेन च साध्यतायां वाच्यत्वत्वादिना सत्तात्वादिना वा घटाभाव-मादाय लक्षण-समन्वयः (५)। तथाच स्व व्यापक-साध्यतावच्छेदकेत्या-द्यस्य (६) स्वावच्छिन्न-व्यापक(७)साध्यतावच्छेदकावच्छिन्न-व्याप-कतावच्छेदक-रूपावच्छिन्न-प्रतियोगिताकोऽर्थः (८) स्वं प्रतियोगि-

* समनियतावच्छेदक इत्यत्रावच्छेदकपदं अवच्छेदकत्वपरं, तथाचावच्छेदकत्व-सम्बन्धेन साध्यतावच्छेदक-समनियतप्रतियोगिताक इति प्रतियोगिताकान्तस्यार्थः इत्याशयः।

(१) द्रव्यत्वत्वावच्छिन्नाभावो इति क ख पुस्तकयोः।

(२) योगितावच्छेदक इति ग पुस्तके।

(३) इति नास्ति क पुस्तके।

(४) प्रमेयवान् मेयत्वात् इति ख पुस्तके।

(५) इत्यप्याहुरिति अधिकपाठः ख पुस्तके।

(६) इत्येत्यादेरिति ख पुस्तके।

(७) स्वावच्छेदकावच्छिन्नव्यापकतावच्छेदक इति ग पुस्तके।

(८) प्रतियोगिताकेत्यर्थः इति ग पुस्तके।

तावच्छेदकं (१) अतएव विशिष्टाभाव-निरासः (२)। अतएवात्र स्वन्यूनेत्यादि न देयमित्यत आह किञ्चेती(३)त्याहुः, तत्र प्रमेयवानभिधेयादित्यादौ तादात्म्येन साध्यतायां तादृश-समनियत-प्रतियोगिताकाभावाप्रसिद्धेरिति।

"अप्रसिद्धे"रिति, कालस्य सकल-रूपाधिकरणत्वेऽपि साध्यवत्ता-ग्रह-विरोधि-सम्बन्धेनानधिकरणत्वादिति पूर्व्वोक्त-युक्त्या (४) तस्यावश्यं वक्तव्यत्वात् (५) इति ध्येयम्।

संयोगाभाव-साध्यके संयोग-रूप-साध्याभावस्य यत्किञ्चिदधिकरणे व्याप्यवृत्तित्वाभावात् तादृश-साध्याभावो व्यधिकरण-धर्म्मावच्छिन्नाभाव एव, तत्कूटाधिकरणस्याप्रसिद्धयभावात् रूपाभावानुसरणम्। रूपस्याव्याप्य-वृत्तित्वेऽपि जलादि-परमाणु-रूपाणां व्याप्यवृत्तित्वात् तत्कूटाधिकरणस्याप्रसिद्धिर्बोध्या। "यावता"मिति, तथाच व्यधिकरण-धर्म्मावच्छिन्नाभावमादायैव सम्भवदेकाधिकरणस्य (६) तत्तद्रूपस्याधिकरणे वृत्तित्वस्य प्रसिद्धि-सम्भवान्नाव्याप्तिरिति भावः। "पृथिवी"ति; पृथिवीपदमेतत् पृथिवीपरम्, अन्यथा घटवायुवृत्ति(७)द्वित्व-पट-वायुवृत्ति(८)

(१) स्वं प्रतियोगितावच्छेदकं इति नास्ति ग पुस्तके।

(२) अतएव विशिष्टाभावनिरास इति नास्ति घ पुस्तके।

(३) त्यत आह किञ्चेती इति नास्ति ग पुस्तके।

(४) युक्त्या इत्यत्र रीत्या इति पाठः घ पुस्तके।

(५) वक्तव्यत्वादित्यत्र वाच्यत्वादिति घ पुस्तके।

(६) सम्भवदेकाधिकरणस्य इति क पुस्तके।

(७) वृत्ति इति नास्ति क, घ पुस्तकयोः।

(८) वृत्ति इति नास्ति क, घ पुस्तकयोः।

द्वित्वयोर्वायौ सम्भवदेकाधिकरण्ययोरधिकरणत्वस्य वायोरेव (१) सम्भवात् तद्वृत्तित्वाभावस्य हेतावभावा(२)दतिव्याप्तेरभावात् । * नन्विदं पृथिवी-वृत्ति-गुण-शून्यं वायुत्वादिति सद्धेतुरेव, अन्य(३) वायावुत्पत्तिकालावच्छेदेन नित्ये च महाप्रलयावच्छेदेन पृथिवी-वृत्ति(४)गुण-सामान्याभाव-सत्त्वादत आह "सत्तान्ये"ति । समवेतत्वावच्छिन्नाभावे साध्ये नातिव्याप्ति-सम्भावना, सम्भवदेकाधिकरण्य(५)समवेतकूटस्याधिकरणे वायौ हेतोर्वृत्तेः । पृथिवी समवेत-प्रतियोगिकाभावत्वेन साध्यतायां सद्धेतुत्वं, पृथिवी-समवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वान्न साध्यः, लाघवेन तदभाव-प्रतियोगितायाः समवेतत्वाद्य(६)वच्छेद्यत्वात् । पृथिव्यवच्छिन्नाभावस्य सम्भवेऽपि समवेताभाव-समनियततया समवेतमात्रस्यैव तत्तदभावतया (७) तद्घटित-कूटाधिकरणत्वस्य वायौ सम्भवादतः "पृथिवी"ति, "सत्तान्ये"ति च । अत्रापि पृथिवी पदमेतत् पृथिवीपरं, पृथिवी-वृत्ति पदं वा पृथिवी-पर्य्याप्त वृत्तिक परम् । तेन न पूर्व्वोक्त रीत्या वायोरपि तादृशाभाव-कूटाधिकरणतेति ध्येयम । वायुत्वस्य विकल्प-तया साध्य सामानाधिकरण्य-विशेषणेनैव वारणादाह,"रूपवदन्य-

* ननु घटवायुद्वित्व-पटवायुद्वित्वादीनां अव्याप्यवृत्तित्वेनैव तादृशकूट-निविष्टत्वं नाप्नोति चेन्न व्याप्यवृत्तित्वं देशानवच्छिन्नवृत्तिकत्वरूपं पारिभाषिकं विवक्षणीयं, तथाच तेषां कालावच्छिन्नवृत्तिकत्वेऽपि देशानवच्छिन्नवृत्तिकत्वरूपं व्याप्यवृत्तित्व-मक्षतमेवेति भावः ।

(१) वायावेव इति क पुस्तके ।
(२) हेतावसत्त्वा इति क पुस्तके ।
(३) अन्ये इति क पुस्तके ।
(४) वृत्ति इति नास्ति क पुस्तके ।
(५) करण्यापन्न इति ख पुस्तके ।
(६) तत्पमात्वा इति ख पुस्तके ।
(७) तदभावतया इति ख पुस्तके ।

त्वादि"ति, रूपाभावस्योत्पत्तिकाले पृथिव्यामपि सत्त्वादाह, "अन्यत्वादि"ति। एतस्य हेतोर्गुणादौ प्रकृत-साध्य-सामानाधिकरण्यमिति मन्तव्यम्।

ननु सत्तान्य-पृथिवी-समवेताभावस्य सत्तान्य-द्रव्यसमवेता-भावाभिन्नतया सत्तान्यद्रव्यसमवेत-मात्रस्यैव तदभावतया सम्भवदेकाधिकरणानां वायुमात्रसमवेत (१) तदभावकूटानामधि(२) करणे वायौ हेतोर्वृत्तेर्नातिव्याप्तिरित्यस्वरसादाह "वस्तुत" इति। तादृशाभावो व्यधिकरण-धर्मावच्छिन्न-प्रतियोगिताको घटत्वादिना रूपसामान्याभावाभावः। तथाच सर्व्वाण्येव रूपाणि तादृशाभाव-सहस्रेण सम्भवदेकाधिकरणानीति तावदधिकरणा प्रसिद्ध्याऽव्याप्तिरिति भावः।

दीधितिः।

किञ्च हेतुतावच्छेदक-सम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो व्यक्तव्यः। अन्यथा धूमादाव-व्याप्तिः, साध्यतावच्छेदक सम्बन्धेन साध्याभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तेः, व्यभिचारिण्यति-प्रसङ्गो वा, तथाच सत्तादि-साध्यके संयोगेन समवायेन वा हेतावव्याप्तिः। साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः। साधन-समानाधिकरणत्वेन साध्याभावा

(१) वेततया इति ग पुस्तके।

(२) भावकूटाधि इति ग पुस्तके।

विशेषणीयाः इति चेत् ? विशेष्यन्तां, तथापि भूतत्व-भूर्त्तत्वाद्योरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः, तादृशसाध्याभाव-समुदायवति पृथिव्यादौ तस्यावृत्तेः । किञ्च महाकालान्यत्वादि-साध्यके व्यभिचारिणि कालिकविशेषणता-विशेषेण हेतावतिव्याप्तिः, तादृश-साध्याभाव-समुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः । एतेन साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदक--रूपावच्छिन्न-प्रतियोगिताक-व्याप्यवृत्ति--स्व--समानाधिकरण--यावदभावाधिकरण-वृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिः । केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः, एवं साध्यस्य गुण-सामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्ति-कालावच्छेदेन वर्त्तमानोऽपि न व्याप्यवृत्तिः । उक्तरूपावच्छिन्न-प्रतियोगिताकाः क्वचिदप्रसिद्ध्यादि-सम्पादकाः पुनरभावा न हेतु-समानाधिकरणाः । उक्त-समुदायाधिकरण-वृत्तित्व-तदभाव वृत्तिमत्त्वानि पूर्व्वोक्त-रीत्या प्रत्येतव्यानीत्यादिकमपास्तम् ।

इति दीधितौ सार्व्वभौम-लक्षण-प्रकरणं समाप्तम् ।

---

दीधिति-प्रकाशः ।

ननु यादृश-साध्याभावस्तोमेन समानाधिकरणो यादृश-साध्याभावस्तादृशकूटवद्वृत्तित्वाभावा यावन्तस्तद्वत्त्वं विवक्षितं, प्रकृते च तत्तद्रूपस्य व्यधिकरण-धर्म्मावच्छिन्नाभाव स्तोम(१)समानाधिकरणस्याधिकरणं तत्तद्रूपाधिकरणमेव प्रसिद्धं तद्वृत्तित्वाभावस्य वायुत्वे सत्त्वादेव नाव्याप्तिरतः "किञ्चे"ति ।

(ऐकाधिकरण्यावच्छेदक-यावत्त्वावच्छिन्नाधिकरणत्वं निरुक्त-समुदायाधिकरणत्वं वक्तव्यं, निखिल-रूप-वृत्ति-यावत्त्वन्तु नैकाधिकरण्यावच्छेदकम्, अपि तु तद्रूप-व्यधिकरण-धर्म्मावच्छिन्नाभाव-यावत्त्वमिति, तदवच्छिन्नाधिकरणं प्रत्येक-रूपाधिकरणमेव प्रसिद्धम् अतः "किञ्चे"त्यपि कश्चित्) (२) ।

यत्तु साध्यतावच्छेदक-समनियत-प्रतियोगितात्व व्यापकं यदधिकरण-वृत्त्यभाव-प्रतियोगितात्वं तदेव निरुक्त-समुदायाधिकरणं वाच्यं, प्रकृते च रूपसामान्याभावनिष्ठाया यावद्रूपनिरूपितायाः प्रतियोगिताया एकत्वात् तत्तद्रूपाधिकरण-निष्ठाभाव-प्रतियोगितात्वं तादृश-प्रतियोगितात्व-व्यापकमेवेति तत्तद्रूपाधिकरणमेव तादृशकूटाधिकरणं प्रसिद्धमतः "किञ्चे"ति, तन्न प्रथमत एव तथा विवक्षणे भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र वक्ष्यमाणाति-व्याप्तेरलग्नतापत्तः, तत्रापि तादृशान्यतराभावनिष्ठायाः प्रतियोगिताया एकत्वात्, मनोनिष्ठाभावप्रतियोगितात्वस्य तादृश-

(१) स्तोमेन इति घ पुस्तके ।

(२) ( ) चिह्नितपाठो नास्ति क, ख, घ पुस्तकेषु ।

प्रतियोगिताख-व्यापकत्वात्, मनसोऽपि निरुक्तकूटाधिकरणत्वे-नातिव्याप्तेरभावात् ।

साध्याभाव-समुदायाधिकरण-वृत्तित्वस्य समवेतत्वत्वादिना-ऽभावः सम्बन्धत्वेन वा ? आद्ये "धूमादा"विति, तादृश-साध्या-भावकूटवत्समवेतत्वाभावस्य संयोगेन वृत्तिमति परमाणौ वर्त्त-मानस्य धूमेऽभावादित्यर्थः । अन्त्ये "साध्यतावच्छेदकेत्यादि", कालस्य वृत्तिमन्मात्राधिकरणत्वात्, साध्याभाव एव तत्र कथमतः "साध्यतावच्छेदकसम्बन्धेने"ति, तथाच कालिकसम्बन्धेन साध्य-सत्त्वेऽपि साध्यतावच्छेदक-सम्बन्धेन तदभावो न विरुद्धः, लक्षणे च तेन सम्बन्धेनाभावस्यैव निवेशादिति भावः । "कालादा"वित्या-दिना दैशिकतया विषयितया च सर्व्वाधिकरणीभूत-दिक्-सर्व्व-विषयक-ज्ञानादि-संग्रहः । "व्यभिचारिणि"धूमवान् वह्नेरित्यादौ, न तु चरम-ध्वंस-भिन्नसाकाशाभावादित्यादौ, तादृशसाध्याभाव-कूट(१)वच्चरमध्वंससम्बन्धित्वा(२)भावस्य घटादि-प्रागभावात्मक-वृत्तिमद्वृत्तेर्हेतावभावादिति । "सत्तादौ"त्यादिना संयोगेन समवायेन वा प्रमेयसामान्य-जात्यन्यत्वादेः (३) साध्यतायाः संग्रहः । "साधनसमानाधिकरणत्वेने"ति, इत्थञ्च सर्व्वत्र सद्धेतौ व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव तादृशस्य साधन-सामानाधि-

---

(१) कूट इति नास्ति ग पुस्तके ।

(२) सम्बन्धत्वा इति ग पुस्तके ।

(३) जात्यन्यत्व इति नास्ति ग पुस्तके ।

करणात् (१) तमादायैव लक्षण-समन्वयः (२)। व्यभिचारिणि (३) व्यभिचार-निरूपकाधिकरण-वृत्ति (४) समानाधिकरण-धर्म्मावच्छि-न्नाभावस्यापि तादृशत्वा(५)त्तमादायैव नातिव्याप्तिः। इत्यञ्च यथा साध्यतावच्छेदक-समनियत-प्रतियोगिताकत्वस्य व्यावृत्ति-स्तथा पूर्व्वमावेदितम्। न चैवमपि सत्तावान् जातेरित्यादौ गुणान्यत्व-विशिष्ट-सत्ताभावस्य कर्म्मान्यत्व-विशिष्ट-सत्ताभावस्य च तादृशत्वात् तद्घटित-कूटाटिकरण-(६)सामान्यादौ समवायेन वृत्तेरप्रसिद्ध्याऽव्याप्तिरिति वाच्यं, विशिष्टस्यातिरिक्तत्वेन गुणान्यत्व-विशिष्ट-सत्तात्वस्य गुरुतया लाघवेन गुणान्यत्व-विशिष्टत्वस्यैवाव-च्छेदकतया गुणान्यत्व-विशिष्टद्रव्यत्वादावपि सत्त्वेन च तादृशा-भाव-प्रतियोगितायाः सत्तात्व-समनियतत्वाभावात्।

ननु भूतत्वं वहिरिन्द्रिय-ग्राह्य-जातीय-विशेषगुणवत्त्वं, मूर्त्तत्वं परिच्छिन्न-परिमाणवत्त्वं, तच्च तादृशविशेषगुण-परिमाणपर्य्यवसन्नं, तथाच स्पर्शवदन्यत्व-समानाधिकरणं यत् भूतत्वं मूर्त्तत्वञ्च शब्द-मनः परिमाणरूपं तच्च न पृथिव्यादाविति कथमतिव्याप्तिरत आह "आद्यो"रिति, भूतभेद-मूर्त्तभेदान्यतरत्वावच्छिन्नाभाववान् भूतमूर्त्तान्यतरत्वादित्यादौ इति उभयवादि-पदार्थः। भूतत्व-मूर्त्त-

(१) समानाधिकरणत्वात् इति ग पुस्तके।
(२) लक्षणसङ्गतिः इति ग पुस्तके।
(३) व्यभिचारिणि तु इति ग पुस्तके।
(४) व्यभिचारनिरूपकाधिकरणवृत्ति इति नास्ति ग पुस्तके।
(५) तादृशत्वादित्यत्र समानाधिकरणत्वात् इति पाठः ग पुस्तके।
(६) कूटाधिकरणे इति ग पुस्तके।

त्वोभयाभावे साध्ये स्पर्शवदन्यत्वादिकं सद्धेतुरेवेत्यतो "अन्यतर-त्वे,"ति। स्पर्श-सामान्याभावस्य उत्पत्ति-कालावच्छेदेन पृथिव्या-दावपि सत्त्वेरतो "ऽन्यत्वे"ति, "तादृश-साध्याभाव-समुदायवति" भूतत्व-मूर्त्तत्वाद्यात्मक-साधन-समानाधिकरण साध्यतावच्छेदक-समनियत-प्रतियोगिताकाभाववति।

ननु यावत्त्वं फलतस्तादृश प्रतियोगिताकत्व विशेषणं, तथाच साधनाधिकरणे स्वाश्रयद्वारक-सम्बन्धेन सम्बद्धं यावत्साध्यताव-च्छेदक-समनियत-प्रतियोगिताकत्वं स्वाश्रयद्वारकसम्बन्धेन यत्तद-धिकरणं तद्वृत्तित्वाभावोऽर्थः। भूतत्व मूर्त्तत्वोभयनिष्ठञ्च तादृशान्य-तराभावत्वावच्छिन्न-प्रतियोगिताकत्वमेकमेव, तत् प्रतियोगिताया ऐक्यात्तस्या एव च निरूपकता-सम्बन्धेन प्रतियोगिताकत्वात्मक-त्वात्, तथाच मूर्त्तत्व-निष्ठं यदन्यतराभावत्वावच्छिन्न प्रतियोगिता-कत्वं यच्च व्यधिकरण-धर्मावच्छिन्न-प्रतियोगिताकत्वं स्पर्शवदन्यत्व-समानाधिकरणं स्वाश्रयद्वारकसम्बन्धेन तावदधिकरणं मन एव, तद्वृत्तित्वाभावस्य तु स्पर्शवदन्यत्वऽसत्त्वादेव नातिप्रसङ्गः। साधन-समानाधिकरणाभाव-निरूपिता यावती (१) साध्यतावच्छेदक-समनियत-प्रतियोगिता (२) प्रत्येकं तत्तन्निरूपकाभावाधिकरणं यत्तदेव वा तादृश-कूटाधिकरणं, भवति हि तादृशान्यतराभाव-त्वावच्छिन्न-प्रतियोगिता निरूपक-मूर्त्तत्वात्मकाभाव घटित कूटा-धिकरणं मनोऽपीति नातिप्रसङ्गः। इत्थञ्च पृथिवी द्रव्यत्व प्रकारक-

(१) यावत्यः इति च पुस्तके।

(२) प्रतियोगिताः इति च पुस्तके।

प्रमा-विषयत्वात्, अभाववान् मेयत्वादित्यादौ चातिव्याप्त्यव्याप्त्योर्वारणाय प्रतियोगितायाः साध्यतावच्छेदक-व्याप्यत्व-व्यापकत्व-विवक्षणमपि सङ्गच्छते। न चैवमपि विशिष्टस्यानतिरिक्तत्व-मते पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्ववत् द्रव्यत्वादित्यादावतिव्याप्तिर्जलान्यत्व-विशिष्ट-द्रव्यत्वाभाव-पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्वाभावयोरपि साधन-समानाधिकरण-तादृशाभावतया तद्घटित-कूटाधिकरणत्वस्य गुण-एव सम्भवादिति वाच्यं साध्यतावच्छेदक-विशिष्ट-साध्यवद्वृत्तित्व-साध्यतावच्छेदक-व्यापकीभूत-स्व-समानाधिकरण--धर्म्मावच्छिन्न-प्रतियोगिताकत्वोभयाभाववत्त्व-रूपेण प्रतियोगि-व्यधिकरणत्वेनाभावस्य विशेषणात्। पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्ववत् द्रव्यत्वादित्यत्र पृथिव्यन्यत्व--विशिष्ट--द्रव्यत्वाभावस्य द्रव्यत्व-रूप-साध्यवद्वृत्तित्व-साध्यतावच्छेदक--व्यापकीभूत-स्व-समानाधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताकत्वोभय-सत्त्वादोक्तं प्रतियोगि-वैयधिकरण्यं, तथाच साधन समानाधिकरणस्तादृश-प्रतियोगि-व्यधिकरणो व्यधिकरण-धर्म्मावच्छिन्नाभाव एव, तद्वृत्तित्वाभावस्य व्यधिकरण-धर्म्माव-च्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वादतिव्याप्तिरतः साध्यतावच्छेदक-विशिष्टेति। सत्येतौ साधन-समानाधिकरणाभाव-मात्रस्यैव साध्यवद्वृत्तित्वात्तादृशाभावाप्रसिद्धिरतः प्रतियोगिताकत्वान्तम्। प्रमेय-साध्यके साध्यतावच्छेदक-विशिष्ट-साध्यवद्वृत्तेर्व्यधिकरण-धर्म्मावच्छिन्नाभावस्याकाशात्मक-साध्य-वृत्त्याकाशत्वावच्छिन्न-प्रतियोगिताकत्वात्तादृशाभावाप्रसिद्धिरतो व्यापकीभूतेति। प्रमेयत्व-व्यापकीभूत-धर्म्मावच्छिन्न-प्रतियोगिताकत्वन्तु समवाय-सम्बन्धेन

प्रमेय-सामान्याभावे प्रसिद्धम्। वह्निमान् धूमादित्यादौ घटत्वेन वह्न्यभावस्यापि वह्नित्वेन घटाभावाभिन्नतया तादृशाभावा प्रसिद्धिरतः स्व-समानाधिकरणेति। न चैवमपि वृत्तित्वाभाव-स्याव्याप्यवृत्तित्वानङ्गीकारे संयोगी सत्त्वादित्यत्रातिव्याप्तिः, तत्र संयोग सामान्याभावे संयोगवद्वृत्तित्व-संयोगत्व-व्यापक-स्व-समाना-धिकरण-धर्म्मावच्छिन्न-प्रतियोगिताकत्वोभय-सत्त्वेन निरुक्त-प्रति-योगि-व्यधिकरणत्वस्य व्यधिकरण-धर्म्मावच्छिन्नाभाव एव सम्भवा-दिति वाच्यं तादृश-साध्यवद्वृत्तित्वस्य किञ्चिदनवच्छिन्नस्य विव-क्षितत्वात्तस्य च संयोगाभावेऽसत्त्वात् (१)। संयोगाभावस्य द्रव्य-वृत्तितायामुत्पत्तिकालादेरवच्छेदकत्वात्। न चैवमपि संयोगा-भाववान् मेयत्वादित्यादौ संयोगस्यापि निरुक्त-प्रतियोगि-व्यधि-करणत्वादव्याप्तिरिति वाच्यं तादृश-प्रतियोगि-वैयधिकरण्य विशिष्टः सन् यो हेत्वधिकरणेऽनवच्छिन्नवृत्तिस्तादृशाभावस्य साधन-समा-नाधिकरणाभावान्तेन विवक्षितत्वात्, संयोग रूपाभावस्य हेत्वधि-करणे किञ्चिदनवच्छिन्न-वृत्तिकत्वाभावादेव नाव्याप्तिः। संयो-गाभावस्य गुणादौ अनवच्छिन्न-वृत्तिकत्वात् द्रव्येऽवच्छिन्नवृत्ति-कत्वाच्च संयोगी सत्त्वात् द्रव्यत्वादित्यादौ नातिव्याप्तिरव्याप्तिर्व्वा। इत्यञ्च साध्याभावस्याधिकरणता साध्यवत्ता-ग्रह-विरोधि-सम्बन्धे-नापि न विवक्षणीया। कालिकसम्बन्धावच्छिन्न प्रतियोगिताके आकाशाभावस्याभावे साध्ये तदभावस्याकाशाभाव-रूपस्या-

---

(१) अभावादिति ख पुस्तके।

त्मनि निरुक्त-प्रतियोगि-व्यधिकरणत्व-विशिष्टत्वाभावादेवाव्याप्तेर-भावात्।

तदयं निर्गलितार्थः; निरुक्त प्रतियोगि-वैयधिकरण्य-विशिष्टानवच्छिन्न-वृत्तिक-हेत्वधिकरण-वृत्त्यभाव-निरूपिता यावती साध्यतावच्छेदक-समनियत-प्रतियोगिता प्रत्येकं तत्तन्निरूपका-भावस्यानवच्छिन्नवृत्त्यधिकरणं यत्तद्वृत्तित्वाभावा यावन्तो वृत्ति-मद्वृत्तयस्तद्वत्त्वम्। पृथिव्यन्यत्व-विशिष्ट द्रव्यत्ववत् द्रव्यत्वादित्यादौ जलाद्यन्यत्वविशिष्ट-द्रव्यत्वाभावमादायातिव्याप्तिः, संयोगाभाववान् मेयत्वादित्यादौ संयोगरूपाभावं, सत्तावान् जातेरित्यादौ सत्तात्वा-वच्छिन्नाभावञ्चादायाव्याप्तेश्च वारणाय विशिष्टान्तं वृत्तिकान्तं वृत्त्यन्तञ्चाभाव-विशेषणम्। संयोगी सत्त्वादित्यादौ तादृश(१) निरुक्त-प्रतियोगि-व्यधिकरणो हेत्वधिकरणेऽनवच्छिन्न-वृत्तिर्यः संयोगाभावस्तन्निरूपिता यावती साध्यतावच्छेदक-समनियत-प्रति-योगिता तन्निरूपकाभावस्याधिकरणं जगदेव, तद्वृत्तित्वत्व-सम-नियत-प्रतियोगिताकाभावो व्यधिकरण-धर्म्मावच्छिन्नाभाव एव वृत्तिमद्वृत्तिरित्यतिव्याप्तिरित्यतोऽनवच्छिन्न-वृत्तिकेति। तादृश-वृत्तित्वाभावश्च तादृश वृत्तित्वत्व-व्यापक व्यासज्यवृत्ति धर्म्मानव-च्छिन्न-प्रतियोगिताको ग्राह्यः। तेन प्रमेयं (२) सत्त्वादित्यत्र घट-समवेतत्व-घटान्य-समवेतत्वोभयाभावस्य तादृश-वृत्तित्वत्व-व्यापक प्रतियोगिताकस्य घटत्वादिवृत्तेः सत्तादावभावात् पूर्व्वोक्त-

---

(१) तादृश इति नास्ति घ पुस्तके।

(२) जातिमान् इति घ पुस्तके।

रीत्या असम्भव-वारणायानवच्छिन्नान्तम्। साधन-समानाधिकरण-तादृशाभाव कूटवद्वृत्तित्वस्यालोकावृत्तित्वाभावात्तादृश वृत्तित्वत्व-व्यापकत्वस्यालोकावृत्त्यभाव प्रतियोगितायामसम्भवात्तादृश-वृत्तित्वत्व-व्याप्यत्वं प्रतियोगितायां न देयमेवेति। शेषं दर्शित-दिशावसेयमत आह "किञ्चे"ति।

केचित्तु स्व-निष्ठ साधन समानाधिकरण तादृश साध्याभाव कूटाधिकरण-साधनाधिकरण-वृत्ति तादृश यावदभाववत्त्वं निरुक्त-समुदायाधिकरणत्वं, भूतत्व-मूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ च तादृशं स्वं मनोऽपीति, तद्वृत्तौ स्पर्शवदन्यत्वे नातिप्रसङ्गः। अत्र च साधन-समानाधिकरण-पदादाने निर्व्वह्नि निष्ठ साध्याभाव कूटस्य वह्नित्वावच्छिन्न वह्न्यभाव घटितस्याधिकरणे साधनाधिकरणत्वाभावात् स्व-निष्ठ साध्याभाव कूटाधिकरण-साधनाधिकरण-वृत्ति-यावत्साध्याभाववद्वह्निमदेव, तद्वृत्तित्वाभावस्य धूमादावभावादव्याप्तिः स्यादतः साधन समानाधिकरणेति (१)। साधनाधिकरण-पदादाने रूपाभाववान् वायुत्वादित्यादौ सत्तावान् जातेरित्यादौ च स्व-निष्ठ-साधन-समानाधिकरण साध्याभाव कूटाधिकरण स्पर्शवद्रूपघटितस्य सत्तात्वावच्छिन्नाभाव घटितस्य च यावत् साध्याभावस्य यदधिकरणं तस्य, हेतुतावच्छेदक-सम्बन्धेन तद्वृत्तित्वस्य चाप्रसिद्धिः। सद्धेतौ तादृशं स्वं जगदेव, व्यभिचारिणि विपक्ष एव। मूर्त्तं वेगादित्यादौ अमूर्त्त निष्ठं यन्मूर्त्तत्व गन्धवत्त्वोभया-

(१) अतः साधनसमानाधिकरणेति इति नास्ति ध पुस्तके।

भाव-मूर्त्तत्व-पृथिव्यन्यत्वोभयाभावादि-घटित-तादृश-साध्याभाव-कूटवत्त्वं तस्य हेत्वधिकरणेऽसत्त्वात्, स्व-निष्ठ-साधन-समानाधिकरण-साध्यतावच्छेदक-व्यापक-प्रतियोगिताकाभाव-कूटाधिकरण-साधनाधिकरण-वृत्ति-साध्याभाव-कूटाधिकरणं मूर्त्तमेव तद्वृत्तित्वाभावस्य हेतावभावादव्याप्तेः, भूतत्वाभाव-मूर्त्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादौ पृथिव्यादि निष्ठ-भूतत्व-मूर्त्तत्व-घटित-साध्यतावच्छेदक-व्याप्य-प्रतियोगिताकाभाव-कूटवत्त्वस्य साधनाधिकरणेऽभावात् तादृशं स्वं पृथिव्यादि-भिन्नमेव, तद्वृत्तित्वाभावस्य च हेतावसत्त्वादव्याप्तेश्च वारणाय साध्यतावच्छेदक-व्याप्यत्व-व्यापकत्वे प्रतियोगिता-विशेषणे। मूर्त्तं मनस्त्वादित्यादौ पृथिव्यादेः स्व-निष्ठ-साधन-समानाधिकरण-साध्यतावच्छेदक-समनियत-प्रतियोगिताकाभाव-कूटाधिकरण-साधनाधिकरण-वृत्ति-मूर्त्तत्व-मनोन्यत्वोभयाभावादि-घटित-साध्यतावच्छेदक-व्यापक-प्रतियोगिताकाभाव-कूटानधिकरणत्वेन तादृशं स्वं पृथिव्यादि भिन्नमेव तद्वृत्तित्वाभावस्य हेतावसत्त्वादव्याप्तेः, भूतत्वाभाव-मूर्त्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादावाकाशादेर्न स्व-निष्ठ-साधन-समानाधिकरण-तादृशसाध्याभाव-कूटाधिकरण-साधनाधिकरण-वृत्ति-मूर्त्तत्वादि-घटित-साध्यतावच्छेदक-व्याप्य-प्रतियोगिताकाभाव-कूटवत्त्वं तादृशञ्च स्वं मूर्त्तादिकमेव तद्वृत्तित्वाभावस्य हेताव सत्त्वादव्याप्तेर्वारणाय द्वितीयदले प्रतियोगितायां साध्यतावच्छेदक-व्याप्यत्व-व्यापकत्वे विशेषणे। एवञ्च तादृशं यद्यत् स्वं तावद्विशेष्यक-धी-विशेष्य-वृत्तित्वत्व-समनियत-प्रतियोगिताकत्वं

वाच्यं, तेन वह्निमान् धूमादित्यादौ पर्व्वतादि-रूपं यत्तादृशं स्वं तद्वृत्तित्वत्व(१)समनियत-प्रतियोगिताकाभावासत्त्वेऽपि न क्षतिः । न च संयोगी सत्त्वादित्यादावतिव्याप्तिरिति वाच्यं (२) साध्याभाव-कूटाधिकरणतायाः किञ्चिदनवच्छिन्न-वृत्ति-निरूपितताया विवक्षितत्वात्, एतादृशी चाधिकरणता न द्रव्ये । न चैवं संयोगाभाववान् मेयत्वादित्यादौ संयोग-घटितस्यानवच्छिन्नाधिकरणताया अप्रसिद्धेरव्याप्तिरिति वाच्यं साधन-समानाधिकरण-साध्याभावस्य प्रतियोगि-व्यधिकरणत्वेन विशेषितत्वात् । साध्यतावच्छेदकसम्बन्धेन यदभाव-प्रतियोग्याधेयतायां हेत्वधिकरणीभूत-यत्किञ्चिद्व्यक्ति-निरूपितत्व-यदभाव-प्रतियोगितावच्छेदकावच्छिन्नत्वोभयाभाव-स्तादृशाभाव एवाभावान्तार्थः । प्रमेयं घटादित्वादौ समवायित्व-साधन-समानाधिकरण-साध्याभाव-कूटाधिकरण-समवेतत्वोभयाभावस्य घटत्वादिवृत्ति घटेऽभावात् वृत्तित्वत्व-व्याप्यत्वं प्रतियोगितायां विशेषणं इत्यस्वरसादाह "किञ्च"ती-त्याहुः ।

तच्च समवेतवान् द्रव्यत्व-प्रकारक-प्रमा-विशेष्यत्वादि-त्यादाव-व्याप्तेः असमवायि-जात्यादि-निष्ठ घटमात्रसमवेत-घटत्ववह्निक-समवेतोभयाभाव-घटान्यमात्र- समवेत घट-समवेतोभयाभावादि-घटित-साध्यतावच्छेदक समनियत प्रतियोगिताकाभाव-कूटवत्त्वस्य

---

(१) पर्व्वतादिरूपतादृशस्ववृत्तित्वत्व इति क च पुस्तकयोः ।

(२) वाच्यमिति नास्ति च पुस्तके ।

हेत्वधिकरणेऽसत्त्वात्तादृशं स्वं साध्यवदेव तद्वृत्तित्वा-भावस्य जातित्व-प्रकारक-प्रमा-विशेष्यत्व-वृत्तेर्हेतावभावात्, एवं वह्निमान् धूमादित्यत्राव्याप्तिः निर्व्वह्नि-निष्ठ-तद्वह्नि तद्भिन्नवह्न्युभयाभाव-एतद्वह्नि–एतद्वह्निभिन्नवह्न्युभयाभाव–घटित- कूटवत्त्वस्य हेत्वधि-करणेऽवृत्तेस्तादृश-धूम-जनक-वह्निमतां पर्व्वत-महानसादीनां वह्न्य-वयवमादायापि वह्नि-द्वयवत्त्वादेकमात्र-वह्निमतो धूमाधिकरण-स्याप्रसिद्धेस्तादृशं स्वं वह्निमदेव तद्वृत्तित्वाभावस्य धूमेऽसत्त्वात्। किञ्च तावद्विशेष्यकधी-विशेष्य-वृत्तित्वत्व-समनियतत्यत्र-तावन्मात्र-विशेष्यकधी-विशेष्यत्वं, तावद्विशेष्यकधी-विशेष्यत्वं वा वाच्यम्? आद्ये असम्भवः सद्धेतौ जगत एव तादृश-स्वत्वेन मात्र-पद-व्यावृत्त्य-प्रसिद्धेः, अन्त्ये व्यभिचारिण्यतिव्याप्तिः तादृश-विपक्षात्मक-स्वविशेष्यकं सर्व्वमितिधी-विशेष्यत्वस्य केवलान्वयित्वात्, तद्वृत्ति-त्वत्व-व्यापक-प्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव वृत्तिमति सम्भवात् इति। प्रमेयं सत्त्वादित्यत्राव्याप्तिः घट-समवेतत्व घटान्यसमवेतत्वोभयत्वावच्छिन्नाभावस्य तादृश-वृत्ति-त्वत्व-समनियत प्रतियोगिताकस्य घटत्वादिवृत्तेः सत्तादावभावा-दित्यलमसद्ग्रहेण।

यत्तु स्व-निष्ठ-साध्यभाव-कूटाधिकरण-साधनाधिकरण-वृत्ति-साध्याभाव-कूटाधिकरण-वृत्तित्वाभावाः साधन-समानाधिकरण-वृत्तिमद्वृत्तयो (१) यावन्तस्तद्वत्त्वं वक्तव्यं (२) ( वह्निमान् धूमादि-

(१) साधनाधिकरण-वृत्तिमद्वृत्तयः इति ख ग पुस्तकयोः।

(२) वाच्यमिति घ पुस्तके।

त्वादौ च तादृशं स्वं वह्निमदेव न तु निर्व्वह्निः, निर्व्वह्नि-निष्ठ-वह्नित्वावच्छिन्नाभाव-घटित-कूटस्य हेत्वधिकरणेऽवृत्तेर्व्वह्निमद्वृत्ति-त्वाभावस्य च व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव साधन-समानाधि-करण-वृत्तिमद्वृत्तेरतस्तमादाय लक्षण-समन्वयः । धूमवान् वह्ने-रित्यादौ च तादृशं स्वं निर्द्धूम एव न तु धूमवान्, तस्य स्व-निष्ठ-साध्याभाव-कूटाधिकरण-साधनाधिकरणायोगोलक-निष्ठ धूमत्वाव-च्छिन्नाभाववत्त्वाभावात् । निर्द्धूम-वृत्तित्वत्वावच्छिन्नाभावस्य च साधन-समानाधिकरण-वृत्तिमद्वृत्तित्वात् तस्य च हेतावभावान्नाति-व्याप्तिः ) । (१)

द्रव्यत्व-प्रकारक-प्रमा-विषयः सत्त्वादित्यत्र स्व-निष्ठ-साध्य-तावच्छेदक—व्यापक-प्रतियोगिताक-गुणावृत्ति द्रव्यत्वाभावोभया-भाव कर्म्मावृत्ति-द्रव्यत्वाभावोभयाभाव-घटित-कूटाधिकरणं यत्साध-नाधिकरणं तद्वृत्तेरभाव-कूटस्याधिकरणं स्वं द्रव्यमेव, एवं स्व-निष्ठ-गुणावृत्त्यभाव-घटितस्य साध्याभाव-कूटस्याधिकरणं यत्साध-नाधिकरणं तद्वृत्तेरभाव-कूटस्याधिकरणं स्वं गुण एव, एवं स्व-निष्ठ-कर्म्मावृत्त्यभावघटित-साध्यभाव-कूटस्याधिकरणं यत्साधनाधि-करणं तद्वृत्तेरभाव-कूटस्याधिकरणं स्वं कर्म्मैव, तथाच तादृशं स्वं सत्तावन्मात्रमेव, तद्वृत्तित्वत्व-समनियत-प्रतियोगिताकस्य साधनाधिकरण(२)वृत्तिमद्वृत्तेर्व्यधिकरण-धर्म्मावच्छिन्नाभाववस्यैव सम्भवादतिव्याप्तिः, भूतत्व-मूर्त्तत्वोभयवान् भूत-मूर्त्तान्यतरत्वादि-

(१) ( ) एतच्चिह्नमध्यस्थितपाठो नास्ति क, ख, ग पुस्तकेषु ।

(२) साधनाधिकरण इति नास्ति घ पुस्तके ।

त्यत्र स्व-निष्ठ-साध्यतावच्छेदक-व्याप्य-प्रतियोगिताक-घटान्यत्व-विशिष्ट-मूर्त्तत्वाभाव-घटित-कूटाधिकरणं यत्साधनाधिकरणं तद्वृत्तेरभाव-कूटस्याधिकरणं स्वं घट एव, एवं स्व-निष्ठ-पटान्यत्व-विशिष्ट-मूर्त्तत्वाभाव-घटित-कूटाधिकरणं यत्साधनाधिकरणं तद्वृत्तेरभाव-कूटस्याधिकरणं स्वं पटाद्येव, तथाच तादृशं स्वं भूतमात्रं मूर्त्तमात्रं च, हेत्वधिकरण-वृत्ति-वृत्तिमद्वृत्तेस्तादृशस्य वृत्तित्वाभावस्य व्यधिकरण-धर्म्मावच्छिन्नाभावस्येव सम्भवादतिव्याप्तेश्च वारणाय साध्यतावच्छेदक-व्याप्यत्व व्यापकत्वे प्रतियोगिताविशेषणे।

पृथिवी द्रव्यत्व-प्रकारक-प्रमा-विषयत्वादित्यत्र स्व-निष्ठ-तादृशाभावाधिकरण-साधनाधिकरण--वृत्ति--साध्यतावच्छेदक-व्यापक-प्रतियोगिताक-जलावृत्त्यभाव--तेजोऽवृत्त्यभाव--घटित -कूटवत्त्वस्य साधनाधिकरणे ऽवृत्तेस्तादृश-कूटाधिकरणं स्वं सामान्याद्येव तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तेर्वारणाय चरम-दले साध्यतावच्छेदक-व्याप्यत्वं प्रतियोगितायां विशेषणम्। अत्र च साध्यतावच्छेदक व्यापकत्वं नोपादेयम्। अभाववान् मेयत्वादित्यादौ घटत्व पटत्वात्मकस्य साध्यतावच्छेदक-व्याप्य-प्रतियोगिताकस्य वक्ष्यमाण-प्रतियोगि-व्यधिकरणत्वाभावादेवाप्रसिद्धि-सम्पादकत्वाभावादिति ध्येयम्। द्रव्यम् गुणादित्यत्र स्व-निष्ठ साध्याभाव कूटाधिकरण-साधनाधिकरण-वृत्ति-साध्याभाव-कूटाधिकरणं स्व द्रव्यमेव गुणादि निष्ठ साध्याभाव-कूटस्य द्रव्यत्वत्वाद्यवच्छिन्नाभाव-घटितस्य साधनाधिकरणे वृत्तेः, द्रव्य वृत्तित्वाभावस्य च

गुणत्वादि वृत्तेर्गुणे (१) ऽसत्त्वादव्याप्तेर्व्वारणाय साधनाधिकरण-वृत्तिमदृत्तय इति। तादृश-वृत्तित्वाभावो व्यधिकरण-धर्म्माव-च्छिन्न-प्रतियोगिताक एव।

पृथिव्यन्य-द्रव्यत्ववत् द्रव्यत्वादित्यत्र स्व-निष्ठ-साध्याभाव-कूटाधिकरण-साधनाधिकरण वृत्ति-साध्याभाव कूटाधिकरणं स्वं सर्व्वमेव द्रव्यं, स्व-निष्ठ-पृथिवीत्व-विशिष्ट द्रव्यत्वाभाव-घटित-कूटाधिकरण--साधनाधिकरण वृत्ति-साध्याभाव कूटाधिकरणं स्वं पृथिव्यन्य द्रव्यमेव, स्व-निष्ठ पृथिव्यन्यत्व विशिष्ट द्रव्यत्वाभाव-घटित साध्याभाव कूटाधिकरण साधनाधिकरण वृत्ति-साध्याभाव-कूटाधिकरणं स्वं पृथिव्यपि, एवञ्च द्रव्यवृत्ति वृत्तिस्तादृश कूटाधि-करणीभूत-द्रव्यवृत्तित्वाभावो व्यधिकरण-धर्म्मावच्छिन्नाभाव एवे-त्यतिव्याप्तिरतः प्रथम-दले प्रतियोगि-व्यधिकरणेति; तदर्थश्च स्व-विशिष्ट-हेत्वधिकरणावच्छेदेन यत्साध्यतावच्छेदक-धर्म्माश्रय-विशिष्ट-वृत्तित्वं यच्च साध्य-वृत्ति-धर्म्मावच्छिन्न प्रतियोगिताकत्वं तदुभयाश्रयान्यत्वम्। एवञ्च पृथिव्यन्य-द्रव्यत्ववत् द्रव्यत्वादित्यादौ व्यधिकरण-धर्म्मावच्छिन्नसंबाभावस्य स्व निष्ठ तादृशाभावत्वात् साधनाधिकरण-नानाविपक्ष-स्थले, स्व निष्ठ तादृश साध्याभाव-कूटाधिकरण-साधनाधिकरण-तत्तद्विपक्षान्य वृत्तित्व-विशिष्ट-द्रव्य-त्वत्वावच्छिन्न-साध्याभाव-कूटाधिकरणं स्वमप्रसिद्धमेव। एतत्-पृथिव्यन्य-द्रव्यत्ववत् द्रव्यत्वादित्यादौ च तादृशं स्वमेतत्पृथिव्येव

(१) चेतार्थिति च पुस्तके।

तद्वृत्तित्वाभावस्य द्रव्यत्वेऽसत्त्वान्नातिव्याप्तिः। साध्यतावच्छेदक-समनियत-प्रतियोगिताकत्व-विशेषण-साफल्याय (१) परमखण्डा-भाव-घटकं हेत्वधिकरणावच्छेदेनेति। तथाच पृथिवीत्व-विशिष्ट-द्रव्यत्वाभावादिरपि न तथा हेत्वधिकरणावच्छेदेन साध्यवद्वृत्तिरतः स्वविशिष्टेति।

द्रव्यं गुणादित्यादौ स्व-निष्ठ तादृश-साध्याभाव कूटाधिकरण-साधनाधिकरण-वृत्ति-साध्याभाव कूटवत्त्वं न कुत्रापि, घट-निष्ठ-तादृश-साध्याभाव-कूटाधिकरण- साधनाधिकरण-पटनिष्ठ--पटान्य-वृत्तित्व विशिष्ट–द्रव्यत्वाभाव-घटित-कूटस्य घटेऽवृत्तेः पटनिष्ठ-तादृश-साध्याभाव-कूटाधिकरण-साधनाधिकरण घट वृत्ति घटान्य-वृत्तित्व विशिष्ट-द्रव्यत्वाभाव-घटित-कूटस्य पटेऽवृत्तेरित्यव्याप्ति-वारणाय चरमदलेऽपि प्रतियोगि-व्यधिकरणत्वमभावे विशेषणम्। तदर्थन्तु साध्यतावच्छेदक–विशिष्ट साध्यवद्वृत्तित्व–साध्य-वृत्ति-धर्म्मावच्छिन्न-प्रतियोगिताकत्वोभयाभाववत्त्वम्। पटान्यत्व-विशिष्ट--द्रव्यत्वाभावस्य गुणादावेतादृश-प्रतियोगि- वैयधिकरण्य-वत्त्वेऽपि तद्विशिष्टस्य तादृश-साधनाधिकरण-वृत्तित्वाभावान्ना-व्याप्तिः। पृथिव्यन्य द्रव्यत्ववत् द्रव्यत्वादित्यत्र पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्वाद्यभावस्य साध्य-द्रव्यत्ववद्वृत्तित्व-द्रव्यत्ववृत्तिधर्म्मावच्छिन्न-प्रतियोगिताकत्वोभयवत्त्वान्नोक्तं प्रतियोगिवैयधिकरण्यं, तथाच स्व-निष्ठ-तादृशसाध्याभाव-कूटाधिकरण साधनाधिकरण-घटादि-

---

(१) साध्यतावच्छेदक-समनियतत्व-विशेषण-साफल्याय इति च पुस्तके।

वृत्तेर्वृत्तप्रतियोगिवेयधिकरण्याश्रयस्य व्यधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताक-यावदभावस्याधिकरणं स्वं द्रव्यमात्रं, तद्वृत्ति वृत्ति-त्वादृश वृत्तित्वाभावो व्यधिकरणधर्म्मावच्छिन्न-प्रतियोगिताक एव तस्य द्रव्यत्वे सत्त्वादतिव्याप्तेर्व्वारणाय साध्यतावच्छेदकविशिष्टेति। तादृश-कूटाधिकरण वृत्तित्वाभावश्च तादृश-कूटाधिकरण वृत्तित्वत्व-व्यापक-व्यासज्यवृत्ति-धर्म्मानवच्छिन्न-प्रतियोगिताको बोध्यः। तेन वाच्यं द्रव्यत्वादित्यादौ तादृश-कूटाधिकरण वृत्तित्वत्व-समनियत-प्रतियोगिताकस्य घट-वृत्तित्व-घटान्यवृत्तित्वोभयाभावस्य साधन-समानाधिकरण-घटत्वादि-वृत्तेर्द्रव्यत्वेऽसत्त्वेऽपि नाव्याप्तिरिति।

तदपि न साधीयः-वृत्तित्वाभावस्याव्याप्यवृत्तित्वानभ्युपगमे संयोगि सत्त्वादित्यत्रातिव्याप्तेः, तत्र संयोगाभावे द्वितीय-दल-निरुक्त-प्रतियोगि-व्यधिकरणत्वाभावेन व्यधिकरण धर्म्मावच्छिन्नाभावस्यैव तादृशत्वेन तत्कूटाधिकरण-वृत्तित्वाभावस्य वृत्तिमद्वृत्ते-र्व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव सम्भवात्। प्रथमत एव वृत्ति-त्वाभावस्याव्याप्यवृत्तित्वाभ्युपगमे च "किञ्चे"त्यादि वक्ष्यमाण-दोषाणामसङ्गतकतापातात् (१)। किञ्च तादृशं यत्नत् स्वं (तावन्मात्रविशेष्यकधी-विशेष्य-वृत्तित्वाभावः), (२) तावद्विशेष्यक-

---

(१) अव्याप्यवृत्तित्वे महाकाशाभावो घटादिस्थल महाकाश-वृत्तित्वाभावोऽपि संयुक्तावावच्छेदेन घटादावेव प्रसिद्धस्तथा च तादृशाभावाप्रसिद्धिप्रयुक्तदोषदानम-सङ्गतमिति भावः।

(२) ( ) चिह्नमध्यस्थपाठो नास्ति ख पुस्तके।

धी-विशेष्य-वृत्तित्वाभावो वा (१) वक्तव्यः, तथाच तावन्मात्र-विशेष्यकत्वोक्तौ प्रमेयं वाच्यत्वादित्यत्राप्रसिद्धिः, जगत एव तादृश-स्वत्वेन (२) मात्रपद-व्यवच्छेद्याप्रसिद्धेः। मात्रपदानन्तर्भावे व्यभिचारिण्यतिव्याप्तिः, तत्र जगत एव विपक्षात्मक-तादृश स्व विशेष्यक-सर्व्वमिति धी-विशेष्यत्वात् जगद्वृत्तित्वत्व-व्यापक प्रतियोगिताका भावस्य व्यधिकरण-धर्म्मावच्छिन्नस्यैव वृत्तिमद्वृत्तित्वादिति दिक्।

कालान्यत्वे साध्ये कालिकसम्बन्धेन हेतुर्विरुद्ध एव, तद्वारणाय साध्य-समानाधिकरणत्वेनैव सम्भवतीत्यत आह "सद्धे"ति। "तेन सम्बन्धेन" कालिकविशेषणता-विशेषेण। एवं (३) इदमेतद्रूपाभिन्नं गुणत्वात् ज्ञानादेत्यादौ समवायेन विषयितया च हेतावतिव्याप्तिस्तादृश कूटाधिकरणैतद्रूपभिन्न-समवेतत्वत्व--समनियत-प्रतियोगिताकस्य एतद्रूपभिन्नविषयित्वत्व-समनियत-प्रतियोगिताकस्य वा व्यधिकरण धर्म्मावच्छिन्न प्रतियोगिताकाभावस्यैव वृत्तिमद्वृत्तित्वादिति।

वृत्तित्वाभावस्याव्याप्यवृत्तिता-मते तु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणावच्छेदेन वृत्तिमद्वृत्ति-तादृशवृत्तित्वाभाव-समुदायवत्त्वं वाच्यं, एवञ्च महाकालान्यो घटात् एतद्रूपाभिन्नं गुणत्वादित्यत्र खण्ड-कालावच्छेदेन घटादिवृत्तेस्तादृश-कूटाधिकरण-महाकाल-वृत्तित्वाभावस्य एतद्रूपावच्छेदेन गुणत्वादिवृत्तेस्तादृश-कूटाधि-

(१) वा इति नास्ति घ पुस्तके।

(२) स्वत्वेनेत्यत्र भिन्नत्वेन इति घ पुस्तके।

(३) एवं इति नास्ति ग पुस्तके।

करणेतद्रूपभिन्न-समवेतत्वाभावस्य च हेत्वधिकरण-महाकालानव-च्छेद्यत्वात् हेत्वधिकरणेतद्रूप-भिन्नानवच्छेद्यत्वाच्च नातिव्याप्तिः। वृत्तिमद्वृत्तित्वञ्च हेतुतावच्छेदकसम्बन्धेन यद्व्यक्तेर्यदधिकरणं तदवच्छेदेन तद्व्यक्ति-वृत्तित्वं, तेन वह्निमान् धूमादित्यादौ द्रव्यं गुणादित्यादौ च महाकालाद्यवच्छेदेन घटादि-निष्ठस्य साध्या-भाव-कूटाधिकरण-संयुक्तत्वत्व-समवेतत्वत्व व्यापक व्याप्तस्य वृत्ति-धर्म्मानवच्छिन्न-प्रतियोगिताकस्य तादृश-संयुक्तत्वत्वावच्छिन्न प्रति-योगिताकस्य समवेतत्वत्वावच्छिन्न प्रतियोगिताकस्य वाऽभावस्य हेत्वधिकरणावच्छेदेनासत्त्वेऽपि न क्षतिः ।

वृत्तित्वाभावस्य व्याप्यवृत्तित्व-नयेपि तादृश-साध्याभाव-कूटा-धिकरण-वृत्तित्वस्यावच्छेदकता-सम्बन्धेन योऽभावो हेतुताव-च्छेदक-सम्बन्धेन यत्किञ्चित्पदार्थाधिकरण-वृत्तिस्तादृश यावद-भाववत्त्वं यद्धेत्वधिकरणावच्छेदेन तत्त्वं व्याप्तिरिति। महा-कालान्यो घटादित्यत्र तादृश--साध्याभाव- कूटाधिकरणीभूत-महाकाल--वृत्तित्वस्यावच्छेदकता--सम्बन्धेनाभावः खण्डकाले वर्त्तते, न तु महाकाले इति हेत्वधिकरणावच्छेदेनासत्त्वान्नाति-व्याप्तिः। इत्थञ्च प्रमेयं घटत्वादित्यत्र साध्याभाव-कूटाधिकरणी-भूत-जगत्समवेतत्वस्यावच्छेदकता सम्बन्धेनाभावो जात्यादौ तस्य च घटरूपहेत्वधिकरणावच्छेदेनासत्त्वादव्याप्तिरतो हेतुताव-च्छेदक-सम्बन्धेन यत्किञ्चित्पदार्थाधिकरण वृत्तीति। लक्षणस्य-वृत्तिमद्वृत्तिपदस्यापि स एवार्थः। शेषं पूर्व्वोक्त-दिशावसेयम् ।

( केचित्तु हेतुतावच्छेदक-सम्बन्धावच्छिन्न यावदाधेयता-

वृत्तिधर्म्मावच्छिन्न-प्रतियोगिताकाभावभिन्नत्वं वृत्तिमद्वृत्ति-पद-स्यार्थः। तथाच महाकालवृत्तित्वाभावोऽपि निरुक्त-वृत्तिमद्वृत्तिरेव। कालिक-सम्बन्धावच्छिन्नाधेयता महाकालावच्छिन्ना खण्डकालावच्छिन्नाऽपि, महाकालवृत्तित्वं न यावदाधेयतावृत्ति, तावदाधेयतावृत्ति-धर्म्मावच्छिन्न-प्रतियोगिताकाभाव आकाशादौ प्रसिद्धः। आकाशादेः स्वरूपसम्बन्धेन-वृत्तिमत्त्वे तु तादृशाधेयता-त्वावच्छिन्न-घट-निष्ठ-प्रतियोगिताकाभाव-रूप-अधिकरणधर्म्माव-च्छिन्नाभाव एव प्रसिद्धः, एवं तादृशाधेयतात्वावच्छिन्न-प्रति-योगिताक-भेदो-घट एव प्रसिद्धस्तादृशाभाव-भिन्न एव महाकाल-वृत्तित्वाभाव इति नातिव्याप्तिरिति तन्न महाकाल-वृत्तित्वाभावस्य वृत्तित्वाभाव-समनियततया लाघवात् वृत्तित्वत्वमेव प्रतियोगि-तावच्छेदकमिति वृत्तित्वत्वस्य तादृश-यावदाधेयता-वृत्तित्वात् तदवच्छिन्न-वृत्तित्वाभावस्य लक्षणाघटकत्वादित्यतिव्याप्तिर्व्वज्र-लेपायितैव।

परे तु विशेषणताविशेषसम्बन्धेन तादृश-वृत्तित्वाभावो विशे-षणता--विशेषावच्छिन्न--वृत्तिमद्वृत्तिर्यद्धेतु-प्रकारक-प्रमाविशेष्यत्वे वर्त्तते तत्त्वं व्याप्तिरिति, तादृश सम्बन्धावच्छिन्न-महाकाल-वृत्ति-त्वाभावस्तु महाकाल-भेद एव प्रसिद्ध इति। ) (१)

"एतेने"त्यादि। "एतेन" महाकालान्यत्वादि-साध्यके कालिकविशेषणताविशेषेण हेतावतिव्यापकत्वेन। एवमीश्वर-

(१) ( ) चिह्नमध्यस्थितपाठो नास्ति क ख ग पुस्तकेषु।

ज्ञान-भिन्नं घटादित्यत्र विषयितया हेतावतिव्याप्तिर्बोध्या। एत-द्रूपाभिन्नं गुणत्वात् ज्ञानादेरित्यादौ तु साध्य-व्यापकतावच्छेदक-तत्तद्रूपवत्त्वावच्छिन्न-प्रतियोगिताकाभाव-कूटाधिकरणस्या-प्रसिद्धेर्यादृश-साध्याभाव-स्तोमाधिकरणं साधनाधिकरणं तादृश-स्तोमवद्वृत्तित्वाभावस्योक्तौ च तादृशस्तोमवद्वृत्तित्वस्य गुणत्वे सत्त्वान्नातिव्याप्तिः। अतएव पृथिव्यन्य-द्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यत्व-विशिष्टद्रव्यत्वाभाव-पटान्यत्व-विशिष्टद्रव्यत्वाभावानामपि साधन-समानाधिकरण-तादृश-साध्याभावतया तत्कूटाधिकरण-गुणादि-वृत्तित्वाभावस्य द्रव्यत्वे सत्त्वेपि नातिव्याप्तिः, तत्र घटान्यत्व-विशिष्टद्रव्यत्वाभाव-घटितस्तोमाधिकरण-साधनाधिकरणं पट एव, तद्वृत्तित्वाभावस्य द्रव्यत्वेऽसत्त्वात्। सत्तावान् जातेरि-त्यादौ विशिष्ट-सत्ताभावादीनां हेतु-समानाधिकरणानां साध्य-व्यापकतावच्छेदक-रूपावच्छिन्नत्वाभावादेव नाव्याप्तिः। (सत्ता-वान् जातेरित्यत्र द्रव्यान्यत्वविशिष्टसत्ताभाव-घटित-कूटाधिकरणं हेत्वधिकरण-द्रव्यं तादृशाभाव-कूटवद्द्रव्य-वृत्तित्वाभावमादाय, वह्निमान् धूमादित्यत्र च पर्व्वतीय-वह्न्यभावं परित्यज्य तादृश-महानसीयवह्न्यभावादि-घटित-कूटाधिकरणं हेत्वधिकरण-पर्व्वत-स्तादृशाभाव-कूटवत्पर्व्वतादि-वृत्तित्वाभावमादाय वाव्याप्ति-वार-णाय साध्य-व्यापकतावच्छेदकेत्यादि।) (१) अभावश्च साध्य-तावच्छेदक-सम्बन्धेन बोध्यः, तेन समवायेन वह्न्यभाववति

(१) ( ) चिह्नितपाठो नास्ति क ख ग पुस्तकेषु।

धूमस्य वृत्तावपि न दोषः। इत्थञ्च साध्य-व्यापकतापि तेनैव सम्बन्धेन बोध्या, तेन कालिकसम्बन्धेन वह्निव्यापकस्य घटादेः संयोगेनाभाववति धूमस्य वृत्तावपि न क्षतिः। इत्थञ्च व्याप्य-वृत्तित्वं किञ्चिदनवच्छिन्ना या वृत्तिस्तद्वत्त्वं, तेन धूमवान् वह्ने-रित्यादौ धूमाभावस्याप्ययोगोलकेऽनवच्छिन्न वृत्तिकत्वाद्व्याप्य-वृत्तित्वम्। तद्विशिष्टस्य साधन-समानाधिकरणत्वं तद्विशिष्ट-तादृश-साध्याभाववद्वृत्तित्वाभावश्च बोध्यः, तेन संयोगी घटादित्यत्र साधन-समानाधिकरण-संयोगाभाव-घटित-कूटस्य व्याप्यवृत्तित्व-विशिष्टस्याधिकरणं गुण एव, तत्र हेतुतावच्छेदकीभूत-सम्बन्धेन वृत्तेरप्रसिद्धा नाव्याप्तिः। न वा संयोगेन धूमाभावस्य केवलान्वयि-तया तद्वद्वृत्तित्वत्व-व्यापक-प्रतियोगिताकस्य व्यधिकरण-धर्माव च्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् धूमवान् वह्नेरित्यादावति व्याप्तिः। पृथिवी-द्रव्यत्वप्रकारक-प्रमा-विषयत्वादित्यादौ जला वृत्त्यभाव-तेजोऽवृत्त्यभाव घटितस्य साध्य-व्यापकतावच्छेदक-रूपाव-च्छिन्न-प्रतियोगिताकस्य साधन-समानाधिकरणस्य साध्यताव-च्छेदक समवाय-सम्बन्धावच्छिन्न-प्रतियोगिताकाभाव- कूटस्याधि-करणे जात्यादौ हेतोरवृत्त्या अतिव्याप्तिरतः कूटतापन्नस्य साधन-समानाधिकरत्वं वाच्यम्। तदर्थश्च यादृश-साध्याभावस्तोमस्या-धिकरणं साधनाधिकरणं तादृश-स्तोमवद्वृत्तित्वाभावः। इत्थञ्च जलावृत्त्यभाव-घटित-स्तोमाधिकरण--साधनाधिकरणं जलमेव, तद्वृत्तित्वाभावस्य द्रव्यत्व-प्रकारक-प्रमाविषयत्वेऽसत्त्वादेव नाति व्याप्तिः। वह्निमान् धूमादित्यादौ तत्तत्संयोगात्मकाभावस्य

साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वाभावादव्याप्तिर्घटत इति तदु-
पेक्ष्य संयोगाभाववान् मेयत्वादित्यत्राव्याप्ति वारणाय व्याप्यवृत्तिपद-
मिति दर्शयति "केवलान्वयिन" इति । व्याप्यवृत्तित्व-विशिष्ट-
तादृशाभाववद्वृत्तित्व-विवक्षायाः फलं दर्शयितुं यत्किञ्चिदधिकरणे
व्याप्यवृत्तिसाध्याभावमादायाव्याप्तिं प्रसज्य निषेधति "एवं
साध्यस्ये"ति, गुणसामान्याभावस्य गुणादौ व्याप्यवृत्तित्वेपि तद्वि-
शिष्टस्य द्रव्यत्वाधिकरणेऽवृत्तेर्गुणवद्द्रव्यत्वादित्यादौ नाव्याप्ति-
रित्यर्थः ।

केचित्तु व्याप्यवृत्तित्वं किञ्चिदवच्छिन्न वृत्तिक-भिन्नत्वम् ।
दैशिक-कालिकाव्याप्यवृत्तिभेदेनोदाहरणद्वयं संयोगाभाववान् मेय-
त्वात् गुणवद्द्रव्यत्वादिति । अभावः साध्यतावच्छेदक सम्बन्धेन
बोध्यः, तेन कालत्वप्रकारक-प्रमाविषयः कालत्वादित्यादौ साध्यस्य
कालिकसम्बन्धेन व्यापकं भावत्वाभावत्व सत्त्व कर्म्मत्व गुणत्वादि,
तेषाञ्च दैशिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावानां साधन समा-
नाधिकरणानां कूटाधिकरणस्याप्रसिद्धावपि नाव्याप्तिः । इत्यञ्च
धूमवान् वह्नेः पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ नाना-
विपक्षके व्यभिचारिणि विशेषणताविशेषेण तत्तद्विपक्षावृत्तित्वा-
त्मक-साध्यव्यापकतावच्छेदक -रूपावच्छिन्न प्रतियोगिताकाभाव-
कूटस्य साधन-समानाधिकरणस्याधिकरणस्याप्रसिद्ध्या नातिव्याप्ति-
रित्याहुः । न च विवक्षाद्वये कालिकसम्बन्धावच्छिन्न प्रति-
योगिताके कालत्वाभावे साध्ये कालत्वादिहेतावव्याप्तिः, तत्रात्मत्व-
घटित-तादृशाभाव कूटवदात्मवृत्तित्वाभावस्यात्मत्वेऽभावादिति वाच्यं

साध्याभावतावच्छेदकसम्बन्धेन साधनाधिकरणवृत्तित्वस्याभावे विवक्षणात्। आत्मत्वाभावस्याभावत्वावच्छेदकसात्मत्वे कालिक-सम्बन्धस्तस्यात्मन्यभावादेकव्याप्त्यनवकाशात्।

"अप्रसिद्धे"ति, रूपाभाववान् वायुत्वादित्यादौ कूटाधि-करणाप्रसिद्धेः, सत्तावान् जातेरित्यादौ सत्तात्वावच्छिन्नाभावस्या-धिकरणे जात्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः। आदिना सत्तान्यपृथिवीसमवेतशून्यं रूपवदन्यत्वा(१)दित्यादौ पृथिवीमात्रसमवेतं तादृशाभावमादाय पृथिव्या एव कूटाधिकरण-त्वेन तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरित्यस्य परिग्रहः। तादृशकूटाधिकरणवृत्तित्वाभावेऽत्यत्र (२) तादृश-कूटाधिकरण-वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेन विवक्षण (३) एव वृत्तिमद्वृत्ति-पदस्य व्यावृत्तिः सङ्गच्छते, अन्यथा तादात्म्यादि साधारण-वृत्तित्वत्व व्यापक प्रतियोगिताकस्य व्यधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताक-स्येवाभावस्यावृत्तिमात्र-वृत्तित्वाभावादव्याप्तेरभावादतस्तदेव प्रथ-मतो दर्शयति "तादृशसमुदायाधिकरण-वृत्तित्वे"ति, तादृशवृत्तित्वा भावश्च तादृशवृत्तित्वत्व-व्यापक-व्यासज्यवृत्तिधर्म्मानवच्छिन्न-प्रति-योगिताको बोध्यः, तेन प्रमेयं द्रव्यत्वादित्यत्र साध्याभाववद्वृत्तित्व-समनियत-प्रतियोगिताकस्य घटवृत्तित्व-घटान्यवृत्तित्वोभयत्वाव च्छिन्न-प्रतियोगिताकस्य, वह्निमान् धूमादित्यत्र पर्व्वतान्य-संयुक्तत्व-

(१) रूपवदन्यत्वादित्यत्र वायुत्वा इति पाठः ख पुस्तके।
(२) तादृशकूटाधिकरणवृत्तित्वाभावेत्यत्र इति नास्ति ख पुस्तके।
(३) सम्बन्धविवक्षण इति ख पुस्तके।

पर्व्वत-संयुक्तत्वोभयत्वावच्छिन्नाभावस्य एतद्रूपवान् एतद्रसादित्यादौ एतत्त्वणावच्छिन्नैतद्रसनिष्ठवृत्तित्वैतदन्यक्षणावच्छिन्नवृत्तित्वोभयाभावस्य च तत्र हेतावसत्त्वेऽपि नासम्भवः। धूमनिष्ठवृत्तित्वत्वेन वृत्तित्वसामान्याभाव स्वीकारे तु स्व-न्यूनवृत्तिधर्म्मानवच्छिन्नत्वमपि प्रतियोगितायां देयम् (१)।

यत्तु । तादृश-कूटाधिकरण-वृत्तित्वातिरिक्त-वृत्तित्व-वृत्ति-धर्म्मानवच्छिन्न-वृत्तित्ववृत्ति-प्रतियोगिताकोऽभावो बोध्यः। वह्निमान् धूमादित्यादौ तादृश-वृत्तित्व वृत्तिधर्म्मणानवच्छिन्न प्रतियोगिताकस्य धूमत्वाद्यभावस्य धूमादावभावाद्वृत्तित्व-वृत्ति-प्रतियोगितेति। तन्न, धूमवान् वह्नेरित्यत्रातिव्याप्तेः। तत्र निर्धूमवृत्तित्वापेक्षया तादृशकूटाधिकरणवृत्तित्वत्वस्य गौरवेणानवच्छेदकत्वात् व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव तादृशत्वेन तस्य च वह्न्यादावपि सत्त्वात्।

अत्र कश्चित् (२) यदि उक्तवृत्तित्वाभावे हेतुतावच्छेदकसम्बन्धेन यत्किञ्चित्पदार्थानधिकरणवृत्तित्व प्रतियोगिकत्वं प्रविश्यते तदा नाऽयं दोषः। महाकाले वृत्तित्वाभावे हेतुतावच्छेदकसम्बन्धेन यत्किञ्चित्पदार्थानधिकरणवृत्तित्व प्रतियोगिकत्वाभावात् * वृत्तिमद्वृत्तीत्यनेन वा वृत्तिमदवृत्तित्व साध्यवद्वृत्तित्वप्रतियोगिकत्वोभयानधिकरणत्वं विवक्षितम्। महाकालवृत्तित्व-

---

* तथा च तादृशवृत्तित्वाभावाप्रसिद्धेरेव तत्र नातिव्याप्तिरिति भावः।

(१) विशेषणं देयमिति च पुस्तके।

(२) अत्र केचिदिति च पुस्तके।

त्वावच्छिन्न-प्रतियोगिताक-महाकालवृत्तित्वाभावस्य साध्यवद्वृत्तित्व-प्रतियोगिताकत्वविरहादुभयानधिकरणत्वं तस्य च हेतावसत्त्वात्, तत्र नातिव्याप्तिरिति तन्न साधीयः, महाकालवृत्तित्वत्वापेक्षया वृत्तित्वत्वस्यैव लघुतया तादृशाभाव-प्रतियोगितावच्छेदकत्वेन साध्यवद्वृत्तित्व-प्रतियोगिकत्वस्य महाकाल-वृत्तित्वाभावे सत्त्वेन व्यधिकरण-धर्म्मावच्छिन्नाभावस्यैव तादृशत्वेन तस्य च हेतौ सत्त्वादिति। तस्मात् पूर्व्वोक्त विवक्षयैवातिव्याप्त्युद्धारः।

केचित्तु साधन-समानाधिकरण-व्याप्य-वृत्ति-साध्याभाव-घटित (१) कूटे साध्य-समानाधिकरणत्वमपि विशेषणम्। व्यभिचारिणि साध्यतावच्छेदकावच्छिन्न-साध्याभाव-घटित-कूटे साध्य-समानाधिकरणत्वाप्रसिद्धेरेव नातिव्याप्तिरिति प्राहुः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे सार्व्वभौमीय-लक्षण-व्याख्या समाप्ता।

---

## अथ व्यधिकरण-धर्म्मावच्छिन्नाभाव-खण्डने

### दीधितिः।

"तद्विशिष्टे"(२)ति*। विशेषणतावच्छेदकविशिष्ट-

---

* मूले "तद्विशिष्टे"ति अभावविषयतानिरूपित-प्रतियोगित्व-निष्ठ-सांसर्गिक-विषयतानिरूपित--घटत्वादि-निष्ठ--विषयतावच्छेदकत्व--सम्बन्धेनाभावलौकिक-प्रत्यक्षं प्रति प्रकारतासम्बन्धेन घटत्वाद्युपस्थितित्वेन हेतुत्वादित्यर्थः। एतादृशकार्य-

(१) घटित इति नास्ति ख पुस्तके।

(२) १२१ पृ ११ पः मूलं द्रष्टव्यम्।

ज्ञानस्य विशिष्ट-वैशिष्ट्य-प्रत्यय-हेतुत्वात्, अभाव-
प्रत्ययो हि घटत्वादि-विशिष्टस्य घटादेः प्रतियोगित्वम-
वगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमव-
गाहते न स्वातन्त्र्येण, घटो नास्तीत्येव प्रतीतेः। तदित्था-
भावप्रत्ययो यदि व्यधिकरणधर्म्मेण विशिष्टं प्रतियोगिनं
नावगाहते नावगाहत एव तदा तस्यापि प्रतियोगिता-
वच्छेदकत्वं, अथावगाहते तर्हि भ्रम एव, नच ततोऽर्थ-
सिद्धिरिति भावः। यदि पुनरानुभविको लोकानां

---

कारणाभावस्यावश्यकः, अन्यथा द्रव्यत्वविशिष्ट-प्रतियोगिताकत्वेन घटाभाव-प्रत्यक्षा-
पत्तेः। इत्यञ्च उक्तसम्बन्धेन पटत्वेन घटाभावप्रत्यक्षं पटत्वे भविष्यति तत्र च घटत्वो-
पस्थित्यभावात्-तादृशाभावप्रत्यक्षमिति भावः। यद्वा स्वीयाभावविषयतानिरूपित-
घटत्वावच्छिन्न-प्रतियोगिता-संसर्गावच्छिन्न--प्रकारता-निरूपित--प्रकारतासम्बन्धेन
अभावत्व-प्रकारक-लौकिकप्रत्यक्षं प्रति घटत्वीयप्रकारतासम्बन्धेन घटत्व-प्रकारको-
पस्थितेर्हेतुत्वं निर्विकल्पकानन्तरं घटो नास्तीति प्रतीतिवारणाय द्रव्यत्वेन घटो
नास्तीति द्रव्यत्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन घटाभावप्रत्यक्षवारणाय च
विषयभेदेनावश्यं स्वीकार्यं, इत्यञ्च घटत्वेन पटो नास्तीति व्यधिकरणधर्म्माव-
च्छिन्नाभावप्रत्यक्षं उक्तसम्बन्धेन पटत्वेऽपि भविष्यति तत्र चोक्तसम्बन्धेन घटत्वोप-
स्थित्यभावात् व्यधिकरणधर्म्मावच्छिन्नाभावनिरासः, अतएव घटत्वेन घटो नास्तीति
स्वातन्त्र्येण घटत्वावगाहिप्रतीतेरपि वारणम्। तथा चायमनुमानाकारः घटत्वं
घटभिन्नप्रतियोगितावच्छेदकत्वाभाववत् घटत्वविशिष्टविषयतानिरूपिताभावविष-
यताशालिप्रत्यक्ष-सामग्र्यात्मक-घटत्वोपस्थित्यभावादिति प्रतियोग्यवृत्तिधर्म्म-पक्ष-
कानुमानम्। एतादृशकार्य्यकारणभावे मानाभावादाह दीधितौ "विशेषणताव-
च्छेदके"ति।

स्वरसवाही घटत्वेन पटो नास्तीत्यादि-प्रत्ययो, न तदा तादृशाभाव-निवारणं गीर्व्वाण-गुरूणामपि शक्यमिति मन्तव्यम् ।

इति दीधितौ व्यधिकरण-धर्म्मावच्छिन्नाभाव-खण्डनं समाप्तम् ।

इति श्रीमद्रघुनाथशिरोमणि-कृतायां दीधितौ अनुमानखण्डे व्यधिकरण-धर्म्मावच्छिन्नाभाव-प्रकरणं समाप्तम् ।

---

अथ व्यधिकरण-धर्म्मावच्छिन्नाभाव-खण्डने

दीधिति-प्रकाशः ।

ननु प्रतियोगितावच्छेदक-विशिष्ट-ज्ञानं नाभावप्रत्यक्षमात्रे(१) हेतुः, इदन्त्वादिना अभाव-प्रत्यक्षे व्यभिचारात् (२) न तावदभाव-प्रत्यक्षविशेषे, मानाभावात् अत आह "विशेषणतावच्छेदकविशिष्टे"ति। विशेष्ये विशेषणमिति न्यायेन च नाभावः प्रत्यक्षः अननुभवात्, विवेचितञ्चेदं शब्दालोकसारमञ्जर्य्यामस्माभिः। ननु भ्रमरूपमेव तज्ज्ञानं नासम्भवि तादृश-भ्रमाभावदशायां तादृशाभावधीरसिद्धैवे-त्यत आह "अभावप्रत्ययो ह्यो"ति। "विशेषणस्यापि" विशेषणत्व-

---

(१) मात्र इति नास्ति ख पुस्तके। तत्र च प्रत्यक्षे इति पाठः।

(२) इदन्त्वादिना प्रत्यक्षे व्यभिचारादित्यत्र इदन्त्वेनाभावप्रत्यक्षयोरदर्शनादिति पाठः ख पुस्तके।

रूपविषयत्वावच्छिन्नस्यापि(१)।"तदवच्छेदकत्वं"प्रतियोगितावच्छेदकत्वं,"न स्वातन्त्र्येणे"ति, प्रतियोगि-विशेषणतानवच्छेदेन इत्यर्थः, तदेव द्रढ़यति "घटो नास्तीत्येवे"ति। दण्डी पुरुष इत्यत्र (२) दण्डत्व-विशिष्ट-वैशिष्ट्य-ज्ञाने पुरुषांशे विशेषणतावच्छेदक-दण्डत्वस्य यादृशी प्रकारता घटो नास्तीत्यत्रापि अभावांशे विशेषणतावच्छेदक-घटत्वस्य तादृशी प्रकारता, न तु घटस्येव घटत्वस्याप्यभावांशे साक्षात्प्रकारता, तथा सति घटीयोऽभावो घटत्वीय इत्याकारकः प्रत्ययः (३) स्यादिति भावः। एवकारेण कदापि घटत्वेन घटो नास्तीति स्वातन्त्र्येण घटत्वावच्छेदकत्वावगाहि-प्रत्ययो न भवतीति सूचितम्। "तस्यापि" व्यधिकरण-धर्मस्यापि। "भ्रम एवे"ति प्रतियोगिनि वैशिष्ट्यानवगाहिज्ञानमवच्छेदकत्वं नावगाहते इत्युक्ति भङ्ग्याऽवच्छेदकत्वं प्रतियोगि-वैशिष्ट्य-घटितमित्युक्तं, तस्य च प्रकृते अभावात् भ्रमः* इत्यर्थः। ननु तत्र घटो नास्तीत्येव प्रतीतिस्तथैवास्तु, अत्र तु स्वातन्त्र्येण अवच्छेदकत्वावगाहनादेवावच्छेदकत्वं न प्रतियोगि-वैशिष्ट्य-घटितं, घटत्वेन पटो नास्तीत्यनुभवस्य

* न च तादृशप्रत्ययस्य भ्रमत्वेऽपि न प्रत्ययो घटत्व-विशिष्टांश एव भ्रमो, न तु अभावांशेऽपि, इत्यभावांशे तस्य प्रमात्वमिति वाच्यम्। अभावस्याप्रकमानेन नियमतस्तत्तद्धर्मविशिष्ट-प्रतियोगिकत्वेनैवाभाव-प्रत्ययात्, इत्यस्य तादृशरूपेणाभाव-प्रत्यये अभावांशेऽपि तादृश-प्रत्ययस्य भ्रमत्वमिति भावः।

(१) विशेषणत्वरूपविषयतयावच्छिन्नस्यापि इति ष पुस्तके।

(२) दण्डी पुरुष इति प्रतीतौ इति ष पुस्तके।

(३) प्रत्ययः इति ष पुस्तके।

दूरपक्षत्वादित्यत आह "यदि पुन"रिति। आहार्य्य-प्रत्ययस्य वस्त्वसाधकत्वादाह "स्वरसवाही"ति। लोकानामीदृशानुभवो- "यद्यानुभविक:" अनुभवसिद्ध इत्यर्थः। केचित्तु घटत्वेन घटो नास्तीति पाठः, समानाधिकरण-धर्म्मावच्छिन्नाभाव-प्रत्ययो यदि प्रतियोगिन इव प्रतियोगितावच्छेदकस्याप्यभावांशे वैशिष्ट्याव- गाही तदा इत्यर्थः। "तादृशाभाव-निवारणं" तत्तुल्य-व्यधिकरण- धर्म्मावच्छिन्न प्रतियोगिताकाभावस्तद्वारणं (१) इति व्याचक्रुः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
व्यधिकरण-धर्म्मावच्छिन्नाभाव-खण्डन-
प्रकरण-व्याख्या-समाप्ता।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमानखण्डे व्यधिकरण-धर्म्मावच्छिन्नाभाव-
प्रकरणं समाप्तम्।

---

(१) तत्तुल्याभावव्यधिकरणधर्म्मावच्छिन्नाभावनिवारणमिति ग पुस्तके।

## अथ पूर्व्वपक्षोक्त-लक्षण-प्रकरणे

### तत्त्वचिन्तामणिः ।

अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः । केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेत् । न, साध्यासामानाधिकरण्यं हि न साध्यानधिकरणाधिकरणत्वं, साध्याधिकरणानधिकरणत्वं वा, केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः ।

## अथ पूर्व्वपक्षोक्त लक्षण प्रकरणे

### दीधितिः ।

"साध्ये"ति, साध्यस्यासामानाधिकरण्यं येषु, तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत्, तस्मिन् सति "साधिकरणत्वं" तदवच्छिन्नाधिकरणताकत्वं, सति सप्तम्या अवच्छेदकत्व-लाभात्, तच्चान्यूनवृत्तित्वं, एवञ्च साध्यवदवृत्ति-सकल-पदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः ।

अथ पूर्व्वपक्षोक्त-लक्षण-प्रकरणे

दीधिति-प्रकाशः ।

ननु असामानाधिकरण्यं न तदनधिकरण-वृत्तित्वं केवलान्वयिन्यव्याप्तेः, "केवलान्वयिनी"त्यादि-ग्रन्थ-विरोधाच्च । नापि तदधिकरणावृत्तित्वं, साधिकरणत्वपद-वैयर्थ्यात्, द्रव्यं सत्त्वादित्यादावतिव्याप्तेश्चातः "साध्ये"त्यादि । केवलान्वयिनि साध्यवदवृत्ति-गगनादेरधिकरणाप्रसिद्ध्याऽनधिकरणत्वस्याप्रसिद्धेराह "तदभाववत्त्व"मिति । ननु वह्निमान् धूमादित्यादावव्याप्तिः, साध्यवदवृत्ति-धूमत्वादेरभावस्य धूमादावसत्त्वादत आह "तदवच्छिन्ने"ति । अवच्छिन्नत्वस्य कुतो लाभ इत्यतः "सतो"ति । नन्ववच्छेदकत्वं अनतिरिक्तवृत्तित्वं तथा चातिव्याप्तिः धूमवान् वह्नेरित्यादौ धूमवदवृत्ति-सकलपदार्थाभाव-कूटस्य वह्न्यधिकरणतानतिरिक्तवृत्तित्वात्, वह्निमान् धूमादित्यादौ वह्निमदवृत्ति-सकलपदार्थ मध्य-निविष्ट-ह्रदत्वाद्यभावस्य धूमाधिकरणतातिरिक्तवृत्तित्वादव्याप्तिर्वा इत्यत आह "अन्यूनवृत्तित्व"मिति । धूमवान् वह्नेरित्यादौ धूमवदवृत्तिह्रदत्वाभाववत्त्वस्य वह्न्यधिकरणताया अन्यूनवृत्तित्वादतिव्याप्तिरत आह "साध्यवदवृत्तिसकलपदार्थे"ति, तत्र तादृशायोगोलकत्वाभावस्य वह्न्यधिकरणताया अन्यूनवृत्तित्वाभावान्नातिव्याप्तिरिति । साध्यवदवृत्तित्वस्य सम्बन्ध-भेदेन भिन्नत्वात्सामान्याभावो न घटत इति भावः ।

दीधितिः ।

यथा सन्निवेशे अधिकरणत्वस्य न वैयर्थ्यं, हेतुतावच्छेदकसम्बन्ध-लाभाय वा तत् । येन येन सम्बन्धेन यो यः साध्यवदवृत्तिस्तेन तेन सम्बन्धेन तत्तदभावो बोध्यः, एतेन साध्यवदवृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्व्वत्रिकत्वात् सकल-तच्छून्याप्रसिद्धिः । अथ तदभावोऽपि तादृशेनैव(१) सम्बन्धेन वाच्य स्तदा जातिमान् प्रमेयत्वादित्यादावतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वात् । अत एव न संयोगेन समवायेन वा, इदं न जातिमज्जातित्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च । नापि साधनतावच्छेदकसम्बन्धेन, इदमेतद्रूप-भिन्नं गुणत्वादित्यादावतिव्याप्तेः । नापि विषयतया घट-भिन्नं मेयत्वादित्यत्राप्यतिव्याप्तेः, सविषयमात्रस्यैव घटभिन्नविषयत्वात्, घट-निर्व्विकल्पकेऽपि घटत्वादि-भानात् । नापि सम्बन्धमात्रेण द्रव्यं सत्त्वादित्यादावतिव्याप्तेः, वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेर-

(१) तेनैव इति सोसाइटीमुद्रितपुस्तके पाठः नायं प्रकाशकद्वयानन्दसम्मतः ।

भावस्य च केवलान्वयित्वादिति प्रत्युक्तम्। विशेषणता-विशेषेण वा साध्यवद्वृत्तित्वं वक्तव्यं, सर्व्वत्रैव तत्तद्वृत्तित्वे तत्तदन्यान्यत्वे तत्प्रकारक-प्रमा-विषयत्वे वा तत् सुलभं, तेनैव सम्बन्धेन तदवच्छिन्न-सामान्याभावो वाच्य इति।

---

दीधिति-प्रकाशः।

ननु तादृश-सकलपदार्थाभाववत्त्वं यदन्यूनवृत्ति-तत्त्वमित्यस्यैव सम्यक्त्वे यदधिकरणत्वेत्यत्राधिकरणतापदं व्यर्थमत आह "यथे"ति, तथाप्यनतिप्रयोजनकत्वादाह "हेतुतावच्छेदके"ति, "तत्" अधिकरणत्वम्। संयोगेन साध्यवद्वृत्तेरयोगोलकत्वादेः संयोगेनाभावस्य वह्न्याधिकरणत्वान्यूनवृत्तित्वादतिव्याप्तिरतो "येन येने"ति वीप्सा। "एतेन" "येन येने"त्यादि-विवक्षणेन *। "साध्यव"दिति, साध्यवदसमवेतस्याकाशाभावादेः केवलान्वयित्वादिति (१)

---

* दीधितौ समवायेनेत्यस्य जातिमान् सत्त्वादित्यादावित्यर्थः। न च वह्निमान् धूमादित्यादावपि साध्यतावच्छेदक-सम्बन्धेन साध्यवद्वृत्ति-सकल-पदार्थ-सध्यनिविष्टाकाशाभाव-शून्यत्वाप्रसिद्ध्याऽव्याप्ति-सम्भवे समवाय-सम्बन्धावच्छिन्न साध्यताक-स्थलानुसरणमफलमिति वाच्यम्। साध्यसाधनभेदेन लक्षणस्य विभिन्नतया वह्निसाध्यकव्याप्तिलक्षणे साध्यतावच्छेदक-सम्बन्धेनाभावस्य विवक्षणे तत्र नाव्याप्तिः सम्भवति, संयोगसम्बन्धावच्छिन्नवह्निमदसंयुक्ताभावस्य हेत्वधिकरणत्वान्यूनवृत्तित्वादिति समवायावच्छिन्न-साध्यकानुसरणमिति भावः।

(१) साध्यवदसमवेताकाशाभावादिः केवलान्वयीति इति पाठः क पुस्तके।

भाव:। "सकलतच्छून्ये"ति, सम्बन्ध-सामान्येन तच्छून्येत्यर्थ:। "तदभाव:" साध्यवद्वृत्तेरभाव:। "तादृशेन" साध्यतावच्छेदकेन, "जातिम"दिति, जातिमदसमवेतमसमवेतमेव तस्य च समवायेनाभाव: केवलान्वयीति भाव:। "अतएव" जातिमान् मेयत्वादित्यादावतिव्याप्तेरेव। दूषणान्तरमाह "इदं न जातिम"दिति, साध्यतावच्छेदकसम्बन्धेनावृत्तित्व विवक्षायान्तु प्रकृते स्वरूपसम्बन्धस्यैव तथात्वात्तेन सम्बन्धेन साध्यवद्वृत्तिर्नास्त्यभाववत्त्वप्रकारक प्रमा-विषयत्वाभावस्य प्रसिद्धत्वात्तदभावस्य हेत्वधिकरणताया अन्यूनवृत्तित्वाव्याप्ति: सम्भवतीति, संयोगत्व-समवायत्वादिनैव तादृश-विवक्षणेऽव्याप्तिरुक्ता, रूपभिन्नं गुणत्वादित्यादौ रूपभिन्ने समवायेनासम्बद्धं रूपत्वादि तदभावस्य गुणत्वान्यूनवृत्तित्वाभावान्नातिव्याप्ति: सम्भवतीत्यत"एत"दिति। समवेतमात्रस्यैव एतद्रूप-भिन्ने समवेतत्वादेतद्रूप-भिन्नासमवेतमसमवेतमेव, समवायेन तदभाव: केवलान्वयीति भाव:। (एतद्घटभिन्नं सत्त्वादित्यादौ तु एतद्घटभिन्नासमवेतस्यैतद्रूपादेरभावस्य सत्त्वान्यूनवृत्तित्वाभावान्नातिव्याप्ति: सम्भवतीति तत्त्वार्थं) (१) "एतद्घटभिन्न"मिति, घटभिन्नाविषयकं निर्विषयकमेव, तस्य च विषयतया अभाव: केवलान्वयीति भाव:। 'इत्यत्रापी"त्यपिना एतद्रूपभिन्नं गुणत्वादित्यस्य संग्रह:। "द्रव्यं सत्त्वादित्यादा"

---

(१) ) एतच्चिह्नितोऽधिकपाठः च पुस्तके।

वित्यादिना एतद्रूपभिन्नं गुणत्वात् घटभिन्नं मेयत्वादित्यादि-परिग्रहः। "स्वरूपसम्बन्धेन" कालिकविशेषणतया। यत्त्व-तत्त्वयोरननुगमात् ( १ ) साध्यवदसमवेतस्य समवायेनाभावः साध्यवदसंयुक्तस्य संयोगेनाभाव इत्येवं क्रमेण निवेशे अतिगौरवं, (२) तत्र च विशेषणताविशेषेण साध्यवद्वृत्तेरभावस्यापि निवेशने तेनैव सामञ्जस्ये शेष-वैयर्थ्यञ्चेत्याशयेनाह "विशेषणते"ति, विशेषणता च तत्तद्व्यक्तित्वस्य अभावस्य प्रमाविषयत्वस्य वा ग्राह्या। "सर्व्वैवे"ति, पूर्व्वोक्त-यावद्व्यभिचारिणीत्यर्थः, तेन केवलान्वयिनि तत्तद्व्यक्तित्वादौ साध्यवद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः *। तत्र तत्तद्व्यक्तित्वं तत्तद्व्यक्तिस्वरूपं, तच्च विलक्षणविशेषणता सम्बन्धेन(३) स्वस्मिन्नपि वर्त्तत इत्याशयेनाह "तत्तद्व्यक्तित्व" इति, तत्तद्व्यक्तित्वं तत्तद्व्यक्तिमात्रवृत्तिरसाधारणो धर्म्मो रूपादिः, स च समवायादिनैव वर्त्तते न विशेषणतया इत्यत आह "तत्तदन्यान्यत्व" इति, तत्तदन्यान्यत्वमपि तत्तद्व्यक्तित्वमेव तदुक्तं "न हि घट-भिन्न-भेदो घटत्वादतिरिच्यते" इति, तथाच स एव दोष इत्यत आह "तत्-प्रकारके"ति, तथाचेतद्रूपभिन्नं गुणत्वादित्यादौ एतद्रूपत्व-प्रकारक-प्रमाविषयत्वं विशेषणताविशेषेण साध्यवद्वृत्ति तेन सम्बन्धेन

---

* तत्साध्यत्वावेव तत्प्रसिद्धमिति भावः।

(१) अन्यतत्त्वयोरननुगमादिति घ पुस्तके।

(२) अतिगौरवादिति घ पुस्तके।

(३) विशेषणता विशेषेण इति घ पुस्तके।

तदभावस्य गुणत्वा(१)न्यूनवृत्तित्वाभावान्नातिव्याप्तिरिति भावः। "तत्" साध्यवदवृत्तित्वम्। एवञ्च सामान्याभाव-निवेशोऽपि सम्यगित्याशयेनाह "तेनैवे"ति। "तदवच्छिन्ने"ति, साध्यवदवृत्तित्वावच्छिन्नेत्यर्थः।

---

दीधितिः ।

केचित्तु (२) नञ्व्यत्यासेन असाध्यानि साध्यविरोधीनि साध्यासमानाधिकरणानीति यावत्, तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वं, साध्यसामानाधिकरण्याभाव-व्यापकाभाव-प्रतियोगि-सामानाधिकरण्य-सामान्यकत्वमिति फलितार्थः। अत्र च साध्य–सामानाधिकरण्यं, साध्यतावच्छेदक-सम्बन्धेन साध्यवति हेतुतावच्छेदक-सम्बन्धेन वृत्तिः, परञ्च (३) सामानाधिकरण्यं हेतुतावच्छेदक-सम्बन्धेन हेतुमति तेनैव वृत्तिः। तेन समवायेन पृथिवीत्वादेः साध्यतायां व्यभिचारिणि कालिकसम्बन्धेन हेतौ, द्रव्यत्वादेश्च समवायेन साध्यतायां समवायेन हेतौ सत्त्व-

---

(१) गुणत्वाधिकरणत्वा इति घ पुस्तके।

(२) केचिदिति हस्तलिखित पुस्तके पाठः।

(३) परन्तु इति हस्तलिखित पुस्तके।

गुणत्वादौ नातिप्रसङ्गः, न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्व्याप्यस्य रूपविशेषादेः कालिकसम्बन्धेनाधिकरणे काले स्पन्दे च (१) कालपरिमाण-स्पन्दत्वादेः समवायेन तदधिकरणे घटादेः संयोगेन वृत्तावपि चाप्रसङ्गः। सम्बन्धविशेषेण व्याप्यत्व-लाभाय साधिकरणत्वमित्याहुः। तच्चिन्त्यम्।

दीधिति-प्रकाशः।

"केचित्त्वि"ति। साध्य-विरोधित्वं साध्याभाव-व्याप्यत्वं तच्च केवलान्वयिन्यप्रसिद्धमत आह "साध्यासामानाधिकरणानि" इति। ननु साध्यासमानाधिकरणानां गगनादीनां हेत्वसामानाधिकरण्याद्व्यभिचारिण्यतिव्याप्तिरत आह "साध्य-सामानाधिकरण्याभावे"ति, आर्द्रेन्धन-प्रभव वह्नि-सामाधिकरण्य-व्यक्तेरभावस्य धूम-सामानाधिकरण्याभाव--व्यापकत्वाद्व्यभिचारिण्यतिव्याप्तिरतः "सामान्ये"ति हेतुतावच्छेदकावच्छिन्न-हेतु-सामानाधिकरण्यत्वावच्छिन्न-प्रतियोगिताकाभावत्वेन व्यापकत्व-स्फोरकम्। तेनायोगोलकीय-वह्नि-सामानाधिकरण्यस्यापि द्वित्वादिनाऽभावस्य धूमसामानाधिकरण्याभाव-व्यापकत्वेऽपि न क्षतिः, न वा द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादावव्याप्तिरिति। "साध्यवति" साध्यतावच्छेदकावच्छिन्न-साध्यवति। तेन गुणकर्म्मान्यत्व-विशिष्ट-

(१) काले स्पन्दे च इति नास्ति हस्तलिखित पुस्तके।

सत्तावान् जातेरित्यादौ नातिव्याप्तिः। "परञ्च सामानाधिकरण्यं" हेतु-सामानाधिकरण्यम्। "हेतुमति" हेतुतावच्छेदक विशिष्ट-हेतुमति। "तेनैव" हेतुतावच्छेदक-सम्बन्धेनैव। तेन द्रव्यं गुण-कर्म्मान्यत्व विशिष्ट-सत्त्वादित्यादौ नाव्याप्तिः। क्रमेण सम्बन्ध-भेद(१)विवक्षयाः प्रयोजन(२)माह "तेने"त्यादिना * पृथिवी-त्ववति कालिकसम्बन्धेनावर्त्तमानस्य चरम-ध्वंसादेर्हेत्वधिकरणी-काले वृत्तेर्नातिप्रसङ्गः। अतएवोक्तरत्र पृथिवीत्वं विहाय द्रव्यत्वेत्युक्तम् †। सत्त्वहेतौ हेतुसामानाधिकरण्याभावस्य साध्य-सामानाधिकरण्याभाव-व्यापकत्वं न स्वस्मिन्, गुणत्वे तु स्वस्मिन्नेव तदिति तथोक्तम्। (३) परसामानाधिकरण्ये ‡ हेतुताव-च्छेदकसम्बन्धस्य (४) फलमाह "न वा संयोगेने"ति, वह्नि-मानेतद्रूपादित्यादौ वह्निमति समवायेनावर्त्तमानं कालपरि

* साध्यतावच्छेदक-सम्बन्धाविशेषणे पृथिवी घटादित्यत्र कालिकेन हेतौ व्यभिचारिण्यति व्याप्तिः पृथिवीत्वाधिकरणे महाकाले इतिसम्बन्धात्वस्यैवहेतोः सम्बन्धसामान्येनावृत्तौ गगनादौ च हेतु सामानाधिकरण्याभावात्, तद्विशेषणे तु नातिव्याप्तिरिति सङ्गमयति "पृथिवीत्वे त्यादिना इति भावः।

† पृथिवी सत्त्वादित्यादौ च समवायेन पृथिवीत्ववत्यवर्त्तमाने गुणत्वे हेतु सामानाधिकरण्याभावाव्यातिव्याप्तिः सम्भवति, क्रियामात्रस्यैव कालोपाधित्वा-दिति भावः।

‡ हेतु-सामानाधिकरण्ये इत्यर्थः।

(१) सम्बन्धभेद इति नास्ति ग पुस्तके।

(२) प्रयोजनमित्यत्र फलमिति पाठः ग पुस्तके

(३) तदुदाहृतमिति ख पुस्तके।

(४) हेतुतावच्छेदक सम्बन्धेनेत्यस्य इति ग पुस्तके।

मार्णं * स्पन्दत्वञ्च तच्च कालिकतया एतद्रूपाधिकरणे काले स्पन्दे च समवायेन वर्त्तत इत्यव्याप्तिर्नेत्यर्थः। "स्पन्दत्वादे"-रिति "वृत्तावपी"त्यत्रानुषज्यते। "तेनैवे"त्यस्य फलमाह "समवायेने"ति। "तदधिकरणे" एतद्रूपाधिकरणे पर्व्वतादौ। "सम्बन्धविशेषेण" हेतु सामानाधिकरण्ये हेतौ प्रविष्टेन। वह्निमानाकाशादित्यादौ चा(१)काश-सामानाधिकरण्याप्रसिद्धा तद्घिनाकृत-लक्षणस्य तत्रातिव्याप्त्यभावादिति भावः। "तच्चिन्त्य"-मिति, एतद्रूप-भिन्नं गुणत्वात् ज्ञानादित्यादौ महाकालान्यो घटादिरित्यत्र च कालिकसम्बन्धेन हेतौ चातिव्याप्तिरत्रास्वरसः। साध्यतावच्छेदक--सम्बन्धेन साध्यवति विशेषणताविशेषेण वृत्तित्वाभाव-(२)-व्यापको हेतुतावच्छेदक-सम्बन्धेन हेतुमति तेनैव सम्बन्धेन वृत्तित्वाभाव इत्युक्तौ च नायं दोष इति स्मर्त्तव्यम्।

दीधितिः।

## यथाश्रुतं यथासम्भवं विकल्प्य दूषयति "ने"त्यादि।

* कालिकसम्बन्धेनैतद्रूपाधिकरणे महाकाले वर्त्तमानं कालपरिमाणं, क्रियामात्रस्यैव कालोपाधित्वात् तदधिकरण-क्रियावृत्ति-स्पन्दत्वमिति महाकाल-खण्डकालभेदेन द्वयमुपात्तम्।

(१) वह्निमानाकाशादित्यादौचेति नास्ति ग पुस्तके।

(२) वृत्तित्वस्याभाव इति घ पुस्तके।

दीधिति-प्रकाशः ।

ननु स्वोक्तविवक्षायां मूलोक्तदोषासङ्गतिरत आह "यथाश्रुत" मिति । ननु साध्यासामानाधिकरण्य-पदस्य साध्यवदवृत्तित्वमेव लक्षण-कर्त्तुर्विवक्षाविषयः, अतएव केवलान्वयिनि तत्प्रसिद्धिर्निरधि-करणे दर्शिता, तथाच साध्यानधिकरणाधिकरणत्वस्य दूषणम-सङ्गतमत आह "यथासम्भव"मिति । यावन्तोऽर्थाः सम्भवन्ति तावतां दूषणस्यासाम्प्रदायिकत्वादिति भावः ।

तत्त्वचिन्तामणिः ।

नापि स्व-समानाधिकरणात्यन्ताभावाप्रतियोगि-साध्य-समानाधिकरण्यं, पर्व्वतीय-वह्नेर्म्महानसीय-धूम-समानाधिकरणात्यन्ताभाव-प्रतियोगित्वात्, द्रव्यत्वादेर-व्याप्यवृत्त्यव्याप्यतापत्तेश्च । न च प्रतियोगि-विरोधित्वं व्याप्यवृत्तित्वं वा अभाव-विशेषणं देयं; संयोगादौ साध्ये सत्तादेरनैकान्तिकत्वाभाव-प्रसङ्गात्, न हि प्रतियोगि-विरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति, अधिकरण-भेदेनाभाव-भेदाभावात् ।

दीधितिः ।

नन्वप्रतियोगिपदेन प्रतियोगितानवच्छेदकावच्छिन्नं वक्तव्यमत आह "द्रव्यत्वादे"रिति । प्रतियोगि-विरो-

धित्वं प्रतियोगि(१)-तदधिकरणावृत्तित्वं, व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। "अधिकरणे"ति, तथा सत्यभाव एव न सिध्येदिति भावः। संयोगात्यन्ताभावस्य द्रव्ये प्रतियोगि-सामानाधिकरण्यं अव्याप्यवृत्तित्वञ्च प्रतियोग्यधिकरणीभूत-द्रव्यवृत्तित्वं स्वाधिकरणीभूत-द्रव्यवृत्त्यत्यन्ताभाव-प्रतियोगित्वं, गुणे च प्रतियोग्यसामानाधिकरण्यं व्याप्यवृत्तित्वञ्च प्रतियोग्यनधिकरणीभूत-गुण-वृत्तित्वं स्वाधिकरणीभूत-गुण-निष्ठात्यन्ताभावाप्रतियोगित्वं; एतानि च न भेदकानि अविरोधात्। सामान्यतश्चाव्याप्यवृत्तौ प्रतियोगि-समानाधिकरणे च न तथात्व-व्यतिरेक इति भावः।

---

दीधिति-प्रकाशः।

प्रतियोगि-विरोधित्वं यदि प्रतियोग्यभाव-व्याप्यत्वं * प्रति-

---

* संयोगाभावस्य न द्रव्यान्तर्भावेन प्रतियोग्यभाव-व्याप्यः, तत्र संयोगाभावाभाव-सत्त्वात्, तथाच हेत्वधिकरणान्तर्भावेन प्रतियोग्यभावव्याप्यत्वविशिष्टाभावाप्रतियोगित्वं लक्षणं कर्त्तव्यं, एवञ्च संयोगि द्रव्यत्वादित्यत्र नाव्याप्तिः तत्र संयोगाभावस्य लक्षणाघटकत्वात्। संयोगि सत्त्वादित्यत्र च गुणान्तर्भावेन प्रतियोग्यभावव्याप्यत्व विशिष्टत्वेन संयोगाभावस्य लक्षण-घटकत्वादतिव्याप्तिः स्यादिति भावः।

(१) प्रतियोगीति नास्ति हस्त-लिखित-पुस्तके। सोसाइटी-मुद्रित-पुस्तक एवैतादृशः पाठो वर्त्तते।

योग्यनधिकरणवृत्तित्वं वा, व्याप्य-वृत्तित्वञ्च यद्यनवच्छिन्ना या वृत्तिस्तद्वत्त्वं स्वाधिकरणीभूत-यत्किञ्चिद्व्यक्तिवृत्त्यत्यन्ताभावा(१)-प्रतियोगित्वं वा तदा नातिव्याप्तिरत आह "प्रतियोगि-विरोधित्व"मिति । "तदधिकरणे"ति, प्रतियोग्यधिकरणेत्यर्थः । "न मिथ्ये"ति, अधिकरणानामनन्तत्वान्नास्तीति प्रतीति नियामकानन्त कल्पने गौरवादतिरिक्तोऽभावः कल्प्यते इत्येवाभाव-मिथो बीजं, तच्चाधिकरण भेदेनाभाव भेदाभ्युपगमे न सम्भवतीति भावः । ननु संयोगात्यन्ताभावो गुणे प्रतियोग्यसमानाधिकरणो व्याप्यवृत्तिश्च । द्रव्ये प्रतियोगि समानाधिकरणोऽव्याप्य वृत्तिश्चेति व्यवहारात् प्रतियोगि-सामानाधिकरण्यासामानाधिकरण्य-व्याप्यवृत्तित्वाव्याप्यवृत्तित्व-(२)लक्षण विरुद्ध-धर्म्म-संसर्गित्वं संयोगाभावादि भेदकं स्यादत आह "संयोगात्यन्ताभावस्ये"ति । "द्रव्य" इति अव्याप्यवृत्तित्वञ्चेत्यत्रानुषज्यते । "गुणे" इत्यपि "व्याप्यवृत्तित्वञ्चे"त्यत्रानुषज्यते। "अविरोधा"दिति, संयोगाधिकरण द्रव्य वृत्तित्व-संयोगानधिकरण--गुणवृत्तित्वयोराकाशाभावादौ दर्शनादिति भावः । "सामान्यतो" "न तथात्वव्यतिरेक" इत्यन्वयः । तथाच स्व-समानाधिकरणात्यन्ताभाव-प्रतियोगिनि न स्व-समानाधिकरणात्यन्ताभाव-प्रतियोगित्वाभावः, न वा प्रतियोग्यधिकरणवृत्तौ प्रतियोग्यधिकरण-वृत्तित्वाभाव इत्यर्थः ।

---

(१) वृत्त्यभावा इति च पुस्तके ।

(२) व्याप्याव्याप्यवृत्तित्व इति च पुस्तके ।

तत्त्वचिन्तामणिः ।

नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगि-साध्यवत्कत्वं व्याप्तिः। मूले वृक्षः कपि-संयोगवान्नेत्यबाधित-प्रतीतेस्तदन्योन्याभावस्यापि तत्र सत्त्वात्। न चैवं भेदाभेदः, अवच्छेदक-भेदेन तत्सत्त्वाभ्युपगमात्। साधनवन्निष्ठान्योन्याभावाप्रतियोगि-साध्यवद्यस्येति षष्ठ्यर्थ-व्याप्य-व्यापकभावानिरूपणात्। साध्य-साधनयोर्व्याप्ति-निरूप्यत्वात्। वह्निमत्पर्वतस्य धूमवन्महानस-निष्ठान्योन्याभाव-प्रतियोगित्वाच्च,विशेषाभावकूटादेवाभाव-व्यवहारोपपत्तौ सामान्याभावे मानाभावात्।

दीधितिः ।

ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्यः, स चाधिकरणत्वं, साध्य-साधनयोरपि सामानाधिकरण्यमेवेत्यतो दूषणान्तरमाह "साध्ये"ति। साध्यत्व-साधनत्वे व्याप्ति-प्रतियोगित्वानुयोगित्वे। यत्तत्त्वामेव व्याप्तिर्निर्वक्तव्येत्यत आह "वह्निम"दिति। ननु यत्समानाधिकरणान्योन्याभाव-प्रतियोगितावच्छेदकं यद्रूपावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः। न च धूम-समा-

नाधिकरणान्योन्याभाव-प्रतियोगितावच्छेदको वह्नि-त्वावच्छिन्नो वह्निः, धूमवान् वह्निमानित्यप्रतीतेरत आह "विशेषे"ति । य एव प्रत्येकं वह्निमद्भेदा धूम-समानाधिकरणास्त एव चैकाधिकरण-वृत्तित्वावच्छिन्ना वह्निमत्सामान्य-भेद-बुद्धिं जनयन्ति, तत्प्रतियोगितावच्छेदको-वह्नित्वावच्छिन्नो वह्निरिति भवत्यव्याप्तिः ।

दीधिति-प्रकाशः ।

"साध्यवती"ति, न तु साध्ये इति भावः । "यस्ये"ति, तथाच साध्यवान् यस्य-यस्य साध्यवान् यदधिकरणमित्यर्थः । ननु यथा चैत्रस्य पुत्रवानयं देश इत्यत्र चैत्रस्य सम्बन्धित्व (१) पुत्रेऽन्वेति न तु पुत्रवति, तथा ससम्बन्धिकपदत्वात् साध्यवान् यस्येत्यत्रापि यत्सम्बन्धित्व साध्य एवान्वेति तच्च व्याप्तिनिरूपकत्वमित्यत आह "साध्यसाधनयोरर्पो"ति । सामानाधिकरण्यमेव साध्यवान् यस्ये-त्यत्र षष्ठार्थः सम्बन्ध इत्यन्वयः । साध्य साधनयो धर्म्मिणोर्न व्याप्ति-निरूप्यत्वमत आह "साध्यत्वे"ति । "यत्तद्भ्यामेवे"त्यवकारेण साध्य-साधन-व्यवच्छेदः । तथाच यत्समानाधिकरणान्योन्या-भावाप्रतियोगि यत्तेन सममितिरीत्या वाच्यमित्यर्थः (२) । "न च धूमसमानाधिकरणे"त्यादि, यद्यपि वह्नित्व विशिष्ट-वह्निरेव तत्तद्वह्नित्वादिना धूमसमानाधिकरणान्योन्याभाव-प्रतियोगिताव-

(१) चैत्रसम्बन्धित्वमन्वेति च पुस्तके ।

(२) रीत्यर्थ इति च पुस्तके ।

च्छेदक इत्ययुक्तमेतत्तथापि यद्रूपावच्छिन्नं प्रतियोगितावच्छेदकं तदन्य-रूपावच्छिन्न-सामानाधिकरण्यमित्यर्थे तात्पर्य्यं, * । तत्त-द्वह्नित्वादिना प्रतियोगितावच्छेदकमपि वह्नित्वेन प्रतियोगितानव-च्छेदकमिति मतान्तरमङ्गीकृत्येदमुक्तमित्यन्ये । वह्नि-समानाधि-करण-विशेषाभाव-कूट-प्रतियोगितावच्छेदकतया धूमवान् वह्ने-रित्यादौ नातिव्याप्तिरित्यव्याप्ति-परतया व्याचष्टे "य एवे"ति, "प्रत्येक" प्रातिस्विक-रूपेण तत्तद्भेदत्वादिना, धूमसमानाधि-करणाः (१) ।

तत्त्वचिन्तामणिः ।

नापि साधन-समानाधिकरण-यावद्धर्म्म-निरू-पित-वैयधिकरण्यानधिकरण-साध्य-सामानाधिकरण्यं, साधन-समानाधिकरणस्य प्रमेयत्वादेर्वैयधिकरण्या-प्रसिद्धेः, महानसादौ समवायितया वह्नि-वह्निमतोर-त्यन्तान्योन्याभावयोः सत्त्वात् धूमादावप्युक्त-लक्षणा-भावाच्च ।

दीधितिः ।

"साधने"ति, वैयधिकरण्यं तदनधिकरण-वृत्तित्वं

* तादृश-प्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्न सामानाधिकरण्यमित्यर्थ इति भावः ।

(१) धूमसमानाधिकरणा इति नास्ति क, ख, ग पुस्तकेषु ।

तच्च केवलान्वयिनः साधनस्याप्रसिद्धम्, अतिप्रसञ्जकञ्च पृथिवी द्रव्यत्वादित्यादौ अतः समानाधिकरणोपादानम्। धूमादेरपि न वह्न्यादि-समानाधिकरण-द्रव्यत्वाद्यनधिकरण-वृत्तित्वमतो "याव"दिति। यद्यपि पृथिवीत्वादि-समानाधिकरण-घटत्वपटत्वाद्यनधिकरण वृत्तित्वं द्रव्यत्वादेस्तदनधिकरणमात्र-वृत्तित्वञ्च निखिल घट-पटादि-रूपाणां तथापि तादृश-धर्म्मानधिकरणमात्रवृत्तित्वानवच्छेदक-साध्यतावच्छेदकवत्त्वं वोध्यं, न हि पृथिवीत्व-समानाधिकरणस्तादृशः कश्चिदेको धर्म्मो यदनधिकरणमात्रवृत्तितावच्छेदकं रूपत्वादि, धूमत्वादिकन्तु वह्न्यादि-समानाधिकरणायोगोलकत्वाद्यनधिकरणमात्र वृत्तितावच्छेदकम् । तदवच्छेदकत्वञ्च (१) तदनतिरिक्तवृत्तित्वं तच्च तच्छून्यधर्म्मावृत्तित्वं तेन मेयत्व-समानाधिकरण-गुणत्वाद्यनधिकरण–मात्रवृत्तितानधिकरण-गगनादि-वृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यक-मेयत्वे नातिप्रसङ्गः ।

दीधिति प्रकाशः ।

"प्रमेयत्वादे"रितिमूल * मनूद्याह "वैयधिकरण्य"मिति ।

* प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेरितिमूलसन्दर्भः ।

"पृथिवी"ति,* द्रव्यत्वानधिकरण-वृत्तित्वस्य पृथिवीत्वेऽसत्त्वादिति भावः। धूमवान् वह्नेरित्यत्रायोगोलकीय-वह्न्यनधिकरण-वृत्तित्वं धूमे वर्त्तत इति अखण्ड-हेत्वनुधावनम्। साधनाधिकरणे येन सम्बन्धेन धर्म्मस्य वृत्तित्व तेन सम्बन्धेन तदनधिकरणं यत्साध्यतावच्छेदकसम्बन्धेन तद्वृत्तित्वस्यात्र तादृश २ वैयधिकरण्यं, तेन (३) (साधनसमानाधिकरणधूमस्यैव समवायसम्बन्धेनानधिकरणे संयोगेन संयोगेनानधिकरणे समवायेन वह्निहेतावपि नक्षतिः।) (४) "धूमादेरपी"ति, समवायेन धूमस्य साध्यतायां व्यभिचारिणि वह्न्यावतिव्याप्तिर्बोध्या (५)। संयोगेन (६) साध्यतायां द्रव्यत्वानधिकरणे गुणादौ संयोगेन वृत्तित्वस्याप्रसिद्धेर्द्रव्यत्वमादाय नातिव्याप्तिः सङ्गच्छते। "द्रव्यत्वादे"रिति, तथाच द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरित्यर्थः। "तदनधिकरणे"ति, साधन-समानाधिकरण-घटत्वानधिकरणेत्यर्थः। तथाच मात्रपदे दत्तेऽपि रूपवान् पृथिवीत्वादित्यत्राव्याप्तिरित्यर्थः। "तादृशी"ति साधन-समानाधिकरणे-

* तद्वह्नि-तद्धूमयोर्व्याप्तिरेव धूमसामान्यवह्निसामान्ययोर्व्याप्तिः, इत्यत्र पर्व्वतीयधूमानधिकरणवृत्तित्वानधिकरणत्वस्य पर्व्वतीयवह्नौ सत्त्वाद्विशेषव्याप्तिरप्यत्रेत्यभिप्रायेणेदं, अन्यथा धह्निमान् धूमादित्यत्राव्याप्तिः स्यादिति भावः।

(१) अवच्छेदकत्वन्तु इति हस्त-लिखित-पुस्तके।

(२) तादृश इति नास्ति ग पुस्तके।

(३) तेन सम्बन्धभेदमादाय न दोषः इति ग पुस्तके।

(४) ( ) मध्यस्थितः पाठो नास्ति ग पुस्तके।

(५) वतिव्याप्तिरित्यर्थ इति ग पुस्तके।

(६) धूमस्येत्यधिकं ग पुस्तके।

त्यर्थः। "नह्नी"ति, नीरूप-पृथिव्यभावादिति भावः। "धूमत्वा-दिकन्ति"ति, तथाच व्यभिचारिणि नातिव्याप्तिः। नन्वन्यून-वृत्तित्वरूपावच्छेदकत्वं मेयत्वादावपीति तत्साध्यकाव्याप्तिरत आह "तदवच्छेदकत्व"मिति। "तच्छून्यधर्म्म"ति, धर्म्मत्वं वृत्तिमत्त्वं। तत्प्रयोजनमाह "तेने"त्यादिना। द्रव्यवान् मेयत्वादित्यत्र सम-वायेन द्रव्यस्य साध्यतायां मेयत्वसमानाधिकरण गुणत्वानधि-करणमात्र-समवेतत्व-शून्यगगनादि-वृत्तित्वेऽपि तच्छून्यानि यावन्ति वृत्तिमन्ति सत्तादीनि(१) तदवृत्तित्वस्य द्रव्यत्वे सत्त्वान्नातिव्याप्ति-रिति भावः।

ननु धर्म्मत्वं साध्यतावच्छेदकसम्बन्धेन सम्बन्धित्वं वाच्यम् *। अन्यथा गगनादेरपि संयोगेन सम्बन्धितयोक्तदोषापरिहारात्,

* ननु धर्म्मपदं व्यर्थं तथाहि तदनधिकरणमात्रवृत्तित्वं तदनधिकरणेतरावृत्तित्वे सति तदनधिकरणवृत्तित्वं, अत्र विशेष्यदलमसमाहत्य-तदनधिकरणेतरावृत्तित्वस्यैव मात्रपदार्थत्वे तदनधिकरणेतरावृत्तित्वशून्यत्वं गगने नास्तीति कृत्वा-गगनवारणसम्भवे किं धर्म्मपदेनेति चेन्न धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय तदनधिकरणेतरावृत्तित्वमित्यत्र वृत्तित्वं साध्यतावच्छेदकसम्बन्धेन वाच्यम। एवं सति गुणत्वानधिकरणेतरावृत्तित्वस्यापसिद्धग्रा संयोगसम्बन्धेन द्रव्यादि साध्यक-मेयत्वादिहेतौ अवच्छेदकत्वलक्षणाव्याप्तिवारणाय तादृश-यावद्धर्म्मानधिकरणे-तरत्ववद्भिन्नान्योन्याभाव-प्रतियोगितानवच्छेदके स्वाधिकरणवृत्त्य-साध्यतावच्छे-दकसम्बन्धेन वृत्तिमत्त्वरूपधर्म्मत्वस्योभयाभाववत्तादृशं यद्युत्तम तदेवावच्छेदक-मिति पारिभाषिकावच्छेदकलक्षणं निर्वाच्यम्। तथाचात्र द्रव्यवान् मेयत्वादि-त्यादौ तादृशानवच्छेदक-गगनादौ द्रव्यत्वाधिकरणत्वाभावो नास्तीति पारिभाषि-कावच्छेदकत्वाभावात्, तादृशावच्छेदकं यद्युत्तमं तद्भिन्नमेव साध्यतावच्छेदकमिति

(१) सत्तादीनि इति नास्ति ग पुस्तके।

एवमभाव-द्रव्यान्यतरत्वेन समवायेन साध्यतायां मेयत्वादि-हेतौ व्यभिचारिणि तादृश-गुणत्वानधिकरणमात्र-समवेतत्वशून्येऽभावे वृत्तिमति तादृशान्यतरत्वस्य सत्त्वादनवच्छेदकत्वं स्यात्, तथाच संयोगेन द्रव्यस्य साध्यतायां मेयत्वादावतिव्याप्तिः तादृश-गुणत्वाद्यनधिकरणमात्र-संयुक्तत्वशून्यस्य संयोगेन वृत्तिमतोऽप्रसिद्धा द्रव्यत्वस्यावच्छेदकत्वाभावात्। एवं तच्छून्यधर्म्मावृत्तित्वमित्यत्रा-वृत्तित्वं साध्यतावच्छेदकतावच्छेदकसम्बन्धेन वाच्यम्, अन्यथा वह्नि-समानाधिकरणायोगोलकत्वाद्यनधिकरणमात्रवृत्तिता-शून्या-योगोलकीय-वह्नौ धूमत्वस्यापि कालिकसम्बन्धेन वृत्तित्वादवच्छेद-कत्वापातात्। इत्थञ्च समवायेन द्रव्यस्य साध्यतायां मेयत्वादि-हेतौ तादृशगुणत्वानधिकरणमात्रवृत्तिता-शून्ये धर्म्मे सत्त्वादौ साध्य-तावच्छेदकताघटकसमवायेन वृत्तित्वाप्रसिद्धेरवच्छेदकलक्षणा-व्याप्तिः। न च तादृशधर्म्मानधिकरणमात्रवृत्तित्वाभाव-वृत्ति-मत्त्वोभयाभाववद्-यावत्स्वाश्रयकत्वं तदवच्छेदकत्वं वाच्यम्। अभावीयविशेषणतया वृत्तिमत्त्वीयसम्बन्धविशेषेण चोभयाभाव-स्योभयवत्यपि सत्त्वात्, अन्यतरसम्बन्धेनाभावस्याननुगमात्। एवं सत्ताद्रव्यत्वोभयवान् जातिमत्त्वादित्यादौ वक्ष्यमाणरीत्याऽति-प्रसङ्गश्चेत्यस्वरसादाह "वस्तुतस्त्वि"ति।

---

तत्रातिव्याप्तिरिति मत्वा वृत्तिमत्त्वरूपधर्म्मत्वोपादानमिति निष्कर्षः। एतन्मते-वस्तुत इत्यादि दीधिति-ग्रन्थस्याभावस्तु सत्ताद्रव्यत्वोभयवान् जातिमत्त्वादि-त्यादिरिति भावः।

दीधितिः।

वस्तुतस्तु तादृश-धर्म्मानधिकरण-मात्रवृत्ति-स्वाव-च्छिन्नाधिकरणताकत्वं तदवच्छेदकत्वं वाच्यम्। तेन सत्ता-द्रव्यत्वोभयवान् गुणान्यत्व-विशिष्ट-सत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्गः। सत्ताया गुणत्वा-भाववन्मात्रवृत्तित्व--विरहेऽपि उभयत्वावच्छिन्नाधि-करणताया गुणत्वाभाववन्मात्रवृत्तित्वात्।

---

दीधिति-प्रकाशः।

"तादृशधर्म्मे"ति, साधनसमानाधिकरणधर्म्मेत्यर्थः। "स्वं" अवच्छेदकत्वेनाभिमतम्। तथाच संयोगेन द्रव्यस्य साध्यतायां सत्त्वादिहेतौ संयोगेन द्रव्यत्वावच्छिन्नाधिकरणतायास्तादृश-गुणत्वानधिकरणमात्रवृत्तित्वात् द्रव्यत्वस्य नावच्छेदकत्व-क्षतिः। तादृश-धर्म्मानधिकरणमात्रवृत्ति-स्वावच्छिन्नकत्वमित्युक्तौ गुणा-न्यत्वविशिष्टसत्तावान् जातिमत्त्वादित्यादौ गुणान्यत्वविशिष्टसत्ता-त्वावच्छिन्नस्य सत्त्वस्य गुणत्वानधिकरणमात्रवृत्तित्वाभावात् अति-प्रसङ्ग (१) इत्यधिकरणतापर्य्यन्तानुधावनम्। तादृशधर्म्मानधि-करणमात्रवृत्तित्वञ्च तादृश-धर्म्माधिकरणावृत्तित्वं, इतरांशस्य वैयर्थ्यात्। न च स्वावच्छिन्नाधिकरणता साध्यतावच्छेदकसम्बन्धेन

---

(१) अतिप्रसङ्गमिति च पुस्तके।

वाच्या, अन्यथा धूमवान् वह्नेरित्यादौ कालिकसम्बन्धेन धूमत्वावच्छिन्नाधिकरणताया अयोगोलकत्वाधिकरण-वृत्तित्वेन धूमत्वस्यानवच्छेदकत्वापातात्; तथाच कालो घटवान् कालपरिमाणात्, ईश्वरज्ञानं घटवत् नित्यज्ञानत्वादित्यादौ कालिकसम्बन्धेन विषयतासम्बन्धेन च साध्यतायां तादृशावच्छेदकाप्रसिद्धेरव्याप्तिरिति वाच्यम्। येन येन सम्बन्धेन स्वावच्छिन्नाधिकरणता तादृशी तेन तेन सम्बन्धेन स्वावच्छिन्न-प्रकारकज्ञानभिन्नं यत्साध्यतावच्छेदकसम्बन्धेन यत्साध्यतावच्छेदकावच्छिन्न-प्रकारकं ज्ञानं तदवच्छिन्न-सामानाधिकरण्यस्य विवक्षितत्वात्, विवेचयिष्यते चेदमुपरिष्टात्। महाकालान्यत्वविशिष्ट-घटत्वस्य ईश्वरज्ञानान्यत्वविशिष्ट-घटत्वस्य च तत्रावच्छेदकत्वादिति कश्चित्। ननु तच्छून्यधर्म्मपर्य्याप्तिवृत्तिकत्वं वाच्यम्। सत्ता-द्रव्यत्वोभयत्वञ्च न सत्तापर्य्याप्तिवृत्तिकमत आह "गुणान्ये' ति।

दीधितिः।

"प्रमेयत्वादे"रिति। ननु व्यतिरेकित्वेन धर्म्मी विशेषणीयः। वस्तुतस्तु यावत्पदं तादृशस्य कस्यापि (१) न वैयधिकरण्यावच्छेदकमेतावन्मात्र-स्फोरणाय, तथाच साधन-समानाधिकरण-धर्म्मनिरूपित-वैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्न-धर्म्मवता यावत्तादृशावच्छेदकत्व-

(१) कस्यापि तादृशस्य इति हस्तलिखित पुस्तके।

शून्यधर्म्मता वा समं सामानाधिकरण्यमिति पर्य्यवसितं, अतो दोषान्तरमाह "महानसादा"विति। तथाच तदनधिकरणत्वं तदभावाधिकरणत्वं तद्भिन्नत्वं वा द्वयमपि दुष्टमित्यर्थः ।

---

दीधिति-प्रकाशः ।

व्यतिरेकित्वं अन्योन्याभाव-प्रतियोगितावच्छेदकत्वं तच्च नाकाशाभावे, व्यतिरेकि यावद्धर्म्माधिकरणाप्रसिद्धा (१) तदनधिकरणमप्रसिद्धं, प्रातिस्विकरूपेण धर्म्मस्योपादाने चावच्छेदकस्यैव तथोपादानमुचितं किं व्यतिरेकित्व-विशेषणेनेत्याह "वस्तुतस्त्वि" ति। "तादृशस्ये"ति। एवञ्च यावत्पदं तत्तद्धर्म्म-वैयधिकरण्यावच्छेदकं यद्यत्तत्तद्भेदकूटस्य बोधनाय। ननु धूम-समानाधिकरण-पर्व्वतत्वादि-वैयधिकरण्यावच्छेदक-महानसीय-वह्नित्वाद्यभिन्नतया वह्नित्वादेर्न तादृशावच्छेदक-भेद-कूटवत्त्वमत आह "यावत्तादृशे"ति। तथाच तादृशावच्छेदकत्वस्य महानसीयत्वविशिष्टवह्नित्वे पर्य्याप्तत्वेऽपि शुद्धवह्नित्वे तदभावः प्रतीति-बलादभ्युपेयत इति भावः। यद्यप्यवच्छेदकत्वस्य व्यासज्यवृत्तित्वे तदवच्छिन्नभेदोपि शुद्धवह्नित्वे सम्भवति, एको न द्वाविति वत्, तथापि तदनभ्युपगमेनेदम्। "तथाचे"ति, इत्यञ्च साधन-समानाधिकरणो धर्म्मो वह्निरेवेति ध्येयम् ।

---

(१) यावद्धर्म्माभावाधिकरणाप्रसिद्धा इति ख पुस्तके ।

दीधितिः ।

एतेन तदधिकरणावृत्तित्वमत्र वैयधिकरण्यमिति निरस्तं, समवायितया महानसवृत्तित्वं वह्नौ नास्तीति प्रतीतेर्वह्न्यादेरपि तादृशवैयधिकरण्याधिकरणत्वात्, सम्बन्धविशेषेण वैयधिकरण्य-विवक्षायान्तु नोक्तदोष इति ध्येयम् ।

दीधितिप्रकाशः ।

मूलस्य न्यूनतां परिहर्त्तुं तदधिकरणावृत्तित्वरूपमपि वैयधिकरण्यं दूषयति "एतेने"ति । "सम्बन्धविशेषेणे"ति, एतत्तत्त्वं प्रागेव निरूपितम् ।

तत्त्वचिन्तामणिः ।

अथानौपाधिकः सम्बन्धो व्याप्तिः, उपाधिश्च साध्य-व्यापकत्वे सति साधनाव्यापकः, व्यापकत्वन्तु तन्निष्ठात्यन्ताभावाप्रतियोगित्वम्। व्यभिचारे चावश्य-मुपाधिः । प्रतियोगित्वं न विरोधित्वं सहानवस्थान-नियमलक्षणं, गोत्वाश्वत्वयोरतथात्वात् अन्योन्याभाव-प्रतियोगिन्यसत्त्वाच्च, किन्तु यथाधिकरणाभावयोः स्वरूपविशेषः सम्बन्धस्तथा प्रतियोगित्वमनुयोगित्वमपि,

अभावविरहात्मत्वं वेति चेत् यत्किञ्चित्साध्य-व्यापक-साधनाव्यापकधर्म्म-निषेधो न धूमादौ, प्रकृतसाध्य-व्यापकसाधनाव्यापकधर्म्मस्य सिद्ध्यसिद्धिभ्यां न निषेद्धुं शक्यः, यावत्साध्य-व्यापके प्रमेयत्वादौ साधनाव्याप-कत्वं यावत्साधनाव्यापके च घटत्वादौ साध्य-व्यापकत्वं निषिध्यते इति चेन्न व्यधिकरणत्वात् । यावत्साधना-व्यापकमव्यापकं यत्साध्यस्य, यावत्साध्य-व्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न सोपाधेरपि तथात्वात् तथाहि साधनस्य वह्नेरव्यापकं यावदार्द्रेन्धनन्तत्प्रत्येक-मव्यापकं साध्य-धूमस्य, द्वितीये साध्य-धूमस्य व्यापक-मार्द्रेन्धनं तद्व्यापकं महानसीय-वह्नेः । नापि साध्यं यावद्व्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वं, साध्या-व्यभिचारित्वस्यैव गमकत्व-सम्भवात्, तच्च दूषितम् ।

---

दीधितिः ।

उपाधिपदस्य साध्य-समव्याप्त-वचनतया आत्मा-श्रय-प्रसङ्गादाह "साध्य-व्यापके"ति । व्यापकत्वं व्याप्ति-निरूपकत्वं आत्माश्रयादि-ग्रस्तमत आह "तद्वन्निष्ठे"ति । यद्वोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्य-

वृत्तिरखण्डश्चान्ततस्तद्वद्भिन्नत्व--प्रकारक--प्रमाविषयत्वा-भावादि-रेवास्ति। यदि च तस्यापि विशेषणान्तर-विशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभाव-सम्भवस्तदा साध्य-समानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेद-कीभूत-साधन--समानाधिकरणात्यन्ताभाव--प्रतियोगि-तावच्छेदक-धर्म्मवत्त्वं दलद्वयार्थौ बोध्यः।

दीधिति-प्रकाशः।

"आत्माश्रये"ति, साध्य-निरूपित-व्याप्तेः साध्यादि-निष्ठाया: प्रवेशादात्माश्रयः*। "आत्माश्रयादौ"ति, धूमवान् वह्नेरित्यादौ† धूम-निरूपित-धूमनिष्ठ-व्याप्तेरपि लक्ष्यतया धूमनिष्ठ-व्याप्ति-निरू-पकत्वस्य धूम-निष्ठस्यापि प्रवेशादात्माश्रयः, धूमसामग्र्यादि-निष्ठस्य प्रवेशेत्वन्योन्याश्रयः। धूमसामान्यादिनिष्ठस्य धूमव्याप्तिनिरू-पकत्वस्यापि धूमसामग्रीव्यापकत्व-घटितोपाधि-घटितत्वात्, तत्र च धूम-निष्ठस्य धूमसामग्री-निष्ठ-व्याप्ति-निरूपकत्वस्य घटकत्वा-दिति। ननु यत्रोपाधिरव्याप्य-वृत्तिर्नानाव्यक्तिको वा तत्रोपाधि-लक्षणा-सत्त्वादनौपाधिकत्व लक्षणातिव्याप्तिरत आह "यत्रे"ति।

* साध्य-समव्याप्ताव्याप्यत्वं साधने, इत्यर्थलाभेन धूमस्यापि धूम-समव्याप्यत्वात् तद्व्याप्यत्व घटितव्याप्तौ धूमनिष्ठ-धूमनिरूपितव्याप्तेरपि निवेशादिति भावः।

† अत्रापि साध्य-व्यापकाव्याप्यत्वं साधने, इत्यर्थ-लाभेन धूमस्यापि धूमव्याप-कत्वात् तद्व्याप्यत्व-घटितव्याप्तौ धूमनिष्ठ-धूमनिरूपितव्याप्तेरपि निवेशादिति भावः।

इदमेतद्वाच्यत्ववत् द्रव्यत्वादित्यत्रैतत्कपि-संयोगोऽव्याप्यवृत्तिरुपाधिः, धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादि-र्नानाव्यक्तिकोपाधिः । "अन्तत" इति, व्यभिचार-निरूपकाधिकरण-तत्तद्व्यक्ति-भिन्नत्वस्यैवाखण्डस्य सर्व्वत्र सम्भवादिति भावः * । "तद्व"दिति, तत्पदेनाव्याप्यवृत्तिर्नानाव्यक्तिकोपाधिश्च संगृह्यते। तच्च तत्र तत्कपि-संयोगवद्भिन्नत्वप्रकारक-प्रमाविशेष्यत्वाभाव आर्द्रेन्धनवद्भिन्नत्व-प्रकारक प्रमाविशेष्यत्वाभावश्चाखण्डो व्याप्यवृत्तिरेक (१) उपाधि-रित्यर्थः । तद्वद्भिन्नत्वाभावस्य तदभिन्नत्वात् तत्प्रकारक-प्रमा-विशेष्यत्वस्य च विशेष्य-भेदेन भिन्नत्वात् † गुरुतरानुसरणम् । "तस्यापि" अखण्डस्यापि, विशिष्टस्यातिरिक्तत्वे विशिष्टाभावस्य सम्बन्धाभावात्मकत्वे वा विशेष्यस्य न तत्प्रतियोगित्व-मत आह "द्वित्वाद्यवच्छिन्नस्य वे"ति, "सम्भव" इति, द्वित्वावच्छिन्नाभाव-स्यातिरिक्तस्य केश्चिदनभ्युपगमात् क्रमाभावस्यैव तादृशप्रतीति-विषयत्वाभ्युपगमादिति । "साध्यसमानाधिकरणे"ति, अत्र तादृश-प्रतियोगितानवच्छेदकत्वं यद्रूपेण तद्रूपेणैव तादृश-प्रतियोगिताव-च्छेदकत्वं वाच्यं, तेन सद्धेतौ गुरुस्येन्धनत्वस्य वह्निसमानाधिकरणा-भाव-प्रतियोगितानवच्छेदकस्य महानसीयत्व-विशिष्टस्य तस्य धूम-

---

* व्यभिचाराधिकरण-तद्व्यक्तिभेदस्य नूपाधित्वेनानानव्याव्याप्योपाधित्वे-नाभिमतोऽथवाद्भिन्नत्व-प्रकारक-प्रमाविशेष्यत्वाभाव एवोपाधिः सुलभः इति "अन्ततः" पदेन सूचितमिति तत्त्वम् ।

† तथाच तस्य तादृशाभाव-प्रतियोगित्वात्तथैव दोष इति भावः ।

(१) वाच्यएवव्याप्यवृत्तिरेक इति च पुस्तके ।

समानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वेऽपि न क्षतिः। प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वादिकं पश्चाद्वक्ष्यति।

---

दीधितिः।

अनवस्थान्निरसितुमाह "प्रतियोगित्व"मिति। "सह"ेति एक-देश-कालावच्छेदेनेति पूरणीयम्। तेन नाव्याप्यवृत्तेरभावस्य प्रागभावादेश्च प्रतियोगिताया मव्याप्तिः। "अन्योन्ये"ति, अत्र समवायादि-सम्बन्धावच्छिन्न-प्रतियोगिताकाभाववति महानसादौ संयोगादिना वह्न्यादेर्वृत्तेर्येन सम्बन्धेनाभावस्तद्वति तेनावृत्तिर्वक्तव्या, इत्यस्य तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोषः। अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनोऽसम्बद्धत्वात्, परन्तु समवायेन सत्ताया अभावस्य प्रतियोगितायामव्याप्तिः, तद्वति समवायेन वृत्तेरप्रसिद्धेः, तादृशस्व-सम्बन्धाधिकरणावृत्ति-तत्कत्वाभिधाने च व्यधिकरण--सम्बन्धावच्छिन्नाभाव--प्रतियोगितायामव्याप्तिः, सिद्धान्तलक्षण-वक्ष्यमाणरीत्या च खण्डशः प्रसिद्ध्या तत्परिहारोऽपीति ध्येयम्।

दीधिति-प्रकाशः।

"अनवस्था"मिति, विरोधित्वस्य परस्पराभाव-व्याप्यत्वरूपस्य* प्रवेशे तद्व्याप्तेरपि (१) विरोधित्वरूप-प्रतियोगित्व-घटकतया (२) व्याप्यन्तराणां प्रवेशादनवस्थेत्यर्थः। निरुक्तसत्तानवस्थायित्वे तदधिकरणावृत्तित्वरूपे व्याप्तेरप्रवेशादनवस्थाया अभावेऽपि दोषान्तरमेव तत्रेति ध्येयम्। "अव्याप्यवृत्ते"रिति, अत्रैकदेशो नावच्छेदकः। "प्रागभावादे"रिति, अत्रैककालो नावच्छेदकः †। "येन सम्बन्धेने"ति, तत्सम्बन्धावच्छिन्न-प्रतियोगिताकाभाववति तेन सम्बन्धेन प्रतियोगिनोऽवृत्तित्वं वक्तव्यमित्यर्थः। तथापि तादात्म्येन वृत्तित्वस्याधेयत्वरूपस्याप्रसिद्ध्या कथमन्योन्याभाव-प्रतियोगि-साधारण्यमत आह "इत्यस्य"ेति, सम्बन्धभेद-विवक्षणे चेत्यर्थः। "नायं दोषः" नाव्याप्तिः। "तद्वति" समवाय-सम्बन्धावच्छिन्न-सत्ताभाववति सामान्यादौ। "तादृशे"ति,

---

* सत्तानवस्थानियमलक्षणस्येत्यर्थः।

† इत्थञ्च स्वाभावावच्छेदक-देशावच्छिन्न स्वाभावाधिकरण-वृत्तित्व-स्वाभावावच्छेदककालावच्छिन्न-स्वाभावाधिकरण-वृत्तित्वोभयाभाववत्त्वं प्रतियोगित्वम्। न च व्याप्यवृत्तिकाभावस्थले अवच्छेदका-प्रसिद्ध्या तत्प्रतियोगितायामव्याप्तिरिति वाच्यम्। स्वाभावानवच्छेदकदेशानवच्छिन्न स्वाभावाधिकरण वृत्तित्व स्वाभावानवच्छेदककालानवच्छिन्न-स्वाभावाधिकरण-वृत्तित्वोभयाभाववत्त्वस्य विवक्षितत्वात्। स्वाभावानवच्छेदकत्वञ्चावच्छेदकता-सम्बन्धेन स्वाभाववत्त्वं, तेन व्याप्यवृत्तिकाभावस्थले नावच्छेदकाप्रसिद्धि-निबन्धनो दोषः। प्रागभाव-प्रतियोगिनि स्वाभावानवच्छेदककालावच्छेदेन स्वाभावाधिकरण-कपालवृत्तित्वसत्त्वादुभयाभाववत्त्वमेवमव्याप्तीति बोध्यम्।

(१) तद्व्याप्तावपि इति च पुस्तके। (२) घटक इति च पुस्तके।

प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोगि-सम्बद्धं यदधिकरणं तदवृत्त्यभावकत्वमित्यर्थः। प्रकृते च तादृश-प्रतियोगि-सम्बद्धमधिकरणं सत्तावदेव तत्र सत्त्वाभावस्यावृत्तित्वान्नाव्याप्तिरिति भावः। यद्यपीत्यमपि सत्ताभाव-निष्ठे सत्तारूपाभाव-प्रतियोगित्वेऽव्याप्तिस्तत्र तादृश-प्रतियोगि-सम्बद्धं यदधिकरणं सत्ताभाव-वदेव (१) तत्र तादृशाभाववत्ता-नियामक-समवायेन वृत्तेरप्रसिद्धेस्तथापि सप्तम-पदार्थ-रूपाभाव-प्रतियोगित्वमेव लक्ष्यमिति यदि ब्रूयात् तदा नोक्ताव्याप्तिर्घटत इति दोषान्तरमाह "व्यधिकरणे"ति। संयोगेन जात्यभावादौ संयोगेन जातिसम्बद्धाधिकरणाप्रसिद्धेरव्याप्तिरित्यर्थः। "खण्डश" इति, यत्प्रतियोगितावच्छेदक-सम्बन्ध-सामान्ये यत्प्रतियोगिकत्व-तत्तद्देशकालाद्यवच्छिन्न-यदभावाधिकरणानुयोगिकत्वोभयाभावस्तस्य तदभाव-प्रतियोगित्वत्। संयोग-सम्बन्ध-सामान्ये च जाति-प्रतियोगिकत्व-जात्यभाववदनुयोगिकत्वोभयाभावसत्त्वान्न-तत्प्रतियोगित्वेऽव्याप्तिरिति। "तत्परिहार" इति। तस्य उक्तदोषस्याव्याप्तेः परिहारः। आकाशादौ घटाद्यभाव-प्रतियोगित्वस्य * वारणाय-स्वाभावाधिकरणानुयोगिकत्वेत्य-

---

* यत्प्रतियोगितावच्छेदकसम्बन्धसामान्ये यत्प्रतियोगिकत्वाभाव इत्युक्तौ घटाभाव-प्रतियोगितावच्छेदक-संयोगसम्बन्धसामान्ये गगन-प्रतियोगिकत्वाभावात्त्वस्यापि घटाभाव-प्रतियोगित्व-प्रसक्तोऽतत्परमदलमावश्यकम्। तस्यार्थविवेचनेन दोषमाह "आकाशादा"वित्यादि। चरमदलदाने तु प्रथमद्वितीय दलदाभ्यामेव व्याप्तिरेव व्यद्युते, तथाच प्रकृते गगनस्य न घटाभाव-प्रतियोगित्वं, किन्तु स्वाभावस्यैवेति ध्येयम्।

(१) सत्त्वाभाववदेवेत्यत्र सामान्यादौति पाठः ख पुस्तके।

स्वावच्छेदोपादाने स्वस्याभाव इत्यत्रैवमुभयाभाव इत्यत्र षष्ठ्यर्थस्य प्रतियोगित्वस्यापि निरुक्तिरपिना सूचिता *।

दीधितिः।

"अभावविरहात्मत्व"मिति। न चान्योन्याभाव-प्रतियोगि-तत्त्वावच्छेदकयोरप्रसक्त्यतिप्रसक्ती; प्रकृतोपयोगि-प्रतियोगितामात्रस्य लक्ष्यत्वे तु लक्षणे अत्यन्ताभावपद-वैयर्थ्यं, सर्व्वत्र नित्यस्य नित्यसाधारण-रूपावच्छिन्नस्य वा उपाधिता-सम्भवात्, इतरथा तु भेदप्रतियोगिता-वारणाय संसर्गाभाव-परतया तस्य सार्थकत्वादिति वाच्यम्। विरहपदस्य तज्ज्ञान-प्रतिबन्धक-ज्ञान-विषयार्थकत्वात्। प्रतिबध्नाति हि तादात्म्येन प्रतियोगि-ज्ञानमन्योन्याभाव-बुद्धिं, प्रतिबन्धकत्वञ्चात्रैक-कालावच्छेदेन एकत्रावर्त्तमानत्वं अभावपदस्य च स्वाभाव-परत्वात्।

दीधिति-प्रकाशः।

"अप्रसक्तिः", अन्योन्याभाव-प्रतियोगिनि, तस्यान्योन्याभाव-विरहत्वाभावात्। "अतिप्रसक्तिः" तत्त्वावच्छेदके † तस्यैवान्यो-

* तत्प्रतियोगित्वञ्च स्वरूप सम्बन्धविशेष इति भावः।

† अन्योन्याभाव-प्रतियोगितावच्छेदके इत्यर्थः।

सम्बन्ध विवक्षणेत्वत्यन्तपदानुपादानस्य "वस्तुतस्त्वि"त्यादिना स्वय-मेव वाच्यत्वात्। एवं तत्परमाणुवृत्तित्वादिनापि नोपाधित्वं * सम्बन्ध-सामान्येन परमाणुवृत्तित्वस्य अन्यत्ववद्द्व्यणुकनिष्ठभेद-प्रतियोगितावच्छेदकत्वात्, स्वरूपसम्बन्धेन परमाणुवृत्तिरूपादेः परमाणावपि सत्त्वेन साधन-व्यापकत्वादिति।

केचित्तु घटाभावान्यत्ववान् मेयत्वादित्यादौ व्यभिचार-निरू-पकाधिकरणस्य घटाभावस्य यदन्यत्वं तदवच्छिन्नभेदस्य घटा-भावात्मकतया घटाभावान्यत्वस्य घटाभावान्यत्वसमानाधिकरण-घटाभाव-प्रतियोगितावच्छेदकत्वात् घटाभावान्यो नोपाधिः, घटा-भावत्वप्रकारक-प्रमाविशेष्यत्वाभावस्य च साध्यवन्निष्ठभेद-प्रति-योगितावच्छेदकत्वेन तदाश्रयस्यानुपाधितापत्त्या अत्यन्तपदस्य संसर्गाभावपरतया सार्थकत्वमित्याहुः।

अन्योन्याभाव-प्रतियोगिन्यव्याप्तिं निरस्यति "प्रतिबध्नाति ह्री"ति. प्रतिबन्धकत्व कारणीभूताभावप्रतियोगित्वं चेत्तदात्मा-श्रय इत्यत आह "प्रतिबन्धकत्वञ्चे"ति। "अत्र" प्रति-योगिता लक्षणे। प्रतियोगिज्ञान-तदभावज्ञानयोर्भिन्नकालावच्छे-देनैकत्रात्मनि वृत्ते"रेककालावच्छेदेने"ति। एक-शरीरावच्छेदेने-त्यपि बोध्यम्। तेन कायव्यूह-दशायां भिन्नशरीरावच्छेदेनैकत्रात्मनि

* परमाणुवृत्तित्वं सम्बन्धसामान्येन यत्किञ्चित् सम्बन्धेन वा आद्ये साध्या-व्यापकत्वमाह "सम्बन्धसामान्येने"त्यादि, द्वितीये साधनव्यापकत्वमाह स्वरूप-सम्बन्धेने त्यादि इति।

एकज्ञानावच्छेदेन तयोर्वृत्तावपि न दोषः। अन्योन्याभावबुद्धिं प्रति प्रतियोगितावच्छेदकज्ञानस्यापि प्रतिबन्धकत्वात् तथाति-व्याप्तिं निरस्यति "अभावपदस्ये"ति, घटान्योन्याभावस्तु न घट-त्वस्याभाव इति न तत्रातिव्याप्तिरिति भावः।

दीधितिः।

वस्तुतस्त्वेक-सम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभाव-प्रतियोगिताया अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायास्तस्या अवच्छेदकमतो यत्-सम्बन्धावच्छिन्नायाः साध्य-समानाधिकरणाभाव-प्रति-योगिताया अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव साधन-समानाधिकरणाभाव-प्रतियोगिताया अवच्छे-दकं तद्वाच्यम्। तथाच संसर्गाभावत्वमनुपादेयमेव। वा शब्दोऽत्रास्वरस-सूचनाय। स च व्यधिकरण-सम्ब-न्धेन सर्व्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात्। स्वाभाव-सम्बन्धित्वस्य स्वाभावज्ञान-विषयत्वस्य वा लघोः सर्व्वत्र सम्भवितत्वात् स्वाभावेत्यादौ षष्ठ्यर्थ-प्रति-योगितायाः प्रवेशात्, तत्र स्वरूप-सम्बन्धस्य शरणी-करणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च।

अभावत्व-प्रतिबन्धकत्वयोः प्रतियोगिता-घटितत्वात्, तथाविध-व्यवहार-गोचरस्यापि विना प्रतियोगितां निर्व्वक्तुमशक्यत्वाच्च।

"यत्साध्यस्य" यत्समानाधिकरण-साध्यस्य। "तथा-हौ"त्यादि, यत्समानाधिकरणात्यन्ताभाव-प्रतियोगिता-वच्छेदकं यावत्साध्य-समानाधिकरणात्यन्ताभाव-प्रति-योगितावच्छेदकं साध्य-समानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणा-त्यन्ताभाव-प्रतियोगितानवच्छेदकं तत्त्वमित्यर्थे तु नोक्तदोष इति ध्येयम्। प्रतियोगितयोश्चैकसम्बन्धा-वच्छिन्नत्वं विशेषणताविशेषावच्छिन्नत्वं वा वक्तव्यम्। तेन प्रतियोगितावच्छेदकमात्रस्यैव यत्किञ्चित्सम्बन्धा-वच्छिन्न-साध्यसमानाधिकरणात्यन्ताभाव-प्रतियोगिता-वच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्न-साध्यसमानाधि-करणात्यन्ताभाव-प्रतियोगितानवच्छेदकस्य सम्बन्धा-न्तरावच्छिन्न-साधनसमानाधिकरणाभाव-प्रतियोगिता-वच्छेदकत्वेऽपि च न क्षतिः। व्यभिचारिणि तु यत्राधि-करणे व्यभिचारो विशेषणताविशेषावच्छिन्न-तन्निष्ठा-भाव-प्रतियोगितावच्छेदकं साध्यवत्त्व-प्रकारक-प्रमा-

विषयत्वत्वं विशेषणता-विशेषावच्छिन्न-साध्यसमानाधि-करणाभाव-प्रतियोगितानवच्छेदकमिति नातिप्रसङ्गः।

दीधिति-प्रकाशः।

वक्ष्यमाणास्वरसादाह "वस्तुतस्त्वि"ति। "एकसम्बन्धे"ति, तथाच यत्किञ्चित्सम्बन्धाविशेषित-प्रतियोगितानवच्छेदकत्व घटित-व्यापकत्वस्याप्रसिद्धा व्यापकत्वदले यत्किञ्चित्सम्बन्धावच्छिन्नत्वस्य प्रतियोगितायां विवक्षणे अव्यापकत्वदले च तदविवक्षणे वह्निमान् धूमादित्यादौ नानौपाधिकत्वं स्यात्। तत्र समवायावच्छिन्न-वह्नि समानाधिकरणाभाव प्रतियोगितानवच्छेदकीभूतस्यापि द्रव्य-त्वत्वादेः संयोगावच्छिन्न-धूमसमानाधिकरणाभाव-प्रतियोगिताव-च्छेदकत्वात्, द्रव्यत्वस्योपाधित्व-सम्भवात्। न च प्रतियोगिता सामान्यानवच्छेदकत्व-घटितमेव व्यापकत्वं वाच्यम् (१) धूमवान् वह्नेरित्यादावयोगोलकभेदत्वमेव धूमवन्निष्ठाभाव-प्रतियोगिता-सामान्यानवच्छेदकं, संयोगावच्छिन्नाभाव प्रतियोगितायामयो-गोलकभेदत्वस्य गुरुतया भेदत्वस्यैवावच्छेदकत्वादिति वाच्यम्। जन्यमात्रस्यैव कालोपाधितयाऽयोगोलकभेदानधिकरणदेशा-वच्छेदेन कालिकसम्बन्धावच्छिन्न-प्रतियोगिताकायोगोलक-भेदा-भावस्यापि धूमवन्निष्ठतया-ऽयोगोलकभेदत्वस्य तादृशाभाव प्रति-योगितावच्छेदकत्वात्। एवं पृथिवी रूपादित्यादौ व्यभिचारा-

(१) वाच्यमिति नास्ति च पुस्तके।

धिकरण-जल-भेदादीनां कालिकसम्बन्धावच्छिन्नाभावस्य पार्थिव-परमाणौ सत्त्वादुपाधेरप्रसिद्धिरित्यादिकमूह्यम्। "तत्सम्बन्धा-वच्छिन्नाया एवे"ति। वह्निमान् धूमादित्यादौ तु द्रव्यत्वे नातिप्रसङ्गः, (१) तत्र समवायावच्छिन्नधूमवन्निष्ठाभाव-प्रति-योगितावच्छेदकत्वस्य द्रव्यत्वेऽभावादिति भावः। "तद्वाच्यं" उपाधित्वं वाच्यम्। "तथाचे"ति, इत्थं विवक्षणे अन्योन्याभाव-मादाय दोषाभावादिति(२)। "स च" अस्तरसत्व। "व्यधि-करणसम्बन्धेने"ति, यद्यपि समानाधिकरण-सम्बन्धावच्छिन्ना-भाव-स्थलेऽपि सर्व्वत्राभाववति तेनैव सम्बन्धेन प्रतियोगिनो भ्रमे मानाभाव इति व्यधिकरण-सम्बन्धानुसरणमफलमिति तथापि तेन सम्बन्धेन प्रतियोगिमत्ताज्ञानं यत्र * तत्र तत्कालाव-च्छेदेन तदात्मीय-तदभाववत्ताज्ञानाभाव इत्युक्तौ नाप्रसिद्धिः सम्भवतीति तत्पर्य्यन्तानुधावनमिति। अत्र सर्व्वत्र पञ्चम्यन्तानि "सचे"त्यत्र हेतुत्वेनान्वीयन्ते (३)। स्वाभावज्ञान प्रतिबन्धक-ज्ञानविषयत्वमित्यत्र गौरवमत आह "स्वाभाव सम्बन्धित्वस्ये"ति, सम्बन्धत्वस्य नियम-(४)घटितत्वेन (५) अनौपाधिकत्वलक्षणे (६)

---

* विशेष्यतासम्बन्धेनेति भावः।

(१) द्रव्यत्वे न प्रसङ्ग इति च पुस्तके।

(२) दोषार्थस्पर्शादिति इति च पुस्तके।

(३) पञ्चम्यन्तं सचेत्यनेनान्वयि इति च पुस्तके।

(४) व्याप्ति इति च पुस्तके।

(५) घटकत्वेन इति च पुस्तके।

(६) व्याप्तिलक्षणे इति च पुस्तके।

अनवस्था गौरवञ्चेत्यत आह "स्वाभाव*ज्ञानविषयत्वे"ति । उभयत्रैव प्रतियोगित्वस्य (१) प्रतियोगि-निष्ठत्वं सम्पादयितुं विशेष्यानुसरणम् । ननु तदेवास्तु प्रतियोगित्वं अतस्तदपि (२) दूषयति "स्वाभावेत्यादा"विति । "तत्र" षष्ठ्यर्थे । "तथात्वौचित्यात्" प्रतियोगित्वौचित्यात् । प्रकारान्तरेणापि प्रतियोगितायाः प्रवेशं दर्शयति "अभावत्वे"ति, अभावत्वं द्रव्यादि-षट्कान्योन्याभाववत्त्वं, प्रतिबन्धकत्वं एककालावच्छेदेनैकत्र वर्त्तमानत्व-प्रतियोगिताकोऽभावः । तत्र प्रतियोगिता-निर्व्वचनानुयोगस्तदवस्थः । "तथाविधे"ति, अभावत्वादि प्रकारकेत्यर्थः । "विने"ति, तत्राप्यभावत्वस्य प्रवेशात् तस्य च प्रतियोगित्वाघटितस्य दुर्व्वचत्वात् इति भावः ।

"यत्साध्यस्ये"त्यत्र मूले कर्म्मधारय-भ्रमे व्याप्तेर्हेतु-वृत्तित्वालाभोऽतः षष्ठी-समासाभिप्रायेणाह "यत्समानाधिकरणे"ति । यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य तत्त्वं, यावत्साध्य-व्यापकं व्यापकं वा यस्य साधनस्य तत्त्वमित्यनौपाधिकत्वद्वयं क्रमेण परिष्करोति "यत्समानाधिकरणात्यन्ताभावे"ति । धूमवान् वह्नेरित्यत्र तादृश-प्रतियोगितावच्छेदकस्य घटत्वादेर्धूम-समानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वादाह"याव"दिति । एवं तत्रैव धूमसमानाधिकरणाभाव-प्रतियोगितानवच्छेदकस्यापि द्रव्यत्वादेर्वह्नि-समानाधिकरणाभाव-प्रतियोगितानवच्छेदकत्वादुक्तयापि "याव"-

*स्वाभावेत्यत्र स्वपदमभावपरम् स्वाभावसम्बन्धज्ञानेत्यत्र च प्रतियोगिपरमिति ।

(१) प्रतियोगित्वस्येति नास्ति घ पुस्तके ।

(२) तदेवेति घ पुस्तके ।

दिति। "नोन्नादोषः" न मूलोन्नादोषः। एक-सम्बन्धस्य तत्त-त्सम्बन्ध-पर्य्यवसानेनाननुगमात्, तत्र च विशेषणताविशेषस्यापि(१) निवेशे तस्यैव विशिष्य (२) प्रवेशौचित्यात् (३) आह "विशेषणे"ति। प्रथमे सम्बन्धविशेषाप्रवेशे (४) दूषणमाह "प्रतियोगितावच्छेदकमात्रस्यैवे"ति। मात्रपदं कृत्स्नार्थकं, तथाच हेतु-समानाधिकरणाभाव-प्रतियोगितावच्छेदकस्य सुतरां तथात्वमिति, धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः। * धूमवान् वह्ने-रित्यादावयोगोलक-भेदत्वादीनां यथा साध्य समानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वं तथा प्रागेव दर्शितम्। न चेयं जातिर्मेय-त्वादित्यत्र तादात्म्येन जातेः साध्यतायां व्यभिचारिणि मेयत्ववन्निष्ठ-भेद-प्रतियोगितावच्छेदकस्य जातित्वस्य केनापि सम्बन्धेन साध्य-वन्निष्ठाभाव प्रतियोगितावच्छेदकत्वाभावात् कथमेवं नियमः † समवायाद्यवच्छिन्न-जात्यभाव-प्रतियोगितायां नित्यत्वादेर्वैयर्थ्येन समवेतत्वस्यैवावच्छेदकत्वादिति ‡ वाच्यम्। विशिष्यतासम्बन्धेन

* ननु वह्नि-समानाधिकरणाभाव-प्रतियोगितावच्छेदकमयोगोलकभेदत्वं तत्तु न धूमवन्निष्ठाभाव प्रतियोगितावच्छेदकं, संयोगसम्बन्धावच्छिन्न-प्रतियोगितायाश्च भेदत्वमेवावच्छेदकं न त्वयोगोलकभेदत्वं गुरुत्वादिति कथमतिव्याप्तिरित्यत आह धूमवानित्यादि।

† तथाच दीधितिकृतां प्रतियोगितावच्छेदकमात्रस्यैवेत्यादिनियमनमसङ्गत-मिति भावः।

‡ जात्यभावसमवेताभावयोः समनैयत्येनेति भावः।

(१) विशेषस्यैव इति घ पुस्तके।

(२) विशिष्य इति नास्ति घ पुस्तके।

(३) निवेशस्यौचित्यात् इति घ पुस्तके।

(४) विशेषाविवक्षणे इति घ पुस्तके।

जातेरभावस्य नित्यगुणादिविशेष्यक-ज्ञानेऽपि सत्त्वेन(१)तत्र नित्यानेकसमवेतत्व-रूपजातित्वस्यैव प्रतियोगितावच्छेदकत्वात् तदभावस्य साध्यवत्यपि सत्त्वादिति । "साध्यसमानाधिकरणे"त्यत्र साध्यपदं धूमादि-रूप-साध्य परमित्यपि कश्चित् । द्वितीय-लक्षणे सम्बन्ध-विवक्षायाः फलमाह "एकसम्बन्धे"ति, सामान्यतस्तादृशाभाव-प्रतियोगितानवच्छेदकत्वेऽप्रसिद्धिरित्यतो * यत्किञ्चित्सम्बन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेश आवश्यकस्तथाचाव्याप्तिः, सम्बन्धैक्य विवक्षणे तु नायं दोष इति स्फोटयितुं एकसम्बन्धावच्छिन्नत्वेन प्रतियोगिता निर्दिष्टा । उक्तविवक्षणे लक्षणद्वय स्यैवातिप्रसङ्गाभावं (२) दर्शयति "व्यभिचारिणि त्वि"ति । "विशेषणते"ति, विशेषणताविशेषस्यात्र प्रमा-विषयत्वीयो ध्रुतः ।

दीधितिः ।

वस्तुतो(३) हेतु(४) समानाधिकरणान्योन्याभाव-प्रतियोगितावच्छेदकं यावत् यद्धर्मावच्छिन्न-समानाधिकरणान्योन्याभाव-प्रतियोगितावच्छेदकं तद्धर्मावच्छिन्न-सामानाधिकरण्यं, साध्य-समानाधिकरणान्योन्याभाव-

* सम्बन्धसामान्येन तादृशाभाव-प्रतियोगितावच्छेदकत्व-प्रतियोग्यप्रसिद्ध्याऽप्रसिद्धिरिति भावः ।

(१) सत्त्वादिति च पुस्तके ।

(२) द्वयस्यातिप्रसङ्गमिति च पुस्तके ।

(३) वस्तुतस्तु इति हस्तलिखित पुस्तके ।

(४) हेतु इत्यत्र वह्निति पाठः प्रकाश-तद्व्याख्यानद्वयानत इति प्रतिभाति ।

प्रतियोगितानवच्छेदकं यावत् स्व-(१)समानाधिकरण-ान्योन्याभाव-प्रतियोगितानवच्छेदकं तत्त्वं वा व्याप्ति-रिति ध्येयम्। "साध्य"मिति, यावतां तेषामित्यर्थः। दूषितं केवलान्वयिन्यव्याप्त्या, सा च यथोक्त-लक्षणेऽपि, गौरवं परमतिरिच्यत इति।

---

दीधिति-प्रकाशः।

सम्बन्धविशेषाप्रवेशे लाघवात् कल्पान्तरमाह "वस्तुत" इति। "य"दिति, यत्पदं हेतुपरम्। "यद्धर्मावच्छिन्ने"ति, साध्यताव-च्छेदकावच्छिन्नेत्यर्थः। अत्र धूमवान् वह्नेरित्यादौ वह्निमन्निष्ठ-भेद-प्रतियोगितावच्छेदकस्यायोगोलकान्यत्वस्य धूमवत्त्व प्रकारक-प्रमाविशेष्यत्वादेर्वा तद्वज्ज्ञानभेद-प्रतियोगितावच्छेदकत्वात् प्रति-योगितावच्छेदक-सम्बन्धाप्रवेशेऽपि अवच्छेदकताघटक-सम्बन्धैक्य-विवक्षणमावश्यकं, तथाच क्व लाघवम्? न चात्यन्ताभाव-घटित-लक्षणे प्रतियोगितावच्छेदकसम्बन्धैक्य-विवक्षणेऽपि अवच्छेद-कता-घटक-सम्बन्धैक्याविवक्षणे विशेषणताविशेष-सम्बन्धावच्छिन्न-वह्निमन्निष्ठाभाव-प्रतियोगितावच्छेदकस्यायोगोलकान्यत्वत्वादेर्वि-षयितया तद्वज्ज्ञानाभावस्य तादृशविशेषणताविशेषावच्छिन्नस्य प्रतियोगितावच्छेदकत्वादतिव्याप्तिः स्यादिति वाच्यम् अभावीय-विशेषणतया ज्ञानाभावस्य व्यधिकरण-सम्बन्धावच्छिन्न-प्रतियोगि-

---

(१) यदिति हस्तलिखित पुस्तके।

ताकाभावत्वेन केवलान्वयितया तत्प्रतियोगितायां लाघवान्नेदत्वादे-
रेव विषयितया ऽवच्छेदकत्वेनायोगोलक-भेदत्वस्य विशिष्टस्या-
नवच्छेदकतयाऽति-प्रसङ्गाभावेनावच्छेदकतायां सम्बन्धैक्यस्य तत्रा-
विरक्षणात्. तस्मात् वस्तुत इत्यादिपाठः काल्पनिकः। अतएव
प्राचीनपुस्तके उत्तोलित एव तिष्ठतीति बहवः।

यावत्त्वस्य साध्ये विशेषणता-भ्रमं तावदव्यभिचारी (१) त्यत्र
कर्मधारय-भ्रमस्य निराकर्त्तुमाह "यावतां तेषां इत्यादि, तथाच
साध्यं यावतामव्यभिचारि तेषामव्यभिचारित्वं व्याप्तिरित्यर्थः।
"दूषित"मित्यत्र हेतुं पूरयति "केवलान्वयिन्यव्याप्ते"रिति (२)।
ननु साध्याव्यभिचारित्वस्य तत्त्वे केवलान्वयिन्यव्याप्तिरेव दोष इति
प्रकृतलक्षणमेव सम्यगत आह "सा च यथोक्ते"ति (३)। केवला-
न्वयि-साध्यस्याव्यभिचरितस्याप्रसिद्धेरितिभावः।

तत्त्वचिन्तामणिः।

**नापि कार्त्स्न्येन सम्बन्धोव्याप्तिः; एक-व्यक्तिके तदभावात्, नानाव्यक्तिकेऽपि सकल-धूम-सम्बन्धस्य प्रत्येक वह्नावभावात्। अतएव न कार्त्स्न्येन साध्येन**

(१) तावदव्यभिचारीति न पुस्तके पाठधारणदर्शनात् "साध्यं यावदव्यभि-
चारि तावदव्यभिचारित्व"मिति मूलपाठः क्वचित् पुस्तके वर्त्तत इत्यनुमीयते।
तदव्यभिचारीति न पुस्तके पाठः।

(२) केवलान्वयिन्यव्याप्तेरिति पाठधारणदर्शनात् दीधितौ "केवलान्वयिन्य-
व्याप्ते"इत्यत्र केवलान्वयिन्यव्याप्तेरिति पाठो भवानन्दसम्मत इत्यनुमीयते।

(३) सा च प्रकृतेपीति न पुस्तके पाठधारणदर्शनात् दीधितौ "सा च यथोक्त-
लक्षणेऽपी"त्यत्र सा च प्रकृतेऽपि लक्षणे इति पाठः क्वचिदस्तीत्यनुमीयते।

सम्बन्धोव्याप्तिः, विषमव्याप्ते तदभावाच्च। नच यावत् साधनाश्रयाश्रित-साध्य-सम्बन्धः, साधनाश्रये महानसादौ सकले प्रत्येक-(१)वह्नेराश्रितत्वाभावात्। नापि साधन-समानाधिकरण-यावद्धर्म्म-समानाधिकरणसाध्य-सामानाधिकरण्यं, यावद्धर्म्म-सामानाधिकरण्यं हि यावत्तद्धर्म्माधिकरणाधिकरणत्वं, तच्चाप्रसिद्धं साधन-समानाधिकरण-सकल-महानसत्वाद्यधिकरणाप्रतीतेः।

दीधितिः।

"नापी"ति, (२) कार्त्स्न्यं साधनस्य साध्यस्य साध्याश्रयस्य साध्य सामानाधिकरण्यस्य साधनाश्रयस्य साधन-सामानाधिकरण्यस्य वा? आद्ये कृत्स्न-साधन-समानाधिकरण्यं साध्ये, कृत्स्नेषु साधनेषु साध्य-सामानाधिकरण्यं वाऽर्थः? प्रथमे "एके"ति "नाने"ति च। व्याप्तेश्चाहेतु-वृत्तित्वं, पृथिवी पृथिवीत्व-व्यापक-जातेरित्यादावतिव्याप्तिश्च, अतएव नेतरः। अर्थाभिधान-पूर्व्वकं द्वितीयं निरस्यति 'अत एवे'ति। "अतएव" एक-व्यक्ति-साध्यकाव्याप्तेरेव। विषमव्याप्ते समाव्याप्ते-

(१) प्रत्येकमिति क्वचित्पाठः।

(२) "नापीति" इति नास्ति सोसाइटी मुद्रित पुस्तके।

ऽपि च संख्या परिमाणादौ(१) एकत्र साधने सकल-साध्यसम्बन्धस्याभावात्, भावाच्च शब्दवान् द्रव्यत्वादित्यादौ । तृतीये साध्याश्रय-यावद्वृत्तित्वं, चतुर्थे साध्य-समानाधिकरण-यावत्सामानाधिकरण्यमर्थः, तत्र च यथासम्भवमेकमात्रवृत्ति--साध्यके, वह्न्यादौ साध्ये धूमादावव्याप्तिरतिव्याप्तिश्च सत्त्वादौ । अर्थ-परिष्कार-पूर्व्वकं पञ्चमं निरस्यति "नचे"ति । एकमात्र-वृत्तिसाधने चाव्याप्तिश्च तथैव । षष्ठं निरस्यति "नापी"ति, तादृशानां सर्व्वेषां महानसत्वादीनां प्रत्येक-निरूपितान्यपि सामानाधिकरण्यानि न कुत्रापि वह्नौ । अथ यद्धर्म्मावच्छिन्न--सामानाधिकरण्यत्वेन साधन--सामानाधिकरण्य-व्यापकत्वं तद्धर्म्मावलीढ़-सामानाधिकरण्यं विवक्षितमिति चेत् इतोऽपि लघु-तया साधन--व्यापकतावच्छेदक-रूपावच्छिन्न-सामानाधिकरण्यमेव व्याप्तिरिति सिद्धान्तयिष्यते ।

दीधिति-प्रकाशः ।

एतस्मिन् लक्षणे * कार्त्स्न्यस्य विशेषतः किञ्चिन्निष्ठत्वेनानु-

---

* कार्त्स्न्येन सम्बन्धो व्याप्तिरिति लक्षण इत्यर्थः ।

(१) संख्यापरिमाणयोरिति प्रकाशकृत्सम्मतः पाठ इत्यनुमीयते, परन्तु कुत्रापयादर्श-दीधिति--पुस्तकेषु तादृशपाठो नास्ति ।

पादानात् कार्त्स्न्यस्य (१) विकल्पपुरःसरं दोषदानपरतया उत्तर-ग्रन्थं पूरयितुं मूलस्य न्यूनतां परिहर्त्तुमाह"कार्त्स्न्य"मित्यादिना। "साध्याश्रयस्ये"त्यादि-द्वयञ्च मूलस्य न्यूनता-परिहाराय। "सकल-धूम-सम्बन्धस्य वक्ष्यावभावा"दितिग्रन्थदर्शनाद्व्याप्तेः साध्य-निष्ठत्वं दर्शयितुं प्रथमं विकल्पयति "आद्य"इति। स्वातन्त्र्येण दोषमाह "व्याप्ते"ति। ननु साध्य-निष्ठ-सामानाधिकरण्य-निरूपकत्वं यद्धर्म-व्यापकं तद्धर्मवत्त्वं व्याप्तिरतोनोक्त-दोष इत्यत आह"पृथिवीत्व-व्यापके"ति(२)। पृथिवीत्ववन्निष्ठान्योन्याभाव-प्रतियोगितानवच्छेदकत्व-मिह तद्व्यापकत्वम्। तत्र च विषयितया ज्ञान-निष्ठतया सर्व्वस्यैव तादृशज्ञान-भेद-प्रतियोगितावच्छेदकत्वात्तदनवच्छेदकाऽप्रसिद्धि-रतः समवायेन या अवच्छेदकता तदभावरूपं तादृशप्रतियोगि-तानवच्छेदकत्वं वाच्यं, तथाचासमवेतस्य गगनादेस्तादृश-(३)प्रति-योगितानवच्छेदकत्वात् तत्र च पृथिवीत्वनिष्ठसामानाधिकरण्य-निरूपत्वा-(४) भावान्नातिव्याप्तिः स्यादतस्तत्सम्पत्तये गगनादि-वारणाय"जातौ"ति समवेत-परम्। (न च पृथिवीत्व समानाधि-करण-जाते रित्येवोच्यतां किं व्यापकत्वेनेति वाच्यं तत्समानाधिक-रण-घटत्व-पटत्वादेरेकाधिकरणाऽप्रसिद्ध्याऽतिव्याप्ति-विरहात्)(५)

(१) कार्त्स्न्यस्याभिधानात् इति ग पुस्तके।
(२) पृथिवीत्वव्यापकेत्यत्र पृथिवीति इति ग पुस्तके।
(३) गगनादेरेव तादृश इति ग पुस्तके।
(४) पृथिवीत्व-सामानाधिकरण्या इति ग पुस्तके।
(५) ( ) चिह्नमध्यस्थितः पाठो नास्ति ग पुस्तके।

द्रव्यत्वादेरेक-व्यक्तिकत्वेन कार्त्स्न्याभावादेवं-विध-हेतु-करणम्(१)। "अतएव" उक्तातिव्याप्तेरेव। द्वितीय-विकल्पस्य मूलोक्तानुवादं सार्थकयति "अर्थाभिधाने"ति। एक-हेतु-व्यक्ति (२)-काव्याप्तेः पूर्व्वमुक्तत्वात् * तत्परामर्शकत्वेऽसङ्गतिरतस्तत्परामर्शनीयं दर्शयति "एक-व्यक्तिसाध्यकाव्याप्तेरेवे"ति। पूरयति "समव्याप्तेऽपि चे"ति। (तदेव दर्शयति "संख्यापरिमाणयो"रित्यादिना, संख्यापरिमाणयोरेकस्य साध्यत्वे इदम्। "तदभावा"दित्यत्र तच्छब्दस्यार्थं विग्रहञ्च दर्शयति "सकले"ति) (३) ननु हेतु निष्ठ-सामानाधिकरण्य-प्रतियोगित्वं यद्धर्म्म-व्यापकं तद्धर्म्मावच्छिन्न-सामानाधिकरण्यं हेतौ व्याप्तिरतो नोक्त-दोष इत्यत आह "भावाचे"ति, द्रव्यत्वे सकल साध्य-सम्बन्धस्य सत्त्वादित्यर्थः (४)। साध्यस्य कार्त्स्न्यं विवक्षितमिति (५) शब्दवानित्यनेक-व्यक्ति-साध्यकता। रूपादि-साध्यतायां कृत्स्न-रूपाधिकरणत्वस्य यथाश्रुतार्थस्याप्रसिद्ध्या तदुपेक्षितम्। तृतीय-चतुर्थयोरर्थ-परिष्कारं दूषणञ्चाह (६) "तृतीये" इति, एकमात्र-वृत्ति-साध्यकेऽपि साध्य-

---

* अतएवेत्यादिनेति ग्रे०।

(१) एवं विधानुसरणमिति च पुस्तके।

(२) व्यक्ति इति नास्ति च पुस्तके।

(३) ( ) एतच्चिह्नितस्थले च पुस्तके पाठो यथा "तदेव दर्शयन् तदभावादित्यत्र तच्छब्दस्यार्थं विग्रहञ्च दर्शयति संख्यापरिमाणयोरित्यादिना, संख्या परिमाणयोरेकस्य साध्यत्वे अन्यस्य साधनत्वे इति।

(४) द्रव्यत्वे सकल साध्यसम्बन्धस्य सत्त्वादित्यर्थं इति नास्ति ग पुस्तके।

(५) विवक्षितमितीदमत्र रक्षितुमिति ग पुस्तके।

(६) परिष्कारपूर्व्वकं दूषणमाह इति ध पुस्तके।

समानाधिकरणानां बहूनां सम्भवात् चतुर्थे तद्दोषस्यासम्भवात् "यथासम्भव"मिति, "वह्न्यादा"वित्यादि दोषस्तूभयोरेवेति। "अतिव्याप्तिश्चे"ति, साध्य-समानाधिकरण-धर्म्माणां (१) प्रातिस्विक-रूपेण साध्य-(२) सामानाधिकरण्य-विवक्षणे वह्न्यादौ साध्ये सत्त्वादावतिव्याप्तिरिति, यथाश्रुते तु तद्वह्नि-साध्यक-सत्त्वेऽतिव्याप्तिरप्रसिद्धिश्च वह्न्यादि-साध्यक-सत्त्वेताविति "अर्थपरिष्कारे"ति, साधनाश्रयस्य कात्स्न्य-विवक्षणे कृत्स्नसाधनाश्रयाश्रितत्वं साध्ये लभ्यते तथाच व्याप्तेर्हेतुवृत्तित्वं अतस्तस्या हेतुनिष्ठत्व-सम्पादनार्थमर्थ-परिष्कारः। एवं साधन-सामानाधिकरणेत्यत्रापि परिष्कारः। स्वयं दूषणमाह "एकमात्रवृत्ती"ति, "तथैव" अर्थ-परिष्कार-पूर्व्वकमेव। प्रत्येक-निरूपित-सामानाधिकरण्य-विवक्षणे मूलोक्ताप्रसिद्ध्यभावाद्दूषणान्तरमाह "तादृशाना"मिति साधन-समानाधिकरणानामित्यर्थः (३)। "न कुत्रापी"ति, पर्व्वतीय--वह्नौ महानसत्व--सामानाधिकरण्याभावादेवमन्यत्रापीति भावः। "यद्धर्म्मावच्छिन्ने"ति साध्यतावच्छेदकावच्छिन्नेत्यर्थः। तेन गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ जाति-सामानाधिकरण्यं प्रति सत्तात्मक-साध्यसामानाधिकरण्यस्य व्यापकत्वेऽपि न दोषः। "इतोऽपी"ति, तथाच वक्ष्यमाण-लक्षणापेक्षया गौरवमेव प्रकृत-लक्षणे दोष इति भावः।

---

(१) समानाधिकरणानामिति ग पुस्तके।

(२) साध्य इति नास्ति ग पुस्तके।

(३) इत्यर्थ इति नास्ति ग पुस्तके।

तत्त्वचिन्तामणिः ।

नापि स्वाभाविकः सम्बन्धो व्याप्तिः स्वभाव-जन्यत्वे तदाश्रितत्वादौ वाऽव्याप्त्यतिव्याप्तेः । नाप्यविनाभावः केवलान्वयिन्यभावात् ।

दीधितिः ।

"अविने"ति, साध्यं विना साध्याभाववति यो "भावो" वृत्तिस्तद्विरहः, साध्यं विना अभावः, साध्याभाव-व्यापकीभूताभाव-प्रतियोगित्वमिति वा ।

दीधितिः-प्रकाशः ।

"साध्यं विने"ति । अत्र विना शब्दार्थोऽभाववान्, विनाभाव इत्यत्र समासश्च सप्तमीतत्पुरुषः, ततो नञ्समासः । पूर्व्वोक्ता-व्यभिचरितत्व-साध्याभाववदवृत्तित्व(१)स्य साध्याभाववद्वृत्तिभिन्न-त्वरूपार्थत्वात् (२) न तेन सह (३) पौनरुक्त्यम् * । मूर्त्ता-साध्यके समवायेन हेतौ हेतुतावच्छेदकसमवायेन साध्याभाववति वृत्तेर-प्रसिद्धाऽव्याप्तेराह "साध्य"मित्यादि, अत्र तु "विने"ति सप्तम्यन्तं विनार्थस्याभावः, सप्तम्या अवच्छेदकत्वमन्यूनवृत्तित्वरूपं प्रत्याय्यते,

* अत्र तु साध्याभाववद्वृत्तित्वाद्यनाभावरूपत्वादिति भावः ।

(१) साध्याभाववदवृत्तित्व इति नास्ति घ पुस्तके ।

(२) रूपत्वादिति घ पुस्तके ।

(३) सहेति नास्ति घ पुस्तके ।

तथाच "विनाभावः" साध्याभाव-व्यापकीभूतोऽभावः, "अविने" त्यस्य नञा पुनस्तस्याभावः प्रत्याय्यते, स एव च प्रतियोगित्वमिति भाव प्रधान-निर्देशात्तादृशाभाव-प्रतियोगित्वस्य लाभ इति ।

---

तत्त्वचिन्तामणिः ।

अथ सम्बन्धमात्रं व्याप्तिः, व्यभिचारि-सम्बन्धस्यापि केनचित्सह-व्याप्तित्वात् धूमादिव्याप्तिस्तु विशिष्यैव निर्व्वक्तव्येति तन्न लिङ्गपरामर्श-विषय-व्याप्तिस्वरूप निरूपण-प्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात्। न च सम्बन्धमात्रं तथा तद्बोधादनुमित्यनुत्पत्तेः ।

नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदं सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात्। केवलान्वयिनि केवलान्वयि-धर्म्म-सम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः, एतयोरनुमिति-विशेष-जनकत्वम्। अनुमितिमात्रे पक्ष-धर्म्मतैव प्रयोजिका। न चातिप्रसङ्गः, विशेष-सामग्री-सहिताया एव सामान्य-सामग्र्याः कार्य्य-जनकत्व-नियमादिति केचित्। तदपि न, साध्यवदन्या-वृत्तित्वस्य धूमेऽसत्त्वात् वह्निमत्पर्व्वतान्यस्मिन् धूम-सत्त्वात्। न च सकलसाध्यवदन्यावृत्तित्वं, वह्निमतां प्रत्येकं तथात्वात्। सर्व्वत्र लक्षणे साध्यत्व-साधनत्व-

तदभिमतत्वानां व्याप्तिनिरूप्यत्वेनात्माश्रयः, साध्यत्वं, हि सिद्धिकर्म्मत्वं सिषाधयिषाविषयत्वं वा महानसीयवह्नौ तदभावात्। न च सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य, कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यं स्वार्थानुमानोपयोगि-व्याप्तिस्वरूप-निरूपणं विना कथायामप्रवेशादिति।

इति श्रीमद्गङ्गेशोपाध्याय-कृते तत्त्वचिन्तामणौ अनुमानखण्डे पूर्व्वपक्षोक्त-लक्षण-प्रकरणं समाप्तम्।

---

दीधितिः।

"अथे"ति "सम्बन्धः" सामानाधिकरण्यं व्यभिचारि (१) सम्बन्धस्य "केनचित्" किञ्चिद्रूपावच्छिन्नेन, धूमादेरपि द्रव्यत्वादिना वह्नि-व्यापकत्वात्। "तद्बोधा"दिति, न च (२) व्यभिचाराग्रह-सहकृतस्तद्बोधस्तथा *, व्यभिचार--तद्व्यतिरेकयोरनुपस्थितावपि †

---

* "तद्बोधः" सामानाधिकरण्यबोध इत्यर्थः। "तथे"त्यस्य कारणमित्यर्थः।

† अनुमितिमुत्पादयत्येवानुभवसिद्धत्वप्रदर्शनाय व्यभिचाराभावस्यानुपस्थितत्वमुक्तमिति भावः।

(१) व्यभिचारिणीति हस्तलिखित-पुस्तके।

(२) चकारो नास्ति हस्तलिखित-पुस्तके।

समानाधिकरण-धर्म्मवत्ताज्ञानमात्रादनुमित्यनुत्पादस्य सर्व्वानुभवसिद्धत्वात्, हेत्वन्तरे तत्रैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकाग्रहेऽपि अनुमित्युत्पादाच्च (१)। विवदन्ते च सामानाधिकरण्य-ज्ञानस्यैव हेतुतायां, व्यभिचार-ज्ञानाभाव-कारणत्वमपेक्ष्य कारणीभूत-सामानाधिकरण्य-ज्ञाने लाघवेनाव्यभिचारस्य विषयतयाऽवच्छेदकत्वमुचितम्।

---

दीधितिप्रकाशः।

कार्य्यकारणभावाद्यात्मक-सम्बन्धस्य व्याप्तित्वाभावादाह"सामानाधिकरण्य"मिति। "व्यभिचारि-सम्बन्धस्य" व्यभिचारिहेतु निष्ठ-साध्य-(२) सामानाधिकरण्यस्य, "केनचि"दितिमूलस्यार्थसङ्गतिः किञ्चिद्रूपावच्छिन्न-साध्य-परतया व्याचष्ट "किञ्चिद्रूपावच्छिन्नेने"ति, तदेवाह "धूमादेरपी"ति*। व्यभिचाराग्रहे सति चाव्यभिचारग्रहेऽनुमित्यनुत्पादोऽसिद्ध एवेत्यतस्तद्व्यतिरेक उक्तः। अनुभवे विप्रति-

---

* "तद्बोधादनुमित्यनुमित्यनुत्पत्ते"रिति मूलस्यायं भावः, यदि सामानाधिकरण्यज्ञानमात्रमनुमितिहेतुस्तदा व्यभिचारज्ञाने सत्यपि तद्बोधादनुमित्यापत्तिरिति, यदि व्यभिचारपक्षाभावस्याप्यनुमितिहेतुत्वमुच्यते तदा नोक्तापत्तिरित्यभिप्रायेण यद्बूते दीधितौ न चेति, तथा चानुमितिं प्रति व्यभिचारज्ञानाभावः सामानाधिकरण्य-पक्षच हेतुर्वक्तव्य इत्यर्थः।

(१) अनुमितेरुत्पादाच्च इति हस्तलिखित पुस्तके।

(२) साध्य इति नास्ति न पुस्तके।

पक्षं प्रत्याह "हेत्वन्तर" इति । तद्धेतुकानुमितौ तद्धेतुक-व्यभिचाराग्रहो हेतुरत "स्तन्नैवे"ति । द्रव्यत्वरूपेण धूमे वह्नि-व्यभिचार-ग्रहेऽपि धूमत्वावच्छिन्नधूमहेतुकानुमितेरुदयादिति भावः । येन रूपेण हेतौ पक्षधर्म्मताधीस्तेन (१) रूपेण व्यभिचार-ज्ञानाभावो हेतुर्वाच्य इत्यतो "हेतुतावच्छेदकाग्रहेऽपी"ति, वह्नि-समानाधिकरणवानित्यादौ हेतुतावच्छेदकधूमत्वादेरग्रहादित्यर्थः । ननु वह्नि-समानाधिकरणवानित्यादौ सामानाधिकरण्य-प्रकारकमेव पक्षधर्म्मता ज्ञानं तेन रूपेण व्यभिचारज्ञानाभावश्च (२) कारणं, वह्निसमानाधिकरणवह्निमदन्यावृत्तिमानित्यादौ* तु वह्निमदन्यावृत्तित्व-प्रकारेण व्यभिचारज्ञानाप्रसिद्धा तेन रूपेण सामानाधिकरण्यप्रकारक-पक्षधर्म्मताज्ञानमेव कारणं न व्यभिचार-ग्रहाभाव इत्यत आह "विवदन्ते चे"ति । ( केचित्तु ननु हेतुतावच्छेदकावच्छिन्नधर्म्मिक-सामानाधिकरण्यज्ञानमेव हेतुरन्यथा विरोधस्य हेत्वाभासताऽनुपपत्तिर्निर्द्धर्म्मितावच्छेदकक—सामानाधिकरण्यज्ञानस्याप्रतिबध्यत्वात् इत्यञ्च हेतुतावच्छेदकाग्रहेऽनुमितिर्न भवत्येवेत्यत आह "विवदन्ते चे"ति ) ( ३ ) परामर्शे चैतत् स्फुटीभविष्यति । ननु सामानाधिकरण्यज्ञानस्य कारणतावादि-मते इदं स्यादत आह "व्यभिचारज्ञाने"ति । ( ननु सामानाधिकर-

---

* वह्निमदन्यावृत्ते र्हेतुतात्यागे इति भावः ।

(१) धीस्तेनेत्यत्र ज्ञानस्तेनेति च पुस्तके ।

(२) व्यभिचाराज्ञानं इति च पुस्तके ।

(३) ( ) एतच्चिह्न-मध्यस्थितः पाठो नास्ति ग पुस्तके ।

ण्यज्ञानस्याहेतुत्वे साध्याधिकरणावृत्तित्वरूप-विरोधस्य हेत्वाभासताऽनुपपत्तिरत आह "व्यभिचारज्ञाने"ति ) ( १ ) "उचित" मिति, व्यभिचार-ज्ञानाभावस्य कारणतायां स्वातन्त्र्येण ज्ञानस्य हेतु-(२) प्रवेशे कारणान्तर कल्पने च गौरवात् कारणीभूत-सामानाधिकरण्य-ज्ञाने विषयतयाऽव्यभिचारस्यावच्छेदकत्वमेवो ( ३ )-चितमित्यर्थः ।

---

दीधितिः ।

न च व्यभिचार-संशयेऽनुमित्यनुत्पादात् अव्यभिचार-निश्चयत्वेन कारणत्वोक्तौ गौरवं, व्यभिचार-ज्ञानस्य हि भ्रमत्व-निश्चय-दशायामेवाविरोधितया भ्रमत्वेनानिश्चीयमानस्य विरोधित्वं वाच्यं अव्यभिचार-निश्चयस्य च भ्रमत्व-शङ्कायामप्यनुमित्यजनकतया भ्रमत्वेनागृह्यमाणस्यैव हेतुत्वमिति तवैव(४) गौरवात्। नानाविध-व्यभिचार-ज्ञानाभावानां नियतपूर्ववर्त्तित्वेन क्लृप्तानामपि हेतुत्वमपेक्ष्य वक्ष्यमाणैकविधाऽव्यभिचार-ज्ञानस्यैव हेतुत्वं युक्तमित्यप्याहुः ।

---

(१) ( ) एतच्चिह्नमध्यस्थोऽपि पाठो नास्ति ग पुस्तके ।

(२) हेतु इति नास्ति घ पुस्तके ।

(३) एवेति नास्ति घ पुस्तके ।

(४) तवैव इति हस्तलिखित-पुस्तके ।

दीधिति-प्रकाशः ।

"गौरव"मिति, व्यभिचाराप्रकारकं सत् यदव्यभिचार प्रकारकं तत्त्वेन हेतुत्वापेक्षया व्यभिचार-प्रकारक ज्ञानाभावस्य हेतुत्वे लाघवादिति भावः । "तवेवे"ति व्यभिचाराप्रकारकमव्यभिचार-प्रकारकं ज्ञानमव्यभिचार-निश्चयः, तस्य भ्रमत्वं व्यभिचारवत्यव्यभिचार-प्रकारकत्वं, व्यभिचार-ज्ञानस्य भ्रमत्वं व्यभिचाराभाववति व्यभिचार-प्रकारकत्वं, तस्य निश्चयो व्यभिचाराभाववति व्यभिचार-प्रकारकत्वाभावाप्रकारत्वे सति व्यभिचाराभाववति व्यभिचार-प्रकारकत्व-प्रकारकं ज्ञानं, तथाच व्यभिचारवत्यव्यभिचार-प्रकारकत्व प्रकारक-ज्ञानानास्कन्दित-व्यभिचाराप्रकारकाव्यभिचार-प्रकारक-ज्ञानत्वमपेक्ष्य व्यभिचाराभाववति व्यभिचार प्रकारकत्वाभावाप्रकारक(१)व्यभिचाराभाववति व्यभिचार-प्रकारकत्व-प्रकारक(२)ज्ञानानास्कन्दित व्यभिचार-प्रकारक-ज्ञानत्वेऽतिगौरवात् तदवच्छिन्नाभाव-हेतुत्वे सुतरां गौरवादिति भावः*। न च यत्र विषय-विशेषे व्यभिचार-ज्ञान भ्रमत्व-निश्चयो न जातस्तत्र लाघवाद्व्यभिचार-ज्ञानाभावस्यैव हेतुत्वं स्यादिति वाच्यं तथाभ्युपगन्तु

* नन्वप्रामाण्य-ज्ञाने अवच्छिन्नाप्रामाण्य-निश्चय उत्तेजकीकर्त्तव्यो मया तु अप्रामाण्य-निश्चयेऽप्रामाण्य-ज्ञानस्योत्तेजकतयाऽङ्गीकर्त्तव्यमिति भवतामेव गौरवमिति चेन्न अप्रामाण्य-ज्ञानेऽप्रामाण्य-ज्ञानस्योत्तेजकत्वात् तथा सत्यनवस्थया कारणतावच्छेदकत्वमेव दुर्घटं स्यादिति भाव ।

(१) प्रकारकत्वाभावाप्रकारकं मदिरास्वेवं भवितुं युक्तम् ।

(२) प्रकारकत्वप्रकारकं यत्तज् इति भवितुं युक्तम ।

रिष्टत्वात्। ( ननु तथापि नियत-पूर्व्ववर्त्तित्वेन क्लृप्तानां व्यभिचार-ज्ञानाभावानां अनन्यथासिद्धत्वमात्रं कल्प्यते भवन्मते तु अव्यभिचार-ज्ञानस्यानन्यथासिद्धत्वं नियत-पूर्व्ववर्त्तित्वञ्च कल्प्यमिति गौरवमत आह "नानाविधे"ति) (१) "वक्ष्यमाणैकविधे"ति, अन्योन्याभाव-गर्भेत्यर्थः। यदि च लाघवादेकविधाव्यभिचार-ज्ञानस्य कारणत्वं तदान्यादृश-व्यभिचार-ज्ञानस्यानुमितौ व्याप्ति-ज्ञाने वा स्वातन्त्र्येण प्रतिबन्धकत्वं कल्प्यं तथा चातिगौरवं, अन्यादृश-व्यभिचार-ज्ञानस्य व्याप्ति-ज्ञानाप्रतिबन्धकत्वे तु ममापि लघुतरमेकविधमेव व्यभिचार-ज्ञानं (२) प्रतिबन्धकमस्त्वित्यस्वरस आहुरित्यनेन सूचितः।

---

दीधितिः।

सामानाधिकरण्य-विशिष्ट-पक्ष-धर्मत्वं तु पक्षे साध्य-ग्रहं विना दुर्ग्रहमिति केवलान्वयित्वस्याग्रहे सामानाधिकरण्यमात्र-ग्रहादनुमित्यनुत्पत्तेस्तद्ग्रहोऽपि वाच्यः, तच्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वादिकमन्योन्याभाव-प्रतियोगितानवच्छेदकत्वं वा, तथाच सर्व्व-साधारण्याय लाघवात् साधनवतस्तद्वृत्तित्वस्य(३)

---

(१) ( ) एतच्चिह्नमध्यस्थितः पाठो नास्ति ग पुस्तके।

(२) विधव्यभिचारज्ञानमिति ख पुस्तके।

(३) वृत्तित्वस्य वा इति हस्तलिखित पुस्तके पाठः।

वृत्तेरन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्त-रहस्यम्। शेषं केवलान्वयि-खण्डने वक्ष्यामः।

इति श्रीमद्रघुनाथ शिरोमणि-कृतायां दीधितौ अनुमानखण्डे पूर्व्वपक्षोक्त-लक्षण-प्रकरणं समाप्तम्।

---

दीधिति-प्रकाशः।

नन्वव्यभिचरित-हेतुमत्त्वे पक्षस्य (१) साध्यवत्त्वावश्यकत्वं तज्ज्ञान-हेतुतायां बीजं, तच्च सामानाधिकरण्य-विशिष्ट-हेतुमत्त्वेऽपीति लाघवात्तज्-ज्ञानमेव-हेतुरस्त्वित्याशङ्का निराचष्टे "सामानाधिकरण्येति"ति। "पक्षे साध्य-पक्षं विने"ति, पर्व्वतो वह्निमान्वेति संशयोत्तरं वह्निमद्वृत्तित्व-विशिष्ट-धूमवान् पर्व्वत इति निर्णयस्यानुत्पत्तेस्तद्धर्म्मितावच्छेदक-विशिष्ट-धर्म्मिणि तदधिकरण-वृत्तित्व-विशिष्टवत्ता-निर्णयं प्रति तद्धर्म्मितावच्छेदक-विशिष्ट-धर्म्मिणि तद्वत्ता-निर्णयस्य हेतुत्वमनायत्या कल्प्यत इति भावः। केवलान्वयि-साध्य-सामानाधिकरण्यस्य केवलान्वयित्व विशिष्ट-साध्य-सामानाधिकरण्यस्य वा ज्ञानं हेतुरिति मतं दूषयति "केवलान्वयित्वस्ये"ति। "तद्ग्रहः" केवलान्वयित्व-ग्रहः (२) "तच्च"

(१) पक्षे इति न पुस्तके।

(२) तद्ग्रहः केवलान्वयित्वग्रह इति नास्ति च पुस्तके।

केवलान्वयित्वञ्च। वृत्तिमत्त्व-प्रवेशे गौरवादन्योन्याभाव-घटिता-व्यभिचार-धियः कारणत्व-निर्व्वाहायान्योन्याभाव-घटित-केवलान्वयित्वमाह "अन्योन्याभावे"ति। कालिकतया वाच्यत्वादिमतो भेदस्य प्रतियोगितायां वाच्यत्वादेरवच्छेदकत्वेन स्वरूप-सम्बन्ध-विशेषेणानवच्छेदकत्वं वाच्यमिति न दोषः। "सर्व्व साधारण्याय" केवलान्वयि-व्यतिरेकि-साधारण्याय। "साधनवत" इति वृत्तेर्विशेषणम्। "तद्वृत्तित्वस्य" साधनवद्वृत्तित्वस्य, इदमन्योन्याभाव-विशेषणं, तथाच साधनवद्वृत्त्यत्यन्ताभावाप्रतियोगित्वं साधन-वद्वृत्त्यन्योन्याभाव प्रतियोगितानवच्छेदकत्वं वा उभय-साधारणं साध्य-विशेषणमस्तु किं पृथक्कारणत्व कल्पनेनेति भावः। एकस्यैव वाच्यत्वस्य केवलान्वयित्व-ज्ञान-काले व्यतिरेकित्व-भ्रम-काले च पृथक्कार्य्य कारण-भाव-कल्पने गौरवादेक एव कार्य्य कारण-भावः कल्पते लाघवादिति भावः। "शेष"मिति, लाघवात् साध्यवदन्यावृत्तित्व-ज्ञानमेवानुमिति-कारणं केवलान्वयित्व-ज्ञान-काले च नानुमितिरित्यादिकमित्यर्थः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमानखण्डे पूर्व्वपक्षोक्त-लक्षण-प्रकरण-
व्याख्या समाप्ता।

---

## अथ सिद्धान्तलक्षण-प्रकरणे ।

### तत्त्वचिन्तामणिः ।

अत्रोच्यते । प्रतियोग्यसमानाधिकरण-यत्समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।

इति श्रीमद्गङ्गेशोपाध्याय-विरचिते तत्त्वचिन्तामणौ अनुमानखण्डे सिद्धान्तलक्षण-प्रकरणं समाप्तम् ।

---

### अथ सिद्धान्तलक्षण-प्रकरणे दीधितिः ।

"प्रतियोग्यसमानाधिकरणे-"ति । प्रतियोग्यसमानाधिकरण--यद्रूप-विशिष्ट--समानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूप-विशिष्टस्य तद्धर्मावच्छिन्न-यावन्निरूपिता व्याप्तिरित्यर्थः ।

---

### अथ सिद्धान्तलक्षण-प्रकरणे दीधिति-प्रकाशः ।

वह्नित्वावच्छिन्न-वह्नेरेव नतत्तद्वह्नित्वावच्छिन्नत्वादव्याप्तिरतो नञ् व्यत्यासाभिप्रायेणाह "प्रतियोगितानवच्छेदक" इति । वह्नि-

मान् धूमादित्यादौ वह्न्यादि-व्याप्ति-वृत्ति-तत्तद्व्याप्तित्वावच्छिन्न-सामानाधिकरण्यस्य, पृथिवी वृत्तित्व-विशिष्ट-द्रव्यत्ववत् गन्धादित्यादौ शुद्ध-द्रव्यत्व सामानाधिकरण्यस्य च प्रकृत-साध्यतावच्छेदकावच्छिन्न-निरूपित-व्याप्तित्वाभावादाह "तद्धर्मावच्छिन्ने"ति। "तद्रूपविशिष्टे"त्यादिना लक्ष्य-निर्देशः। द्रव्यत्व-रूपेण धूमादेर्व्याप्यत्व-वारणाय "तद्रूपविशिष्टस्ये"ति। तत्रैव वह्नेस्तत्तद्व्याप्तित्वादिना व्यापकत्व-वारणाय "तद्धर्मावच्छिन्ने"ति। महानसीय-वह्नि-सामानाधिकरण्यस्यैव निखिल-धूम-वह्न्यादि-व्याप्तित्वमिति व्याप्तेः सामान्य-रूपता-लाभाय 'याव'दिति। पूर्व्वोक्तं 'येन केनापी'ति च।

दीधितिः।

दण्डादौ साध्ये परम्परा-सम्बन्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः।

दीधितिप्रकाशः।

ननु दण्डिमान् दण्डि-संयोगादित्यत्र * साध्यतावच्छेदकस्य तत्तद्दण्डस्य तादृशाभाव-प्रतियोगितानवच्छेदकत्वं दुर्घटं चालनी-न्यायेन तत्तद्दण्डावच्छिन्नाभावस्य दण्डि-संयोगाधिकरणे सत्त्वात्। न च तद्दण्डी नास्तीत्यादौ तत्ताविशिष्ट-दण्ड एव प्रतियोगितावच्छेदको न तु शुद्ध-दण्डः, दण्डी नास्तीत्यप्रतीतेरिति वाच्यं, तद्दण्डी

*दण्डिसंयोगादित्यत्र दण्डिसंयोग-पदं दण्डि-प्रतियोगिकत्व-विशिष्ट-संयोग-परं, तथाच संयोगस्य द्विनिष्ठतया दण्डि-संयोगस्य दण्डिनि वर्त्तमानत्वेऽपि न हेतुत्व-व्याघातः तत्प्रतियोगिकत्व-विशिष्टत्वेन संयोगस्य तद्भिन्नवृत्तित्वादित्यभिप्रायः।

नास्तीत्यादौ तत्त्वेनोपलक्षित-गुणत्व एव प्रतियोगितावच्छेदक-तया भासते न तु तत्त्वमपि तद्विशेषणतया, यत्र तु गुणत्वस्य विशे-ष्यातिप्रसक्तत्वं तत्रैव तद्विशेषणतया तद्विशेषणत्वावच्छेदकत्वं प्रमाणेन गृह्यते, यथा गुणान्यत्व-विशिष्ट-सत्तावन्नेदे गुण सत्ताया अतिप्रसक्तत्वात् सामानाधिकरण्येन तद्विशेषणस्य गुणान्यत्वस्य। किञ्च पृथिवीत्व-व्याप्य-जातिमत्त्वात् पृथिव्या इत्यत्र समवायेन हेतुतायां साध्यतायाञ्च तादृश-घटत्व-पटत्वादि-जातेः पृथिव्यधि-करण—तन्तु—कपाल—निष्ठाभाव-प्रतियोगितावच्छेदकत्वादव्याप्ति-स्तादृश-जातीनां स्वरूपत एवावच्छेदकत्वादुक्तप्रकारासम्भवादाह "दण्डादा"विति। दण्डाधिकरण-निष्ठ दण्डाभाव-प्रतियोगितायां दण्डत्वस्य साक्षात् सम्बन्धेन समवायात्मनैवावच्छेदकत्वादाह "परम्परासम्बन्ध" मिति, तथाच दण्डत्वस्य दण्डिनि स्वाश्रय-संयोग-रूपः परम्परासम्बन्धः साध्यतावच्छेदकता-नियामकस्तेन सम्बन्धेन यत्तदवच्छेदकं तस्याभावो दण्डत्वे वर्त्तत इति नाव्याप्तिः, इत्यञ्च दण्डत्वस्योक्त-सम्बन्धेन दण्डिनि प्रकारतया भानात् दण्ड-वानित्यनुमित्याकारः, दण्डिमानित्यनुमितिस्तु तद्व्याप्तित्वादि-हेतुक-स्थले दण्डत्व-समानाधिकरणेनानवच्छेदकत्व-ज्ञानस्य प्रमा-त्वात्तादृश-प्रमा-जन्या, दण्डि—संयोगादि—हेतुक—स्थले त्वनव-च्छेदकत्व भ्रमजन्यैवेति। यदि च विशेष-दर्शिनामपि दण्डि-संयोगादि-हेतुक-स्थले दण्डिमानित्याकारिकानुमितिरनुभव-सिद्धा तदा हेतु-समानाधिकरणाभाव-प्रतियोगितावच्छेदकतानवच्छेदकं यद्रूपं तद्विशिष्टावच्छिन्न-सामानाधिकरण्यं दण्डादि-साध्यक-

स्थले व्याप्तिरिति विशिष्यैव साध्य-साधन-भेदेन लक्षणं वाच्यम्। शब्दैक्यमात्रस्यानुपादेयत्वादिति। एतच्चार्थं (१) वह्न्यादौ तद्व्यादौ तत्संयोगादौ च साध्ये सर्व्वत्र साक्षात्परम्परया वाऽनुगमकं (२) वह्नित्वादिकमेव साध्यतावच्छेदकमित्यादिना दीधिति कृदेव स्फुटयिष्यति (३)।

केचित्तु यत्र व्यापकता-ज्ञाने दण्डत्वं निरुक्त सम्बन्धेन साक्षादेव साध्यांशे प्रकारीभूय भासते तत्रानुमितावपि तथैव तस्य भानमिति दण्डवानित्येवानुमित्याकारः। यत्र तु साध्यांशे विशेषणतावच्छेदकीभूतस्य दण्डत्वस्य व्यापकता-ज्ञाने भानं तत्रानुमितावपि तथैवेति। दण्डत्वादेर्व्यापकतावच्छेदकत्वेऽपि दण्डिमानित्यनुमित्याकारो न विरुध्यते। न च दण्डीति ज्ञाने दण्डत्वस्य दण्ड्यप्रकारत्वात्, कथं तेन सम्बन्धेन तत्रावच्छेद-कत्व-भानमिति वाच्यम्। दण्डः प्रमेय इति ज्ञाने दण्डत्व-विशिष्टे प्रमेयत्वान्वये दण्डत्वांशेऽपि प्रमेयत्वान्वयवत्, दण्डीति ज्ञाने दण्डत्व-विशिष्टस्य दण्डिनि प्रकारत्वे दण्डत्वस्यापि प्रकारत्वात्। तयोरियानपरं भेदः तत्र (४) दण्डत्वं दण्ड-विशेषणतापन्नमेव दण्ड्यंशे प्रकारो न तु स्वातन्त्र्येणेति (५) नानुमितेर्दण्डवानित्या-कारतेत्याहुः।

---

(१) एतदर्थमिति न पुस्तके।

(२) अनुगतमिति न पुस्तके।

(३) स्फुटीकरिष्यतीति न पुस्तके।

(४) तत्र इति च पुस्तके।

(५) तत्र इत्यधिकपाठो वर्त्तते च पुस्तके।

दीधितिः।

इत्यञ्च इदं द्रव्यं गुण-कर्म्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरण-गुणादि-निष्ठात्यन्ताभाव-प्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः, साधनस्य विशिष्ट-सत्त्वादेर्गुणादावव्रत्तेः। सामानाधिकरण्य-व्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यम्। वस्तुतस्तु धूमत्वादि-विशिष्ट-व्यापक-वह्नि-सामानाधिकरण्यस्य रासभादि-साधारणत्वाद्धूमत्वादिमति तादृश-सामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः। आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम्।

---

दीधिति-प्रकाशः।

"यद्रूपविशिष्टे"त्यस्य फलमाह "इत्यञ्चे"ति। "अव्रत्तेः" असम्बन्धात्। तथाच गुणादौ विशिष्ट-सत्ता सम्बन्धाभावादित्यर्थः। सामानाधिकरण्य-व्यक्तीनां व्याप्तित्वे "एकैव हि सा व्याप्ति" रित्यपिम-ग्रन्थ-विरोधमुपपादयति"सामानाधिकरण्येति।"निरूपकतावच्छेदकस्य" तादृश-प्रतियोगितानवच्छेदकत्वे सति सामानाधिकरण्य-प्रतियोगिनि प्रकारीभूय भासमानस्य। "अधिकरणतावच्छेदकस्य" सामानाधिकरण्यानतिप्रसक्तस्य। तथाच "एकैव हि" इत्यादि-ग्रन्थस्य एकनिरूपकतावच्छेदकैकाधिकरणतावच्छेदकाव-

च्छिन्नेति लक्षणयाऽर्थ इति भावः। ननु सामान्य-लक्षणानभ्युपगमे महानसीय-धूम-निष्ठ-वह्नि-सामानाधिकरण्यस्य पर्व्वतीय-धूमादावव्रत्तेः, पर्व्वतीय-धूम-निष्ठ-वह्नि-सामानाधिकरण्यस्य च पर्व्वतीय-वह्नेरसन्निकर्षेण ग्रहायोगात्, कथं व्याप्ति-धीरित्याक्षेपे "एकैव ह्री"त्यादि-ग्रन्थावतारः। अत्र च निरूपकतावच्छेदकादेरैक्येऽपि तदाक्षेपस्यानुद्धारादसङ्गतिः। न च स्व-समानाधिकरण-धूमत्व-रूप-परम्परा-सम्बन्धेन महानसीय-धूम-निष्ठ-वह्नि-सामानाधिकरण्यस्य पर्व्वतीय-धूमे भानं, साक्षात्सम्बन्धेन व्याप्ति-प्रकारक-ज्ञानस्यानुमिति-हेतुत्वादत आह "वस्तुत" इति। "रासभादौ"ति। न च "तद्रूप-विशिष्टस्ये"त्यादि-करणादेव रासभे तत्सत्त्वेऽपि न क्षतिरिति वाच्यम्। तावता रासभो वह्नि-व्याप्य इति व्यवहाराभावोपपादनेऽपि धूम-व्यापक-वह्नि-समानाधिकरण-रासभवानिति ज्ञानस्यापि पक्ष-धर्म्मतांशे व्याप्ति-प्रकारकतया ततोऽनुमितेर्वारयितुमशक्यत्वादिति। "धूमत्वादिमतौ"ति, अत्र धूमत्वस्य सामानाधिकरण्य-सम्बन्धेन वह्नि-सामानाधिकरण्ये स्वरूपतः * प्रकारत्वे धूमत्व-विशिष्ट-तादृश-सामानाधिकरण्यमेव व्याप्तिः, इतरथा † तु धूमीय-तादृश-सामानाधिकरण्यं

---

* तथाच धूमत्वस्य स्वरूपतः प्रकारत्वं पारतन्त्र्येणच बोध्यम्। एतन्मते धूम-व्यापक-वह्नि समानाधिकरणधूमवान् पर्व्वत इत्येवं परामर्शाकारः। सामानाधिकरण्योद्देश्यतावच्छेदकीभूतं धूमत्वं धूमे प्रकारीभूय सामानाधिकरण्येऽपि प्रकारीभूय भासत इत्यभिप्रायः।

† "इतरथा" धूमत्वस्य स्वरूपतो भानानङ्गीकारे इत्यर्थः।

तत्प्रकारक-पक्षधर्म्मता-ज्ञानमनुमिति-हेतुः। "तद्वती"ति सामानाधिकरण्यवतीत्यर्थः। अत्र च (१) सामानाधिकरण्य-विशिष्ट-धूमत्वं व्याप्तिस्तत्प्रकारक-ज्ञानञ्च धूमो वह्नि-समानाधिकरण इति ज्ञानोत्तर-कालीनं, तत्रापि धूमत्वस्य स्वरूपत एव भानं न तु धूमत्वत्वेनेति न गौरवम्। न च हेतु-निष्ठ-सामानाधिकरण्यमित्यनेनैव रासभादि-वारणात् हेतुतावच्छेदकवतीत्यस्याप्रवेशात्, कथं विनिगमना-विरह इति वाच्यम्। वह्निमान् महानस-वृत्तित्व-विशिष्टादित्यादौ महानस-वृत्तित्व-विशिष्टत्वेन रासभस्यापि हेतुत्वात् तद्वारणासम्भवादिति। "अभिन्नेवे"ति, तथा चैकैव हीति ग्रन्थस्तदभिप्रायक एवेति भावः।

---

दीधितिः।

अयं कपि-संयोग्येतद्वृक्षत्वादित्यादि-संग्रहायासमानाधिकरणान्तम्। यत्त्विदं संयोगि-द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्-संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभावस्य वृत्तावविरोधात्। तत्र चातीन्द्रियस्यापि संयोगस्य सत्त्वात्, परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इति नाध्यक्षमिति तन्न द्रव्ये संयोग-सामान्याभावे मानाभावात्। न च यो यदीय-यावद्विशेषाभाववान् स तत्सामान्याभाववानिति

---

(१) तत्राच इति न पुस्तके।

व्याप्तेर्यावत्-संयोगाभावा एव मानं, यत्तदर्थयोरननु-गमादेकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च। एतेनायं संयोग-सामान्याभाववान् संयोग-यावद्विशेषाभाववत्त्वादिति निरस्तं, व्यर्थ-विशेषणत्वादप्रयोजकत्वात् निर्गुणत्वादेरुपाधित्वाच्च।

---

दीधिति-प्रकाशः।

"अयं कपि-संयोगी"ति। कपि-संयोगीति पदस्य साध्य-वाचक-पदत्वमाविष्कर्त्तुं "अय"मिति पक्ष-पदस्य निर्द्देशः। एव-मन्यत्रापि। "तत्" असमानाधिकरणान्तम्। द्रव्ये कथं संयोग-सामान्याभाव इत्यत आह "संयोगस्ये"ति। तर्हि संयोग-सामान्याभावस्य कथं नाध्यक्षतेत्यत आह "तत्र चे"ति। "तत्र" द्रव्ये, "अतीन्द्रियस्ये"ति तथाच न योग्यानुपलब्धिरिति भावः। ननु प्रतियोगितावच्छेदकावच्छिन्न यत्किञ्चित्प्रतियोगि-योग्यतैव संसर्गा-भाव-प्रत्यक्षे तन्त्रमिति-मते तथा स्यादत आह "परित" इति। द्रव्ये उद्भूत-रूपवन्महत् संयोग-सामान्याभावाप्रत्यक्षत्वमपि परितः प्रतियोग्युपलब्धेर्दोषादेवेत्यत आह "परित" इति तु कश्चित्। (ननु संयोगसामान्याभावस्य प्रत्यक्षाभावेऽपि अनुमानमेवमानं भविष्यतीत्याशङ्कते) (१) "यो यदीये"ति। यो यद्धर्म्मः *

---

* अत्र यद्धर्म्मः प्रतियोगितावच्छेदकत्वेन विशेषणीयस्तेन गुरुधर्म्मावच्छिन्ना-भावाप्रसिद्धा न दोषः।

(१) ( ) चिह्नितपाठो नास्ति न।

व्याप्य †' धर्म्मावच्छिन्न-प्रतियोगिताक-यावदभाववान् स तद्धर्म्मावच्छिन्नाभाववानित्यर्थः । "एके"ति, ( विभिन्नावच्छेदकानवच्छिन्न-यावद्विशेषाभाववत्त्वस्य फलतोऽनवच्छिन्न-यावद्विशेषाभाववत्त्वस्येत्यर्थः ) (१) । अत्र यद्यपि यथाश्रुते संयोग-सामान्याभाववति गुणे संयोग-यावद्विशेषाभावानां व्याप्यवृत्तितयाऽवच्छेदकाभावेन साध्याव्यापकतया नोपाधित्वम् । अनवच्छिन्न-वृत्तिक-यावद्विशेषाभावे विवक्षितेऽपि कपि-संयोग-सामान्याभाववति मूलावच्छिन्न-वृक्षे यावद्विशेषाभावान्तःपाति तद्वृक्षीय-कपि-संयोगाभावस्यावच्छिन्न-वृत्तिकस्य सत्त्वादनवच्छिन्न वृत्तिक-यावद्विशेषाभावस्यासम्भवेन तथैव दोषः । मिथोऽनवच्छेदकानवच्छिन्न-वृत्तिक-यावद्विशेषाभाववत्त्व-रूपे विवक्षितेऽपि यत्राग्रे मूले च कपि-संयोगो न मध्ये (२) तत्राग्रीय-कपि-संयोगाभावस्य मूलीय-कपि-संयोगाभावस्य च मिथोऽनवच्छेदकमूलाग्रावच्छिन्ने सत्त्वा-(३) त्तथैव दोषः, तथापि एकावच्छेदकानवच्छिन्न-वृत्तिकत्वावच्छिन्नवृत्तित्वोभयाभाववद्यावद्विशेषाभावस्येत्यर्थः (४) । तेन गुणे संयोगाभावस्यावच्छेदक-विरहेऽपि नाप्रसिद्धिः । "एतेन" उक्तो-

---

† अत्र व्याप्यधर्म्मे उभयावृत्तित्वविशेषणं देयम् अन्यथा तत्-संयोगान्य-संयोगत्वावच्छिन्नाभावमादाय सद्धेतावतिव्याप्तिः स्यादिति ।

(१) ( ) चिह्नितपाठो नास्ति च ।

(२) न मध्ये इत्यत्र मध्ये कपिसंयोगसामान्याभाव इति ग ।

(३) मूलाग्रावच्छिन्नतया इति च ।

(४) विशेषाभाववत्त्वमित्यर्थ इति च

याधिना। अभाववत्त्वादित्येव हेतुर्वाच्य इत्यत आह "अप्रयोजक-त्वा"दिति। निर्गुणत्वं गुणवद्भिन्नत्वम्, आदिना निष्क्रियत्व-परिग्रहः। अत्र द्रव्यो न संयोगसामान्याभाववान् निर्गुणत्वाभा-वादिति न प्रत्यनुमानं, संयोग-सामान्याभावाभावस्य संयोग-रूप-त्वेन सिद्ध-साधनात्। किन्तु संयोग-सामान्याभावो न द्रव्य-वृत्तिर्निर्गुणत्व--व्याप्यत्वादित्यनुमानाद्‌द्रव्य-वृत्तित्वाभाव-सिद्धिरिति ध्येयम्।

---

दीधितिः।

न च प्रतियोग्यनवच्छेदकतयैव द्रव्यत्वादेरभावाव-च्छेदकत्वं, गुणाद्यनवच्छेदक-प्रमेयत्वादेस्तदभावावच्छेद-कत्व-प्रसङ्गात्, यथा च घट-पूर्व्व-वर्त्तित्वस्य प्रति दण्डं वह्नि-सामानाधिकरण्यस्य वा प्रति धूमं भिन्नत्वेऽपि दण्डत्वं धूमत्वं वा तत्सामान्यस्यावच्छेदकं, तथैव संयोग-सामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वा-च्चेति सम्प्रदाय-विदः।

---

दीधिति-प्रकाशः।

ननु यदभावाधिकरणे प्रतियोगिनो वृत्तौ यदनवच्छेदकं तत् तदभावावच्छेदकं, गुणाभावश्च न गुणाधिकरणे इत्यतो "यथे"ति। "प्रतिदण्ड"मिति "भिन्नत्वेऽपी"त्यनेनान्वितम्। ननु तत्तदभाव-

हित-पूर्व्व-वर्त्तिताया अवच्छेदकं न दण्डत्वं अतिप्रसङ्गात्, किन्तु अव्यवहित-पूर्व्ववर्त्ति-जातीयतायाः, सा च न भिन्नेत्यतः संयोग स्थल एवानुरूपं दृष्टान्तमाह "वह्नी"ति। वह्नि-सामानाधिकरण्यं वह्नि-संयोगि-संयोगः। "तत्सामान्यस्य" घट-पूर्व्ववर्त्तित्व-सामान्यस्य। वह्नि-सामानाधिकरण्य-सामान्यस्य च। नन्वकाश-संयोग एव व्याप्यवृत्तिः, तस्यापि वृक्षादौ यत्किञ्चिदवच्छेदेनैव (१) वृत्तेः, आकाशे सर्व्वावच्छेदेन वृत्त्यसम्भवाच्च।

दीधितिः।

नवीनास्तूत्पत्ति-कालावच्छेदेन घटादौ गुणस्य प्रलयावच्छेदेन गगनादौ संयोगस्य, सामान्याभावो वर्त्तते, तथा धूमवत्यपि विरहो दहनस्य इह पर्व्वते नितम्बे हुताशनो न शिखरे इति प्रतीतेः, संयोगेन द्रव्यस्याव्याप्यवृत्तित्वात्, वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्त्वाच्च, एवं प्रतियोगि-मतोरपि काल-देशयोर्देश-काल-भेदावच्छेदेन तदभावः, तथाच तत्तत्साध्यकाव्याप्ति-वारणाय तत्, नोपादेयञ्च सर्व्वथैव व्याप्यवृत्ति-साध्यके, साध्य-साधन-भेदेन व्याप्ति-भेदादिति वदन्ति।

(१) यत्किञ्चिदवच्छेदकावच्छेदेनैवेति च।

दीधिति-प्रकाशः।

"गुणस्ये"ति "सामान्याभाव" इत्यनेनान्वितम्। "वृत्ते"-रिति, "वृत्तेः" संयोगस्य शिखरावच्छेदेनासत्त्वात् तेन सम्बन्धेन वह्नेः सर्व्वावच्छेदेन सत्त्व-रूपं व्याप्यवृत्तित्वमत्यन्तासम्भावितमित्यर्थः। न च संयोगस्य वृत्तेः समवायस्य मूले सत्त्वेऽपि संयोग-सत्त्ववदिदमप्युपपत्स्यते (१) इति वाच्यं तत्राप्यवच्छिन्न-समवायस्यैव वृत्तित्वात्, तस्य च मूलादावभावादिति। एवं समवाय-सम्बन्धेनापि द्रव्यस्य दैशिकमव्याप्यवृत्तित्वं दशासु न पट इति प्रत्ययादिति ध्येयम्। "प्रतियोगिमतो"रिति, प्रतियोगिमतः कालस्य प्रतियोग्यनधिकरणदेशावच्छेदेन, प्रतियोगिमतो देशस्य च प्रतियोग्यनधिकरण-कालावच्छेदेन तदभाव इत्यर्थः। "तत्तत्-साध्यके"ति। गुणवत् संयोगवद्वा द्रव्यत्वात्, वह्निमान् धूमात्, गोमान् एतत्कालत्वात्, रूपवान् पृथिवीत्वात्, इत्यादेर्वारणायेत्यर्थः, "व्याप्यवृत्तो"ति येन रूपेण येन सम्बन्धेन च यद्व्याप्यवृत्ति (२) तेन रूपेण तेन सम्बन्धेन तस्य (३) साध्यतायामित्यर्थः। तेन संयोगत्वेनाव्याप्यवृत्तेरपि संयोगस्य समवेतत्वेन साध्यतायां कालिकतयाऽव्याप्यवृत्तेरपि घटत्वस्य समवायेन साध्यतायां न प्रतियोगि-अधिकरण-पदमिति। अव्याप्यवृत्ति-साध्यके प्रतियोगि-अधिकरण-पदं क्वचित् देयम्। संयोगाभाववान् गुणत्वादित्यादौ

(१) उपपद्यत इति ग।

(२) यस्य व्याप्यवृत्तिता इति ग।

(३) तस्येति नास्ति ग।

तत्प्रयोजनाभावात्, * व्याप्यवृत्ति-साध्यके तु क्वापि हेतौ तन्न देय-
मित्याविष्कर्त्तुं सर्व्वथैवेति ।

---

दीधितिः ।

प्रतियोग्यसामानाधिकरण्यञ्च प्रतियोगितावच्छेद-
कावच्छिन्नासामानाधिकरण्यं, तेन अयं गुण-कर्म्मा-
न्यत्व-विशिष्ट-सत्तावान् जातेः भूतत्व-मूर्त्तत्वोभयवान्
मूर्त्तत्वादित्यादौ नातिव्याप्तिः । न चोभयत्वमेक-
विशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो
मनसि सहजत एव प्रतियोगि-व्यधिकरण इति वाच्यम्
उभयत्वं हि न विशिष्टत्वादनतिरिक्तं, न वा तदव-
च्छिन्नाभावस्तदवच्छिन्नाभावात्, वैशिष्ट्य-विरहेऽपि घट-
त्व-पटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्यक्ष-
सिद्धत्वात् । न च तत्र व्याप्तिर्नोभयत्वाधिकरणस्य
मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यं तथात्वेऽप्युभयत्वेन
रूपेण तत्रासत्त्वात्, नात्रोभयमिति प्रतीतेर्दुर्व्वारत्वात् ।

---

* ननु प्रतियोगिवैयधिकरण्यानिवेशे संयोगाभाववान् गुणत्वादित्यत्र संयोग-रूपसाध्याभावस्य हेत्वधिकरणे कालिकसम्बन्धेन वर्त्तमानतयाऽव्याप्तिरिति चेन्न गुणत्वादित्यस्य निष्ठगुणत्वादित्यर्थस्तथा च निष्ठगुणे तादृशसाध्याभावस्यावृत्तित्वेना-व्याप्त्यनवकाशादिति ।

दीधिति-प्रकाशः ।

"तेने"त्यादि। एकत्र समवायेनापरत्र स्वरूपेण साध्यता। इदञ्चैकोक्त्यभिप्रायेण, निष्कृष्ट-लक्षणे व्याप्य-वृत्तिसाध्यके प्रतियोगि-वैयधिकरण्याप्रवेशात्। तत्र पटान्यत्व-विशिष्ट-संयोगवान् द्रव्यत्वात् घट-पटसंयोग-घटभूतलसंयोगोभयवान् घट-पटान्यतरत्वादित्यादावतिव्याप्तिर्बोध्या। विशिष्टस्य सार्व्वभौममतेऽतिरिक्तत्वादत आह "भूतले"ति (१)।"तदभावः भूतल-मूर्त्तत्वोभयत्वावच्छिन्नाभावः। "सहजत एवे"ति, प्रतियोगितावच्छेदकावच्छिन्न-विवक्षां विनैव, मनो वृत्ति-केवल-मूर्त्तत्वस्य भूतल विशिष्ट-मूर्त्तत्व-रूप-प्रतियोगिनोऽन्यत्वादिति भावः। ननूभयत्वस्य विशिष्टत्वादतिरिक्तत्वेऽपि उभयत्वावच्छिन्नाभाव-प्रतीतेर्विशिष्टाभाव एव विषय इति तस्य विशिष्टमेव प्रतियोगीत्यत * आह "नवे"ति, "तदवच्छिन्नाभावः" उभयत्वावच्छिन्नाभावः। "तदवच्छिन्नाभावात् विशिष्टत्वावच्छिन्नाभावात्। अनतिरिक्त † इति विपरिणत-

---

* तथाचोभयत्वावच्छिन्नाभावस्य प्रतियोग्यसमानाधिकरणत्वात् तत्प्रतियोगितावच्छेदकमेवोभयत्वमिति नातिव्याप्तिरिति भावः।

† ननु नञ् द्वयानुधावनं व्यर्थमिति चेन्न एवं सत्युभयत्वं विशिष्टत्वादतिरिक्तं वैशिष्ट्यविरहेऽपि तयोरुभयत्वस्य सत्त्वात् तथाच हेतोः पक्षादिसत्त्वं पृथिवी जलत्वोभयाभिन्नत्व वैशिष्ट्याप्रसिद्ध्या हेत्वसिद्धिवारणायाऽत्र सामान्यमुखी व्याप्तिः करणीया। हेतुश्चैव तदविषयकप्रतीतिविषयत्वं यथाच यो यदविषयकप्रतीतिविषयः स तदतिरिक्त-इत्येवं करणे व्यभिचारः, घटाभावप्रतियोगित्वाविषयक-प्रतीतिविषयो घटः स न प्रतियोगित्वातिरिक्तः प्रतियोगित्वस्य प्रतियोगिस्वरूपत्वात्। न च

(१) अतिरिक्तत्वाद्भूतलेति इति च।

स्यानुषङ्गः। "उभयत्वस्ये"ति "प्रत्यक्षसिद्धत्वा"दित्यनेनान्वितम्। "तदभावस्य" तयोरभावस्य। न च विरुद्धयोरुभयत्वावच्छिन्ना-भावस्यातिरिक्तस्य सिद्धावपि समानाधिकरणयोरुभयत्वावच्छिन्ना-भाव-धीरेकविशिष्टापराभावमेवावलम्बत इति वाच्यम् भूतत्व-मूर्त्तत्वयोर्विरुद्धत्व-भ्रम-दशायामपि उभयत्वावच्छिन्नाभाव-प्रत्य-येन तथापि विशिष्टाभावस्याविषयत्वादिति। "तत्र" भूतत्व-मूर्त्तत्वोभयवानित्यादौ। "व्याप्तिरेवे"ति, तथाच लक्ष्यमेव तदिति भावः। "तथात्वेऽपि" उभयत्वाधिकरणस्य मूर्त्तत्वस्य सत्त्वेऽपि। "तत्र" मनसि। तथाच हेत्वधिकरण-सामान्ये साध्यतावच्छे-दकावच्छिन्नाधिकरणता-सत्त्व एव व्याप्ति-सत्त्वं न तु साध्यताव-च्छेदकाश्रय-सत्त्वे इति भावः।

---

दीधितिः।

अत्यन्तपदञ्चात्यन्ताभावत्व निरूपक-प्रतियोग्यसामा-नाधिकरण्यस्य अत्यन्ताभावत्व-निरूपकप्रतियोगितायाश्च लाभाय, अन्यथा सर्व्वस्यैवाभावस्य स्व-समानाधिकरणा-भावान्तर-भिन्नत्वात् तद्भेदस्य स्व-स्वरूपानतिरिक्ततया प्रतियोग्यसामानाधिकरण्यस्यैव दुर्लभत्वापत्तेः, सर्व्वेषा-मेवाभावानां हेतु-समानाधिकरणात्यन्ताभावत्व-निरू-

---

साध्यस्यापि तद्विषयकप्रतीतिविषयत्वं वक्तव्यं साध्याविशेषात्। अतो मन् इत्यानु-भावकं तदंशे तद्विषयकप्रतीत्यविषयाविषयत्वं व्यापके अर्थविशेषणता न दूष-णावहेति चिन्त्यम्।

पक-प्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्व-भेदस्य प्रतियोगित्वात् अभाव-साध्यकाव्याप्तश्चेति सम्प्रदाय-विदः ।

---

दीधिति-प्रकाशः ।

ननु ध्वंस-प्रागभावादीनां प्रतियोग्यसमानाधिकरण-पदेनैव वारणे लक्षणे अत्यन्त-पदं व्यर्थमत आह "अत्यन्तपदञ्चे"ति। "अत्यन्ताभावत्व-निरूपके"ति। एक एवाभावः कस्यचिदत्यन्ताभावः कस्यचिद्भेदोऽपि भवति, तत्र यस्यात्यन्ताभाव स एवा(१)त्यन्ताभावत्व निरूपक-प्रतियोगी तदसामानाधिकरण्य-लाभायेत्यर्थः । क्रमेण व्यावृत्तिमाह "अन्यथे"ति,"तद्भेदस्य" तयोरभावयोर्भेदस्य । "दुर्लभत्वापत्ते"रिति, सर्व्वस्यैवाभावस्य स्वात्मक-भेद-प्रतियोगि यदभावान्तरं तत्समानाधिकरणत्वादिति भावः । न च भाव-रूपाभावस्यैव प्रतियोग्यसामानाधिकरण्यं सुलभमितिवाच्यम् तस्यापि स्व-समानाधिकरण-भेद-भिन्नत्वात्, तद्भेदस्य चाधिकरण-स्वरूपत्वेन भेद-रूप-प्रतियोगि-समानाधिकरणत्वात्, अभाव-मात्राधिकरण इव अभावमात्रप्रतियोगिकोऽपि विशिष्टाभावाद्यात्मकोऽभावोऽधिकरणभिन्नो नेष्यते । अतएव * घट-ध्वंसवान् एतद्घटादित्यादौ सर्व्वेषामेव हेतु-समानाधिकरणाभावानां स्व-निष्ठ-घट-ध्वंसात्यन्ताभावत्व-निरूपक-प्रतियोगि-समानाधिकरण-तादृशाभावाप्रसिद्धयाऽव्याप्तिरिति परास्तम् । ( घटध्वंसा-

---

* अभावमात्रप्रतियोगिकाभाव स्वानतिरिक्तत्वादेवेत्यर्थः ।

(१) एवेति नास्ति ग ।

त्यन्ताभावस्य घटात्यन्ताभावात्मकस्याधिकरणानात्मकत्वादिति भावः )। (१)

यद्यपि साध्यतावच्छेदक सम्बन्धेन प्रतियोगितावच्छेदक-सम्बन्धेन वा प्रतियोग्यसामानाधिकरण्यं सुलभमेव तथापि यथा-श्रुताभिप्रायेणेदम्! साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसामा-नाधिकरण्य विवक्षणे अभावसाध्यके प्रतियोग्यसामानाधिकरण्या-प्रसिद्धिरेवेति। "हेतु-समानाधिकरणे"ति, हेतु-समानाधिकरण-श्चासावत्यन्ताभावत्व-निरूपक-प्रतियोग्यसमानाधिकरणश्चेति स तथा तस्य। "अभावसाध्यके"ति, घटत्वाभाववान् पटत्वादित्यादौ पटत्व-समानाधिकरणस्य गोत्वाभावस्य अत्यन्ताभावत्व निरूपक-प्रतियोगि-यद्गोत्वं तदसमानाधिकरणस्य घटत्वाभाव-भिन्नत्वात् घटत्वाभावत्वं प्रतियोगितावच्छेदकमेवेत्यव्याप्तिः।"सम्प्रदाय"इत्य-स्वरस-बीजन्तु यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्यादिविवक्षाया आवश्यकत्वे अत्यन्त-पदस्य वैयर्थ्यमेवेति।

दीधितिः।

अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रल-यस्य गो-ध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात्। संसर्गाभाव-मात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं, यदाऽदृष्टं तदा जन्यं ज्ञानं दुःखं वा, यदा तस्यादृष्टं तदा तदीयज्ञानमित्यादावतिव्याप्तिः, द्व्यणुकत्वादेर्द्र-

(१) ( ) एतच्चिह्नितपाठो नास्ति च पुस्तके।

गुणादि-शून्य-खण्डप्रलयादि-निष्ठ-ध्वंस-प्रागभाव-प्रतियोगितानवच्छेदकत्वात्। न हि तयोः सामान्याभावत्व-मतेऽपि एक-विशेष-प्रागभाव-विशेषान्तर-ध्वंसवत्यपि समये सामान्यावच्छिन्न-ध्वंस-प्रागभावयोः सम्भव इति चेन्न प्रतियोगिमत एव तद्ध्वंसादिमतोऽपि कालस्यात्यन्ताभावत्वेऽविरोधात् (१) अन्यथा अत्यन्ताभावस्य कालमात्रावृत्तित्व-प्रसङ्गात्। अयांस्तु विशेषो यदेकस्य देश-भेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति, देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वात्, तच्छून्ये च काले तदभावस्य प्रतियोगि-व्यधिकरणत्वात्।

---

दीधिति-प्रकाशः।

"गो-ध्वंसवत्त्वेने"ति, प्राचीन-मते गो-ध्वंसस्यापि गवात्यन्ताभाव-विरोधित्वादिति भावः। यद्यपि दैशिक-सम्बन्धेन गो-ध्वंसवत्येव गवात्यन्ताभावो नेष्यते, कालस्य च कालिक-सम्बन्धेनैव गो-ध्वंस सम्बन्धित्वमिति नद्वति गवात्यन्ताभाव-वृत्तौ न विरोधस्तथापि प्रतियोग्यसमवायिनो भूतलादेरिव कालस्यापि दैशिक-सम्बन्धेन गो-ध्वंसवत्त्वमित्याशयः। अतएवाश्रय-नाश जन्य-गुण-नाशस्य भूतलादि-देशे समये च वृत्तित्वं वक्ष्यति। इदञ्च कालिक-

---

(१) विरोधाभावादिति अन्यान्यपुस्तकगतः पाठः।

दैशिक-साधारण-सम्बन्धत्वस्यैकस्याभावात् दैशिक-सम्बन्धेनाभा-वस्य हेतु-समानाधिकरणत्वं विवक्षितमित्यभिप्रेत्य, अन्यथा गो-ध्वं-सस्य कालिकसम्बन्धेन गवात्यन्ताभाववद्वृत्त्वाविरोधात् प्रलयेऽपि गवात्यन्ताभावस्य कालिकसम्बन्धेन सत्त्वेनातिव्याप्त्यनवकाशादिति ।

न च साध्यतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिताकस्य नित्य-प्रतियोगिकस्यानित्य-प्रतियोगिकस्य वाऽत्यन्ताभावस्य हेत्व-धिकरण-वृत्तित्वाऽप्रसिद्ध्या कथमतिव्याप्तिरिति वाच्यं * पूर्व्व-क्षण-वृत्तित्व-विशिष्ट-गोत्वादेरभावस्यैव तादृशस्य प्रसिद्धेः ।

"संसर्गे"ति, अत्यन्ताभाव-पदेन संसर्गाभावमात्रोक्तावपीत्यर्थः । तथाच गोत्वावच्छिन्न-ध्वंस एव दैशिकतया प्रलये वर्त्तत इति नातिव्याप्तिरिति भावः । "यदास्पन्द" इति गोत्वावच्छिन्न-याव-द्गो-नाशानन्तरं स्पन्द-सत्त्वादतो द्व्यणुक-पर्य्यन्तानुधावनम् । अत्र च स्पन्द-नाशान्तरमेव द्व्यणुक-नाशादिति भावः । अत्र च व्यभि-चारित्वं न महाप्रलये तत्र स्पन्दाभावात्, किन्तु खण्ड-प्रलये, तत्र च द्व्यणुकत्वावच्छिन्न-ध्वंसाभावादतिव्याप्तिरिति भावः । ननु (१) चरम-परमाणु-कर्म्मणां चरमोत्तर-संयोग-नाश्यानामधिकरणे म-हाप्रलयाव्यवहित-पूर्व्व तृतीय-क्षणे द्व्यणुकत्वावच्छिन्न-ध्वंस-सत्त्वा-दतिव्याप्ति-सम्भव इत्यतो "यदाऽदृष्ट"-मिति । अत्र स्पन्द-वत्त्वस्य हेतुत्वेऽपि न क्षतिः । न च खण्ड-प्रलये स्पन्द-सत्त्वे

---

* अनित्यप्रतियोगिकात्यन्ताभावस्य तद्वृत्तिना सह विरोधात् न हेत्वधिकरण-वृत्तित्वं, नित्यप्रतियोगिकाभावस्य प्रतियोगिवैयधिकरण्याप्रसिद्धिरिति भावः ।

(१) नन्विति नास्ति ख ।

मानाभावः, अश्वमेधशतमित्यागम-प्रसिद्धेरेव मान-सत्त्वात्, न च क्रियां विना तत्तत्क्षण-मुहूर्त-घटितस्य वर्षस्य सम्भव इति। नित्यसुखाभिव्यक्तिर्मुक्तिरिति मते यदाऽदृष्टं तदा जन्यं ज्ञान-मित्यत्र व्याप्तिरस्त्येवेत्यतो "दुःखं वे"ति। अत्रापि महाप्रलया-व्यवहित-प्राक्क्षणे महाप्रलय-जनकादृष्ट-शालिनि दुःखत्वावच्छिन्न-ध्वंस-सत्त्वादतिव्याप्तिः, स्वसाक्षात्कार-नाश्यस्य दुःखस्य महा-प्रलयाव्यवहितप्राक्क्षणेऽसम्भवादत आह "यदा तस्यादृष्ट"मिति, अत्र च तत्पुरुषीय-चरम-ज्ञान-ध्वंसस्य तज्जनकादृष्ट-ध्वंसस्य च युग-पदेव सम्भवान्न तत्पुरुषीयादृष्ट-सत्त्व-काले तत्पुरुषीय-ज्ञानत्वाव-च्छिन्न-ध्वंस-सम्भावना। व्यभिचारस्तु खण्डप्रलये सुषुप्त्यादौ चेति। "द्व्यणुकत्वादे"रिति, खण्डप्रलये केषाञ्चित् द्व्यणुकानां ध्वंसस्य केषाञ्चित् प्रागभावस्य च सत्त्वेन द्व्यणुकत्वस्य तत्प्रतियोगितानति-रिक्त-वृत्तित्वेन तत्प्रतियोगितानवच्छेदकत्वादित्यर्थः।

ननु द्व्यणुकत्वावच्छिन्नानधिकरण-(१)वृत्तित्व-विशिष्टस्यैव द्व्यणुक-ध्वंसस्य प्रतियोगितावच्छेदकं द्व्यणुकत्वम् अवच्छेद-कत्वञ्चेहान्यूनवृत्तित्वेनैवेत्यत आह "न ही"ति, वस्तुतो ध्वंस-प्रा-गभावयोरत्यन्ताभावाविरोधित्वात् अत्यन्ताभावस्यैव सामान्याव-च्छिन्न-प्रतियोगिताकत्वमिति भावः। "सम्भव" इति, अवच्छेद-कत्वस्यानतिरिक्तवृत्तित्व-नियतस्यैव तैरभ्युपगमादिति भावः। "तद्ध्वंसादौ"ति, प्रतियोगि-ध्वंसादौत्यर्थः।

"विरोधाभावा"दिति, न च साधकाभाव एव बाधकः

---

(१) वाक्येऽधिक पाठः ख।

प्रलये गौर्नास्तीति प्रतीतेरेव साधकत्वादिति । "अन्यथा" ध्वंस-प्रागभावयोरपि (१) अत्यन्ताभाव-विरोधित्वे । "अत्यन्ताभावस्य" कालिक-सम्बन्धावच्छिन्न-प्रतियोगिताकस्य विशिष्टाभावातिरिक्तात्यन्ताभावस्य दैशिक-सम्बन्धेन काल-मात्रावृत्तित्व प्रसङ्गादिति । तेन समवाय-सम्बन्धेन गवादेरभावस्य दैशिकतया गगनादौ वर्त्तमानस्य कालिक सम्बन्धेन गवादेरभावस्य च कालिकतया काले सत्त्व-सम्भवेऽपि न दोषः । ननु प्रतियोगितावच्छेदकीभूतकालिक-सम्बन्धेन प्रतियोगिनो विरोधिनः सत्त्वात् कथं तदभाव-सत्त्वमत आह"इयांस्त्वि"ति ।"एकस्य" प्रतियोगिमतः कालस्य । "देशभेद" प्रतियोग्यनधिकरण-देशः । "तथात्वं" अत्यन्ताभाववत्त्वम् । "अपरस्य" तद्ध्वंसादिमतः । "स्वरूपावच्छिन्नं" स्वस्य यद्रूपमधिकरणतावच्छेदकं तेनैवावच्छिन्नं न तु स्वरूप-सम्बन्धिना केनापि, तथा च नावच्छिन्न वृत्तिकमिति भावः । प्रतियोग्यधिकरण-काल-वृत्तेरत्यन्ताभावस्य कथं प्रतियोगि-वैयधिकरण्यमत-आह "तच्छून्ये"ति । कालिकसम्बन्धेन प्रतियोगि-शून्ये चेत्यर्थः। तथाच प्रतियोग्यनधिकरण-वृत्तित्व-रूपं तद्वैयधिकरण्यम् अक्षतमेवेति भावः ।

---

दीधितिः ।

न च संसर्गाभाव-विशेषोऽत्यन्ताभावः, संसर्गाभावत्वञ्च संसर्गारोप-जन्य-प्रतीति-विषयाभावत्व-रूपं अन्यता-घटक-नियम-घटितमिति वाच्यं तद्वदन्यावृत्तित्व-

---

(१) अपीति नास्ति ख ।

रूप-नियमस्य तत्र घटकत्वात्। एवं नियमान्तरस्यात्र-प्रवेशेऽपि न क्षतिरित्याहुः। वक्ष्यते च नियमाघटित मेव संसर्गाभावादि-लक्षणम्, अनुपदमेव च विवेचयिष्यते संसर्गाभावत्व-प्रवेशे प्रयोजन-विरहोऽव्याप्तिश्च।

दीधिति-प्रकाशः।

"संसर्गाभावविशेषः" सदातन-संसर्गाभावः। "संसर्गारोपे"ति, तादात्म्यातिरिक्त-सम्बन्धेन यः प्रतियोगिन आरोपस्तज्जन्य-धी-विषयो योऽभावस्तत्त्वमित्यर्थः। "तत्र" जन्यत्वे। "नियमान्तरस्य" संसर्गत्व घटक-नियमस्य। "अत्र" संसर्गाभावत्वे। तत्रापि तद्वदन्याप्रसिद्धत्वस्यैव निवेशादिति भावः। "आहुः" रित्यस्वारसं प्रकाशयति "वक्ष्यते चे"ति द्वयेन (१)। "नियमाघटित"मिति, आरोपस्य हेतुतायां मानाभावात्। अन्योन्याभाव-भिन्नाभावत्वं संसर्गाभावत्वं, तादात्म्यावच्छिन्न-प्रतियोगिताका-भावत्वञ्चान्योन्याभावत्वमिति। "प्रयोजन-विरह" इति, साध्य-तावच्छेदक-सम्बन्धेन स्व-प्रतियोग्यसम्बन्धित्वाभिधाने वह्निमान् धूमादित्यादावन्योन्याभावमादाय दोषाभावात् प्रयोजन-विरह एव। साध्यतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिता-विवक्षायां तादात्म्येन साध्यत्वे साध्यतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिताकात्यन्ताभावाऽप्रसिद्ध्याऽव्याप्तिरित्यर्थः।

(१) धन्येनेति ग।

दीधितिः ।

अथ ज्ञानवान् द्रव्यत्वात् विशेष-गुणवान् मनोऽन्य द्रव्यत्वात् जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः, साध्य-शून्यानामपि हेतुमतां विषयत्व-विशेषणत्वैकार्थसमवायैः साध्य-वत्त्वादिति चेन्नैवं प्रतियोगितावच्छेदक-सम्बन्धेन प्रति-योगिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्योक्त-त्वात् । भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमा-नाधिकरणः ।

---

दीधिति-प्रकाशः ।

वृत्ति-नियामक-सम्बन्धेन प्रतियोगि-वैयधिकरण्यं वाच्यं, विष-यता च न वृत्ति-नियामिका इत्यतो नातिव्याप्तिः सम्भवति अतो "विशेष-गुणवानि"ति । मूर्त्तमात्रस्यैव दिगुपाधित्वे कालोपाधा-विव दिगुपाधौ समवायादिना तत्तदनधिकरणे न दैशिक-सम्बन्ध-स्वीकारः तथेह मनसि विशेष-गुण इत्यप्रत्ययादतो "मनोऽन्ये"ति, अत्र व्यभिचाराधिकरणे दिक्-कालाविव । अत्र च दिशि दैशिक-सम्बन्धेन काले च कालिक-सम्बन्धेन प्रतियोगि-सत्त्वादिति न साध्याभावस्य प्रतियोगि-वैयधिकरण्यमिति । अत्र च मनोऽन्य-द्रव्यत्वाधिकरणे घटादावतीत-तत्तद्व्यत्यभाव एव प्रतियोगि-व्यधि-करणः प्रसिद्धः । दिक्-कालौ नेश्वरादतिरिच्येते इति मते इदं

सदनुमानमेवेत्यत आह "जातिमानि"ति। "एकार्थे"ति, जाति-समवायिनि स्वात्मक-स्वरूप-सम्बन्धेन समवायस्य सत्त्वात् समवायेऽपि जातेरेकार्थसमवायः। जातिः सतीत्यादिवत् समवायः सन्निति तुल्यवत्प्रतीतेरिति भावः। तादात्म्येन साध्यतायां संयोगादिना प्रतियोगि-व्यधिकरणस्य घटादेरभावस्य तादात्म्यावच्छिन्न-प्रतियोगिताया अप्रसिद्ध्याऽव्याप्तिरत आह "सम्बन्धि वे"ति। एतदेव स्पष्टयति "भवती"ति। "एवं" सम्बन्धित्वस्य निवेशे। "अन्योन्याभावोऽपी"ति। तथाच तत्र: शिंशपाया इत्यत्र तादात्म्येन साध्यतायां नाव्याप्तिरिति भावः।

दीधितिः।

**तद्विशिष्टस्य च हेत्वधिकरण-वृत्तित्वं वाच्यं, तेन नाव्याप्यवृत्ति-साध्यकासंग्रहः। तद्वृत्ति-भिन्नत्वन्तु नार्थः अव्याप्यवृत्ति-साध्यक-व्यभिचारिण्यतिप्रसङ्गात्।**

दीधिति-प्रकाशः।

ननु कपि-संयोगी एतत्त्वादित्यादौ कपि-संयोगाभावोऽपि गुणादौ कपि-संयोगवद्वृत्तित्वाभाववान् इत्यव्याप्तिरत"स्तद्विशिष्टस्ये"ति प्रतियोग्यधिकरण-वृत्तित्वाभाव-विशिष्टस्येत्यर्थः। हेत्वधिकरण-वृत्ते च तादृश-प्रतियोग्यसामानाधिकरण्य विशिष्टाभावाधिकरणता नास्तीति भावः। "तद्वृत्ति-भिन्नत्वं" प्रतियोगिमद्वृत्ति-भिन्नत्वम्। "अव्याप्यवृत्ती"ति, संयोगी-सत्त्वादित्यादौ संयोगा-

भावस्य संयोग-वद्वृत्तित्वेन तन्निष्ठत्वाभावात् तद्वृत्तित्वाभावस्तु हेत्वधिकरण-गुणाद्यवच्छेदेन वर्त्तत एवेति भाव:।

---

दीधिति:।

अत्र च सामानाधिकरण्यवतो न तदभाववत्त्वं, प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगि-वैयधिकरण्येत्यादि-विशेषणं वक्ष्यति। तच्च हेत्वधिकरणे बोध्यम्। प्रतियोग्यनधिकरणीभूत-हेत्वधिकरण-वृत्त्यभावेति पुनरभावान्तार्थ-निष्कर्ष:।

---

दीधिति-प्रकाश:।

अत्रास्वरसमाह "अत्र च"त्यादिना। "प्रतीति:" कपि-संयोगाभावे गुणे न कपि-संयोग-सामानाधिकरण्यमिति प्रतीति:। "अन्यथैव" तदवच्छेदकत्वाभावादि-विषयकतयैव। "वक्ष्यतीति" मणिकार:। "तच्च" प्रतियोगि-वैयधिकरण्यावच्छेदकावच्छिन्नत्वञ्च। "हेत्वधिकरण" इति, तेन कपि संयोग्येतत्त्वादित्यत्र कपि-संयोगाभावस्य गुणे प्रतियोगि-वैयधिकरण्यावच्छेदकावच्छिन्नत्वेऽपि नाव्याप्ति:। हेत्वधिकरणे प्रतियोगि-वैयधिकरण्यावच्छेदकावच्छिन्नो योऽभाव इत्यपेक्षया प्रतियोग्यनधिकरणीभूत-हेत्वधिकरण-वृत्त्यभावेत्यत्रलाघवात्तथैवाह "प्रतियोग्यनधिकरणीभूते"ति।

---

दीधिति:।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य-

चित्, तत्सामान्यस्य, प्रतियोगितावच्छेदक-यत्किञ्चिदव-च्छिन्नस्य वाऽनधिकरणत्वमुक्तं? आद्ये अव्याप्यवृत्ति-साध्यकाव्याप्तिः एक-प्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणात्। द्वितीये संयोग-सामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः; साध्याभाववतो द्रव्यस्य तत्प्रतियोगि-संयोग-विशेषाभाववत्त्वात्, नित्यत्वादि-विशिष्ट-द्रव्यत्वाभावात्मक-तत्प्रतियोगिनोऽधिकरणत्वाच्च, स्वाभावाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात्। तृतीये कपि-संयोगाभाववानात्मत्वादित्यादावव्याप्तिः, साध्याभावानां कपि-संयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियोगितावच्छेदक-गुण-सामान्याभावत्वावच्छिन्नानानधिकरणत्वात्।

---

दीधिति-प्रकाशः।

"प्रतियोगितावच्छेदके"त्यादि-षष्ठ्यन्तानि "अनधिकरणत्व"-मित्यत्रान्वितानि। "तत्सामान्यस्य" प्रतियोगितावच्छेदकावच्छिन्न-सामान्यस्य। प्रतियोगितावच्छेदकादि-यावत्त्वन्तु यावत्तदवच्छिन्नाप्रसिद्धेरेव नाशङ्कितम्। "तद्व्यक्त्यन्तरे"ति, प्रतियोगिव्यक्त्यन्तरेत्यर्थः। द्रव्ये संयोग-सामान्याभावस्य स्वमते सत्त्वेन संयोग-सामान्याभाववान् सत्त्वादित्यादिसद्धेतोरेवेत्यतो "द्रव्यत्वाभाववानि"ति। प्रथमे योजयति "साध्याभाववत" इति।

"तत्प्रतियोगी"ति, संयोग-स्वरूप-साध्याभावस्य प्रतियोगी यः कपि-संयोग-विशेषाभावस्तद्वत्त्वादित्यर्थः। संयोग-सामान्याभावस्येव संयोग-विशेषाभावस्यापि संयोग-रूपाभाव-प्रतियोगित्वादिति भावः। द्वितीये योजयति "नित्यत्वादौ"ति, नित्यत्व-विशिष्ट-द्रव्यत्वाभावात्मको यः साध्याभाव-प्रतियोगी तस्याधिकरणत्वात् "साध्याभाववतो द्रव्यस्ये"त्यन्वयः। "स्वाभावे"ति, स्वं नित्यत्व-विशिष्ट-द्रव्यत्वं तदभावाभावात्मकस्य नित्यत्व-विशिष्ट-द्रव्यत्वस्य द्रव्यत्वातिरिक्तत्वाभावादित्यर्थः। ननु चात्र सर्व्वस्यैवाभावस्य स्वीय-तत्तदधिकरण-वृत्तित्व विशिष्ट-स्वाभावेन प्रतियोगिना समं सामा-नाधिकरण्यात् एकाधिकरण-वृत्ति-गुणादि-रूपाभावस्यापि पूर्व्व-क्षण-वृत्तित्व विशिष्ट-स्वाभावेन प्रतियोगिना-सामानाधिकर-ण्यात् प्रतियोगि-व्यधिकरणाभावाप्रसिद्धया कथमतिव्याप्तिरिति चेत् अतिव्याप्तिपदमसम्भवपरमिति। वस्तुतो गगनाद्यभाव एव लक्षण्य:* प्रसिद्धया प्रतियोग्यसमानाधिकरण:। नित्यत्व विशि-ष्ट-गगनाभावस्य योऽभावस्तदभावो नित्यत्वमेव न गगनाभाव-स्तस्यातिप्रसक्तत्वादिति †। न चैवं नित्यत्व-विशिष्ट-द्रव्यत्वा-भावस्याभावोऽपि नित्यत्वमेव स्यादिति वाच्यं नित्यत्वस्य गुणादौ द्रव्यत्वस्यानित्ये द्रव्येऽतिप्रसक्तत्वात्। नित्यत्व-विशिष्ट-द्रव्यत्वस्यैव

---

* साध्यतावच्छेदकसम्बन्धसामान्ये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिमत्त्वे-त्व(उ)भयाभावघटितलक्षणद्वयस्य लक्ष्यः प्रसिद्धिर्बोध्येति भावः।

† अन्योऽपि गगनाभावस्तत्र च न नित्यत्वविशिष्टगगनाभावाभाव इति व्यभिचार इति भावः।

तदभावात्मकत्वादिति। "कपी"ति, प्राचां मते संयोग-सामान्याभावस्य द्रव्येऽभावात् विशेषणानुसरणम्। द्रव्यत्वाभाववानित्यादौ द्रव्यत्वाभावत्व-रूप-यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं द्रव्यस्य (१) सम्भवतीति नातिव्याप्ति सम्भव इति भावः। गुण-सामान्याभावस्योत्पत्ति-कालावच्छेदेन घटादौ सत्त्वात् घटत्वादिकमुपेक्ष्यात्मत्वानुसरणम्। न च समवायेन मेय-सामान्याभावस्य द्रव्यमात्र-समवेताभावस्य च प्रतियोगिनोऽनधिकरणत्वस्य घटादौ सम्भवात् कथं घटत्वादिकमुपेक्षितमिति वाच्यं प्रमेय-सामान्याभावस्याभावः सत्तैव, द्रव्यमात्र-समवेताभावाभावो द्रव्यत्वमेव लाघवादिति कपि-संयोगात्मक-साध्याभावस्य तयोरप्रतियोगित्वादिति। "गुणाना"मिति गुण-सामान्याभावत्वस्य तत्प्रतियोगितावच्छेदकत्वमाविष्कर्तुम्।

दीधितिः।

मैवं यादृश-प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तदनवच्छेदकत्वस्योक्तत्वात्।

दीधिति-प्रकाशः।

तृतीय-पक्षानुसारेण परिहरति "यादृशे"ति। यादृश्याः प्रतियोगिताया अवच्छेदकावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य तादृश्याः प्रतियोगिताया अनवच्छेदकत्वस्येत्यर्थः। कपि-संयोगाभाववानात्मत्वादित्यादौ गुण सामान्याभावत्वावच्छिन्न-प्रतियोगि-

(१) द्रव्ये इति च।

तानवच्छेदकत्वस्य कपि-संयोगाभावत्वे सत्त्वाद्याप्तिः । द्रव्यत्वाभाववान् सत्त्वादित्यादौ तु द्रव्यत्वाभावत्वावच्छिन्न-प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितावच्छेदकत्वस्य द्रव्यत्वाभावत्वे सत्त्वान्नातिव्याप्तिः ।

दीधितिः ।

अत्र च ग्राह्य-सामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र वर्त्तमानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्यम् । तेन धूम-समवायि-निष्ठाभावस्य संयोगावच्छिन्न-प्रतियोगिताया धूम-संयोगि-निष्ठाभावस्य च समवायावच्छिन्न-प्रतियोगिताया अनवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

दीधिति-प्रकाशः ।

"तत्र वर्त्तमानत्व"मिति, अभावस्य वृत्तौ तु सम्बन्धो (१) न निवेशनीयः (२) प्रयोजनाभावात् । अव्याप्यवृत्ति-साध्यके तु अभावस्य दैशिक-सम्बन्ध एव निवेशनीयः, तेन जातिमान् सत्त्वादित्यादौ जात्यभावस्य कालिकतया हेतुमति वृत्तावपि न क्षतिः । दैशिक-

(१) सम्बन्धभेद इति च ।

(२) निवेशनीय इत्यत्र विवक्षित इति च ।

सम्बन्धः क्वचिद्दैशिक-विशेषणता, क्वचिच्च समवायादिरपि। तेन द्रव्यत्वाभाववान् सत्त्वादित्यादौ दैशिक-विशेषणतया द्रव्यत्वादेः प्रवृत्त्या नातिव्याप्तिः। वस्तुतस्तु द्रव्यत्वं नास्तीतिवत् द्रव्यत्वाभावो नास्तीति सम्बन्धांशे तुल्याकार-प्रतीति-बलाद्भावानामपि दैशिक-विशेषणता स्वीकार्य्या। अतएव द्रव्यत्वाभाववज्जातित्वादित्यादौ (समवायसम्बन्धावच्छिन्न-प्रतियोगिताक-द्रव्यत्वाभावे साध्ये) (१) जातित्वाधिकरणे (२) समवाय-सम्बन्धेन वृत्तेरप्रसिद्ध्या दैशिकतया(३) वृत्तिविवक्षणे द्रव्यत्वाभाववान् मेयत्वादित्यादावतिव्याप्तिरिति दूषणमनवकाशम्। कालिक-सम्बन्धावच्छिन्न-प्रतियोगिताके आकाशाभावाभावे (४) साध्ये आत्मत्वादि-हेतौ कालिक-सम्बन्धेनात्मत्वाधिकरणे वृत्तेरप्रसिद्ध्या दैशिक-विशेषणतया तद्वृत्त्याकाशाभाव-प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरतो व्याप्यवृत्ति-साध्यकेऽपि तत्र प्रतियोगि-वैयधिकरण्यं देयमिति। यादृश-सामानाधिकरण्ये साध्यस्य यादृशः सम्बन्धः प्रविष्ट इत्यन्वयः। "तेन सम्बन्धेन यो हेतुमानित्य"स्य फलमाह "धूम-समवायी"त्यादिना। "साध्यस्य चे"त्यस्य (५) फलमाह "धूम-संयोगी"त्यादिना। प्रतियोगितावच्छेदक सम्बन्धेन प्रतियोग्यसम्बन्धि-

(१) ( ) एतच्चिह्नमध्यस्थितः पाठोनास्ति ख।

(२) जातित्वाद्यधिकरणे इति ख।

(३) दैशिकविशेषणतया इति ख।

(४) आकाशाभावत्वाभावे इति ख।

(५) चेत्यादेरिति ख।

हेतु-सम्बन्धि(१)तत्त्वभावस्य साध्यतावच्छेदक-सम्बन्धावच्छिन्ना या प्रतियोगितेत्यत्र सम्बन्ध-द्वय-प्रवेशे गौरवादाह "यद्वेति" ।

दीधितिः ।

यद्वा साध्यतावच्छेदक-सम्बन्धेन प्रतियोग्यसम्बन्धित्वं वक्तव्यम् । तथाच सम्बन्ध-भेदेन प्रतियोगिता न विशेषणीया ।

दीधिति-प्रकाशः ।

तादात्म्येन साध्यतायां साध्यतावच्छेदक-सम्बन्धेन प्रतियोग्यधिकरणत्वस्याप्रसिद्धेः "प्रतियोग्य-सम्बन्धित्व"मिति । सम्बन्धभेदेन" साध्यतावच्छेदक-सम्बन्धेन ।

दीधितिः ।

एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयम् । तथाच धर्म्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्वहति । तथा हि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्य-सम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदक-वह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्ब-

(१) हेतुसम्बन्धीतिनास्ति ख ।

न्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम्। एवं धर्म्मिणो धर्म्म-व्याप्यत्व-व्यापकत्वे बोध्ये।

---

दीधिति-प्रकाशः।

"एवं स्थिते" प्रतियोग्यसम्बन्धित्व-घटित-प्रतियोग्यसामानाधिकरण्य निर्व्वचने। "सामानाधिकरण्यादौ" सर्व्वत्राधिकरणत्वांशे, आदिना हेतु-सामानाधिकरण्येत्यस्य परिग्रहः। "धर्म्मिणः" व्याप्य-व्यापक धर्म्मवतो धूमवतो वह्निमतः। "एव"मित्यादि, "धर्म्मिणः"धूमवतः। "धर्म्म-व्याप्यत्वं" वह्नि-व्याप्यत्वम्।"धर्म्मिनः" वह्निमतः। "धर्म्म-व्यापकत्वं" धूम-व्यापकत्वञ्चेत्यर्थः।

---

दीधितिः।

अतएव जलादीनां पृथिवीत्वाभाव-व्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते। यथाच यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्ष-विशिष्टत्व-ज्ञाने यादृशेन सम्बन्धेन च साध्य-व्यापकत्वमवगतं तादृशेनैव साध्य-पक्षयोर्विशिष्टानुमितिः। तेन न धूमावयवे संयोगेन न वा समवायेन पर्व्वते वह्नि-धीः। तथैवावगत-व्याकता-घटक-सम्बन्धेन व्यापकस्याभाव-ग्रहे गृहीत-व्याप्यता-घटक-सम्बन्धेन व्याप्यस्याभावः सिध्यतीति। कथमन्यथा समवायेन वह्नि-विरहिणि

महानसे संयोगेन संयोगेन वा वह्नि-विरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते, निवर्त्तते च संयोगेन वह्नि-विरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते। तथाच तादात्म्य-सम्बन्धेन जलादीनां व्याप्यत्व-ग्रहाद् व्यापक-निवृत्त्या तादात्म्येनैव तेषामभावः सिध्यति, स एव चान्योन्याभावः ।

दीधिति-प्रकाशः ।

"अतएव तादात्म्येन व्याप्तेर्व्यवस्थापनादेव(१)। ननु जलादीनां पृथिवीत्वाभाव व्याप्यत्वेऽपि पृथिवीत्वाभाव-स्वरूप व्यापकाभावेन जलादीनामत्यन्ताभाव एव सिध्येन्नान्योन्याभाव (२) इति तदुपपादयति "यथाचे"त्यादिना। क्रमेण फलमाह "तेने"त्यादिना। धूमावयवे समवायेन तादृश-धूमवत्त्व-ग्रहेऽपि न संयोगेन (३) वह्न्यनुमितिः, पर्व्वते संयोगेन धूमवत्त्वग्रहेऽपि न समवायेन वह्न्यनुमितिरित्यर्थः। न चात्र बाध एव विरोधी, तदनवतारेऽपि तथात्वस्यानुभव-सिद्धत्वादिति। अन्वयिनि-नियमं व्यवस्थाप्य तद्दृष्टान्तेनैव व्यतिरेकिण्यपि नियमं व्यवस्थापयति "तथैवे"ति। एतदेवान्वय-व्यतिरेकाभ्यां द्रढयति "कथमन्यथे"ति। कथमन्यथा

(१) व्याप्तिव्यवस्थापनादेव इति च।

(२) जलादीनामत्यन्ताभावसिद्धावपि नान्योन्याभावसिद्धिरिति च।

(३) संयोगेनेतिनास्ति च।

इति नियम उपपद्यते इत्यन्वयः। नियमं दर्शयति "समवायेने"-त्यादिना। संयोगेन न निवर्त्तते इत्यन्वयः। "निवर्त्तते चे"त्यत्र "धूम" इत्यनुषङ्गः।

---

दीधितिः।

इत्थमेव च तादात्म्याद्वृक्ष-शिंशपयोर्व्याप्ति-निश्चय इति सङ्गच्छते।

---

दीधिति-प्रकाशः।

प्राचीन-ग्रन्थ-सम्मतिं दर्शयति "इत्थमेव चे"ति तादात्म्येन व्याप्ति-व्यवस्थापनेनैव चेत्यर्थः। "वृक्ष-शिंशपयो"रिति, या शिंशपा स वृक्ष इति क्रमेणेत्यर्थः।

---

दीधितिः।

अतएव गोत्वत्वाद्यग्रह-दशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्व-ग्रहे सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादि-व्यतिरेकः सिध्यति।

---

दीधिति-प्रकाशः।

अन्वयव्युत्पत्त्यकमाह "अतएवे"ति। यत एव च तादात्म्ये-नापि व्यापकत्वमतएवेत्यर्थः। गोत्वत्वोपस्थिति-दशायाञ्च तत्र

गोत्वस्यैव समवायेनानुमितिरित्यादि वक्तुं शक्यत इति तदग्रह-दशायामित्युक्तम्। अत्र च स्वरूपत उपस्थित एव गोत्वे तादृश प्रति-योगितानवच्छेदकत्व-ग्रहो विलक्षण-विषयता शाली अनुमिति-हेतुः *। अन्यथा तादृश प्रतियोगितानवच्छेदक-गोत्वावच्छिन्न-सम्बन्धी साध्यादिरित्येवं रीत्या ग्रहस्य गोत्वत्वाद्यग्रह-दशायामस-म्भवादसंगत्यापत्तेः। न चाभाव-ग्रहेऽधिकरणतावच्छेदक-प्रकारि-ण्याधिकरणोपस्थितिः कारणमिति स्वरूपत उपस्थिते गोत्वे कथं तादृश-प्रतियोगितावच्छेदकत्वाभाव-ग्रह(१) इति वाच्यम् अभाव-लौकिक प्रत्यक्षं प्रत्येव तथा हेतुत्वस्याभ्युपगमात् †। (अत्र त्वभा-वस्यालौकिकप्रत्यक्षाङ्गीकारात्) (२)। (केचित्तु प्रतियोगिता-धर्मि-

---

* साध्याभावाधिकरणाभावप्रतियोगितानवच्छेदकीभूत-गोत्वावच्छिन्नसाध्यवती-यमिति ज्ञानं हेतुरिति भावः।

† न च स्वरूपतो गोत्वविशेष्यकानवच्छेदकत्वप्रकारकज्ञानस्य तादृशानुमिति-हेतुत्वे तत्र गोत्वं प्रतियोगितावच्छेदकमिति व्यभिचारधीकाले तदुत्तरं निर्द्धर्मितावच्छेदकगोत्व-विशेष्यकतादृशानवच्छेदकत्वज्ञानोत्पादे बाधकाभावात्तदुत्तरं तादृशानुमित्यापत्तिरिति वाच्यं तादृशव्यभिचारज्ञानस्य प्रतिबध्यतावच्छेदकं गोत्वत्वाति-रिक्तधर्मानवच्छिन्न-गोत्ववृत्तिविशेष्यतानिरूपित-तादृशप्रतियोगितानवच्छेदकत्व-प्र-कारकताशालिज्ञानत्वमेव तु तादृशव्यभिचारज्ञानकाले निर्द्धर्मितावच्छेदक-गोत्वविशेष्यक-तादृशानवच्छेदकत्वज्ञानस्याप्युत्पत्तौ ततस्तदानीं कारणाभावादेवा-नुमित्यापत्त्यसम्भवादिति ध्येयम्।

(१) उपस्थिते गोत्वे तादृशप्रतियोगितावच्छेदकत्वाभावोदुर्ग्रहः इति च ।

(२) ( ) चिह्नितस्थले अन्यत्वभावस्योपनीतभानतया तथा हेतुत्वस्यानभ्युपगमा-दिति पाठः च ।

त्वोभयाभाव-घटित-लक्षणाभिप्रायेणेदं*मित्याहुरिति) (१)। वस्तुतो लक्षणाभिप्रायेणेदं, तादृश-प्रतियोगिता-सामान्ये स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकावच्छेद्यत्वं-साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वोभयाभाव इत्यत्र तादात्म्येन गोः साध्यत्वे गो-सम्बन्धि-निष्ठाभाव इत्यादौ गोत्वस्य स्वरूपेणैव प्रवेशः, समवायेन गोत्वस्य साध्यतायान्तु स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव इत्यादौ गोत्वत्वस्य निवेशात् गोत्वत्वाद्यनुपस्थिति-दशायां तादृश-ज्ञाना-सम्भव इत्यत्र तात्पर्य्यम् (२)।

"तादात्म्येन गोः" "सिध्यती"त्यन्वयः।

---

दीधितिः।

एवञ्च संयोगेन गगनादेरपि द्रव्यत्व-व्याप्यत्वं वृत्त्य-नियामक--संयोगमात्रस्याभाव-प्रतियोगितावच्छेदक-सम्बन्ध-रूपत्वे साध्यतावच्छेदक-सम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादि-व्यापकत्वमपि, तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात्, सिद्धि-

---

* हेतुसमानाधिकरणाभावप्रतियोगिता-सामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभाव-तद्धर्मावच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति लक्षणानुसारेणेत्यर्थः, तादृशस्थाने शुद्धगोत्वस्यैव प्रकारत्वादिति : एवञ्चात्र तादृशप्रतियोगिता निरूपितोभयवत्ताव्यभिचारस्थानं समानप्रकारकतया प्रतिबध्यकमिति भावः।

(१) ( ) चिह्नितपाठोनास्ति ग।

(२) वस्तुत इत्यादि तात्पर्यमित्यन्तः पाठोनास्ति घ।

रपि तस्य तथैव, न तु वृत्त्यनियामक-सम्बन्धेन, तेना-सम्बन्धित्वादव्यापकत्वाच्च, व्यक्ती भविष्यति चैतदुपरिष्टात्।

---

दीधिति-प्रकाशः।

"एवञ्चे"ति, हेतु-सम्बन्धीत्यभिधाने चेत्यर्थः। "वृत्त्यनियामके"ति "संयोग-मात्रस्य" आधेयतानवच्छिन्न-संयोगस्य अतएव वृत्त्यनियामकस्येत्यर्थः। इह भूतले घटो नास्तीत्यादावाधेयत्वावच्छिन्न-संयोग (१) एव प्रतियोगितावच्छेदक-सम्बन्ध-विधया विषयः, तथैवानुभवात्। यदि आधेयत्वमविषयीकृत्य शुद्ध-संयोगमात्रं प्रतियोगितावच्छेदक-विधया विषयीकृत्याभाव-प्रत्ययः प्रामाणिकस्तदा गगनादेः पृथिवीत्वादि-व्यापकत्वमिति तात्पर्य्यार्थः *।

केचित्तु मात्र-पदं कृत्स्नार्थकं, तेन गगनवान् पृथिवीत्वादित्यत्र जलादि-निष्ठेन(२) वृत्त्यनियामक-संयोगेन वर्त्तते यो यस्तदभावस्य पृथिव्यां प्रतियोगि-व्यधिकरणस्य तादृश संयोगावच्छिन्ना या प्रतियोगिता तदनवच्छेदकत्वमादाय लक्षण-सङ्गतिः। अन्यथा गगनसंयोगमात्रस्यैव तादृशस्य तादृश-प्रतियोगितावच्छेदक-सम्बन्ध-रूपत्वं नान्यस्येत्युक्तेः † गगनाभाव-प्रतियोगितायां तादृश-संयोगावच्छिन्न-

---

* एतच्च गगनासंयुक्तस्य पदार्थस्य योऽभावस्तस्य प्रतियोगि-व्यधिकरणत्वेन तथात्वाच्च लक्षणसमन्वय इति भावः।

† एतन्मते गगनसंयोगत्वेनैव घटादिसंयोगत्वेनैव वा संयोगादीनां संसर्गता न तु शुद्धसंयोगत्वेनेति भावः।

(१) घटो नास्तीत्याधाराधेयत्वावच्छिन्न संयोग इति च। (२) जलादिनिष्ठेनेति च।

त्व-सत्त्वेन प्रतियोग्यसमानाधिकरणाभावान्तर-प्रतियोगितायां तादृश-संयोगावच्छिन्नत्वस्याप्रसिद्ध्या लक्षणासङ्गतिः स्यादिति व्याचक्षुः ।

"प्रतियोगितावच्छेदक-सम्बन्ध-रूपत्व" इति, तस्य प्रतियोगितानवच्छेदक-सम्बन्ध-रूपत्वे साध्यतावच्छेदक-वृत्त्यनियामक-संयोगावच्छिन्नायाः प्रतियोगिताया अप्रसिद्धिः स्यादित्यर्थः ।

द्वितीय-विवक्षानुसारेणाह "साध्यतावच्छेदके"त्यादि । इत्थञ्च वृत्त्यनियामक-संयोगस्याभाव-प्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः । तेन सम्बन्धेन प्रतियोग्यसम्बन्धिनि घटाद्यभाव एव तथाविधः प्रसिद्ध इति । ननूत्पत्तिकाले जन्यस्य प्रलये च नित्यस्य पृथिवीमात्रस्यैव गगनाभाववत्त्वात् कथं तस्य पृथिवीत्व-व्यापकत्वमत आह "तदभाववतोऽपी"ति, गगनाभाववतोऽपीत्यर्थः । ( "तत्सम्बन्धित्वात्" गगनादि-सम्बन्धित्वात् । तथाच स्थिति-काले सृष्टि-काले च सर्व्व-पृथिवीष्वेव गगन-सम्बन्धात् गगनाभावो न प्रतियोगि-व्यधिकरण इति भावः)(१)। "तथैव" वृत्त्यनियामक-संयोगेनैव । "असम्बन्धित्वा"दित्यनेन साध्य-सामानाधिकरण्यस्य व्याप्ति-घटकस्याभावः प्रदर्शितः । सामानाधिकरण्य-ज्ञानस्यानुमित्यहेतुत्व-मतेनाह * "अव्यापकत्वा"दिति । ननु वृत्ति नियामक-संयोगेन गगनादेः कथमव्यापकत्वं तेन सम्बन्धेन गगनाभावस्य प्रतियोगि-सम्बन्धिनो-

---

* एतन्मते केवलव्यापकताज्ञानमेवानुमिति हेतुरिति भावः ।

(१) ( ) चिह्नितस्थले तत्सम्बन्धित्वात् गगनाभावो न प्रतियोगिव्यधिकरण इति भाव इति न पुस्तके पाठः ।

ऽप्रसिद्धा प्रतियोगि-वैयधिकरण्याभावात् तादृशस्याभावान्तरस्या-प्रतियोगितया गगनादेर्व्यापकत्वमेव स्यादत आह "व्याप्ती"ति, चये खण्डशः प्रसिद्धा आकाशाभावस्यापि प्रतियोगि-वैयधिकरण्यं * निर्व्वाच्यमित्यर्थः ।

---

दीधितिः ।

नन्वष्ट-द्रव्यातिरिक्त-द्रव्यात्मक-काल-मात्र-वृत्ति--धर्म्मस्य विशेषणता-विशेषेणाव्याप्यवृत्ति किमपि व्यापकं न स्यात् ; स्वावच्छेदक-सम्बन्धेन प्रतियोगिनोऽसम्ब-न्धिनि काले वर्त्तमानस्याभावस्य प्रतियोगितायां तत्स-म्बन्धावच्छिन्नत्वस्य, तेन सम्बन्धेन यत् प्रतियोगि-सम्बन्धि तदन्यत्वस्य च कालेऽसम्भवात् ।

---

दीधिति-प्रकाशः ।

"अष्टद्रव्यातिरिक्ते"ति । क्रियाद्यात्मक-खण्ड-काल-वारणाय चरम-द्रव्य-पदम् । खण्ड-कालेऽतीत-तद्वत्त्वभावस्य प्रतियोगि-वैय-धिकरण्य-सम्भवात् तद्वृत्ति-धर्म्म-व्यापकत्वं सुघटमेव स्यादतस्तद्वा-रणाय सर्व्वाणि विशेषणानि । यद्यपि चतुर्द्रव्यातिरिक्तत्वेव वक्तु-मुचितं तावतैव महाकाल-लाभ-सम्भवात्, इतरेषामाकाशादीनां कालत्वाभावादेव वारणात् । तथापि तान्त्रिक-परिभाषामाश्रित्य

---

* खण्डशाभावघटितमिति शेषः ।

तथाभिधानम्। तथाच महाकालो घटवानेतत्परिमाणादित्यादावव्याप्तिरित्यर्थः।

ननु महाकालान्यत्व-विशिष्ट-घटाभाव एव महाकाले प्रतियोगि-व्यधिकरण इत्यत आह "विशेषणता-विशेषेणे"ति, महाकाल-मात्र-वृत्ति-विशेषणता-विशेषणेत्यर्थः *। महाकालीय-विशेषणताया इदानीं घट इति प्रतीति-विषय-खण्ड-कालीय-विशेषणता-विलक्षणत्वात्। कथमन्यथा इदानीं सर्व्वमिति प्रतीत्यभावेऽपि कालः सर्व्ववानित्योपपत्तिक-प्रतीति-वलात् कालस्य सर्व्वाधिकरणत्वमिति।

केचित्तु इदानीमिति धी-विलक्षणा धीर्म्महाकाले नाभ्युपेयते, इदानीमित्यत्र तु महाकालावच्छिन्नैतत्-क्रिया एतत् क्रियावच्छिन्नो वा महाकालोऽधिकरणत्वेन विषय इति, महाकालेऽपि सैव विशेषणता, † महाकाले च महाकालान्यत्व-तत्सम्बन्ध-घटानां तादृश-विशेषणतया सत्त्वात् महाकालान्यत्व-विशिष्ट-घटोऽपि महाकाल-वृत्तिरिदानीं महाकालान्यत्व-विशिष्टो घट इति धी-सत्त्वात्। न चैवं गुणान्यत्व-विशिष्ट-सत्त्वमपि गुण-वृत्तिस्यादिति वाच्यं गुणो गुणान्यत्व-विशिष्ट-सत्तावानिति धी-विरहादित्याहुः ‡।

---

* तथाच महाकालवृत्तिविशेषणतासम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्ध्या प्रतियोगिवैयधिकरण्याप्रसिद्धिरिति भावः।

† तथाच खण्डकाल-महाकाल-साधारणी एकैव विशेषणतेति भावः।

‡ ननु तत्रैव विशिष्टाधिकरणता, यत्र विशेषणविशेष्योभय-सामानाधिकरण्ये विशेषणस्य यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन विशेषणं विशेष्यस्य च यादृशः सम्बन्धः

व्याप्यवृत्ति-साध्यके प्रतियोगि-वैयधिकरण्यस्यानुपादानादाह "अव्याप्यवृत्ती"ति । कालिक-सम्बन्धेन व्याप्यवृत्तिराकाशाभावादिरेव, कालिकतया (१) प्रतियोग्यनधिकरण-कालावच्छेदेन दैशिक-सम्बन्धावच्छिन्न-घटाभाववत् दैशिकतया प्रतियोग्यनधिकरण-देशावच्छेदेनैव कालिक-सम्बन्धावच्छिन्नाभाव-सत्त्वात्, न चाकाशाभावस्य दैशिकतयाऽनधिकरणमस्ति, केवलान्वयित्वात् । कालिकतया तदनधिकरणस्याकाशादेः सर्व्वेऽपि काले तदवच्छेदेन तदभावासम्भवात् । आत्मनीदानीमाकाशाभाव इति प्रतीत्या

प्रविष्टत्वेन सम्बन्धेन विशेष्यस्य वर्त्तते, अन्यथा गुणेऽपि गुणकर्म्मान्यत्व-विशिष्ट-सत्ताधिकरणता-प्रतीत्यापत्तेः । तथाच कथं महाकाशे महाकाशान्यत्वविशिष्ट-घटाधिकरणतासम्भवः ? तत्र सामानाधिकरण्यप्रविष्ट-दैशिकविशेषणता-विशेषेण महाकाशभेदासत्त्वात् । न च तादृशनियमेऽङ्गीकृते सामानाधिकरण्यसम्बन्धेन द्रव्यविशिष्टगुणस्य कथं ज्ञानेऽधिकरणत्वं; तत्र सामानाधिकरण्यप्रविष्टविशेषण-सम्बन्धेन संयोगेन द्रव्यस्य ज्ञानेऽसत्त्वात्, तथाचैवं नियमद्वयं कल्प्यं, यत्र विशेषण-विशेष्ययोः सम्बन्धसत्त्वं यत्र च विशेष्यसम्बन्धेनैव विशेषणविशेष्योभयं तत्रापि च विशिष्टाधिकरणत्वमिति ; एवञ्च महाकाशान्यत्वविशिष्टघटोऽपि महाकाशे वर्त्तते. विशेष्यसम्बन्धेन कालिकेन भेदस्य घटस्य च तत्र सत्त्वादिति वाच्यं द्रव्यविशिष्टगुणाधिकरणता ज्ञाने न स्वीक्रियते अपि तु द्रव्योपलक्षित-गुणाधिकरणतैव, तथाच द्वितीयनियमो नाङ्गीकर्त्तव्यः, तथाच महाकाशे कथं तादृशघटाधिकरणत्वमिति चेन्न सर्व्वत्र महाकाल एवाधिकरणम्, इदानीं घट-इत्यादिप्रत्ययेनापि महाकाल एवाधिकरणत्वेन विषयी क्रियते खण्डकाल-स्यावच्छेदकत्वेनेति, तथाच कालिकेन महाकाशो न महाकाशभेदविशिष्ट-घटाधिकरणं लीलावतीकारादिमततत्वादेवञ्च तादृशघटाधिकरणत्वप्रसिद्ध्यैवेति प्रतियोग्यधिकरणत्वाप्रसिद्ध्या महाकाशो घटवानित्यत्राव्याप्तिर्दुर्व्वारेति विभा-वनीयम् ।

(१) कालिकविशेषणतया इति ग ।

आत्माद्यवच्छेदेन तत्काले आकाशाभावस्याविषयीकरणात्। न च कालिकतया आकाशाभावाभावस्यात्मादिवृत्तेः कालिकतया काले सत्त्वात् तद्वारणाय प्रतियोगि-वैयधिकरण्यमावश्यकमिति वाच्यं व्याप्यवृत्ति-साध्यके दैशिक-विशेषणतया हेतु-समानाधिकरणत्व-स्यैव निवेशेनाव्याप्त्यभावात्। अन्यथा सत्तावान् जातेरित्यादावपि कालिकतया सत्त्वाभावस्य हेतु-समानाधिकरणत्वात् प्रतियोगि-वैयधिकरण्य-विशेषण-निवेशनापत्तेरिति संक्षेपः।

विवक्षा-द्वयस्यैवासम्भवं दर्शयति "स्वावच्छेदक-सम्बन्धेने"त्या-दिना। स्वं प्रतियोगिता। तत्सम्बन्धावच्छिन्नत्वस्यासम्भवादित्य-भिमेण सम्बन्धः। "तेन सम्बन्धेन" कालिक सम्बन्धेन।

---

दीधितिः।

न च तादृश-सम्बन्धेन हेत्वधिकरणीभूत-यत्कि-ञ्चिद्व्यक्त्यवृत्ति-प्रतियोगितावच्छेदक-विशिष्ट-प्रतियोगि-सामान्यकत्वमेव वक्तव्यं; तथाचावृत्ति-गगनाद्यभाव-द्वारिकैव तत्प्रसिद्धिः, सत्त्वाद्यधिकरण-कर्म्मादौ सम-वायेन ज्ञान-सामान्यस्य संयोग-सामान्यस्य चावृत्ते-र्नातिप्रसङ्गः। भूतत्व-मूर्त्तत्वोभयत्व-विशिष्ट-गुण-कर्म्मा-न्यत्व-विशिष्ट-सत्त्वात्व-विशिष्ट-सत्त्वादिकन्तु न मनो-गुणादि-वृत्ति संयोग-सामान्यन्तु न किञ्चिद्व्याप्‌-नोतीति वाच्यम्।

## दीधिति-प्रकाशः ।

"न चे"ति "वाच्य"मित्यग्रिमेणान्वयः । "तादृश-सम्बन्धः" प्रतियोगितावच्छेदक-सम्बन्धः साध्यतावच्छेदक-सम्बन्धो वा । इदञ्चावृत्तीत्यनेनान्वितम् । सम्बन्ध-विवक्षायाः फलमाह, "सत्त्वादौ"ति, इदं ज्ञानवत् संयोगवद्वा सत्त्वादित्यादावित्यर्थः । अत्र विषयताया वृत्त्यनियामकत्वात् आकाशादौ ज्ञानाभावस्य वृत्तिता-नियामक-सम्बन्धेन प्रतियोगि-वैयकरण्यं सुघटमेवेत्यतः संयोग-साध्यकानुसरणम् । अत्रापि नित्य-गुणे संयोगस्य केनापि सम्बन्धेनासत्त्वात् तत्रैव प्रतियोगि-वैयधिकरण्यं स्यादत आह, "आदौ"ति । आदिना गुणान्यत्व-विशिष्ट-सत्ता परिग्रहः । अतएवाह, "कर्म्मादा"विति । इत्यञ्च कर्म्म-मात्रस्यैव कालिकतया संयोगवत्त्वात् तत्र संयोगाभावस्य प्रतियोगि-वैयधिकरण्यासम्भवादतिव्याप्तिरिति भावः । सत्त्वाद्यधिकरण-सामान्य-समवेतत्वाभावस्य संयोगेऽसम्भवादाह, "यत्किञ्चि"दिति । प्रतियोगितावच्छेदक-विशिष्टेत्यस्य फलमाह, "भूतले"ति । द्वित्वावच्छिन्नाभावस्य मनो-वृत्ति-प्रतियोगिकत्वेऽपि द्वित्वावच्छिन्ने मनो-वृत्तित्वाभावात् प्रतियोगि-वैयधिकरण्यं तत्रेत्यर्थः । द्वित्वावच्छिन्न-प्रतियोगिताया व्यासज्यवृत्तित्वे प्रतियोगिता-विशिष्टस्यैवावृत्तित्वाभिधाने * उक्तातिव्याप्ति-निरास इति स्थलान्तरमाह, "गुणे"ति । अत्र च विशिष्ट-सत्तात्वावच्छिन्न-प्रतियोगिता विशेष्य-पर्य्याप्त-वृत्तिकेति भावः । विशिष्टान्तरयं मनो गुणयोर्यथाक्रममन्वेति । सामान्य-पद-फलमाह, "संयोग-

* प्रतियोगिता पर्य्याप्त्यधिकरणकेनावृत्तित्वविवक्षण इत्यर्थः ।

सामान्यमि”ति । तथाच संयोगी द्रव्यत्वादित्यादौ संयोग-व्यक्ति-विशेषस्य यत्किञ्चिद्द्रव्यावृत्तित्वेऽपि उत्पत्ति-कालावच्छिन्न-संयोगाभावो न प्रतियोगि-व्यधिकरण इति नाव्याप्तिरिति भावः ।

दीधितिः ।

विशिष्टस्यानतिरिक्तत्वात् । समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः, जातिमन्निष्ठ-तादृशाभाव-प्रतियोगिताया जातित्वेनानवच्छेदात् ; जाति-शून्ये च तादृश-सम्बन्धेन वृत्तेरप्रसिद्धेः, संयोगादि-साध्यक-गुण-कर्म्मान्यत्वादौ चातिव्याप्तिः, अद्रव्ये हेतुमति तादृश-सम्बन्धेन वृत्तेरप्रसिद्धेः, द्रव्ये च संयोगादेरपि वृत्तेः ।

दीधिति-प्रकाशः ।

“विशिष्टस्ये”ति, तथाच गुणान्यत्व-विशिष्ट-सत्तावान् जातेरित्यादौ गुणावृत्तित्वस्य विशिष्ट-सत्तायां शुद्ध-सत्तानतिरिक्तायाम् अभावात् न विशिष्टाभावो निरुक्त-प्रतियोग्यसमानाधिकरण इत्यतिव्याप्तिरिति भावः । ननु यत्किञ्चिद्धेत्वधिकरण-वृत्तिता-नवच्छेदक-प्रतियोगितावच्छेदकत्वं वक्तव्यमत आह, “समवायेने”ति । अतिव्याप्तिमेव घटयति, “जातिमदि”ति । मेयत्वा-धिकरणं जातिमत् जाति-शून्यञ्च, तत्र जातिमति समवायेन वृत्ति-प्रसिद्धा प्रतियोगि-व्यधिकरणस्य घटत्वाभावादेः प्रसिद्धा-वपि तत्प्रतियोगिता न जातित्वेनावच्छिद्यते, जातिशून्ये च सम-

वायेन हत्त्यप्रसिद्धा जातित्वावच्छिन्नाभावो न प्रतियोगि-व्यधि-करण इति भावः।

ननु जातेर्व्याप्य-वृत्तित्वात्तत्साध्यके प्रतियोगि-वैयधिकरण्यमेव न देयमतः, "संयोगादौ"ति। "गुण-कर्म्मान्यत्वे"ति। एकैकानु-पादाने तत्रैव प्रतियोगि-वैयधिकरण्यं प्रसिद्धं स्यादत उभयान्यत्व-मुपात्तम्। अद्रव्ये गुणादौ समवायेन वृत्तेः प्रसिद्धत्वादाह, "हेतु-मतौ"ति। तादृशञ्च सामान्यादिकमिति भावः।

---

दीधितिः।

मैवं साध्यतावच्छेदक-सम्बन्ध-सामान्ये निरुक्त-प्रति-योगि-प्रतियोगिकत्व-हेत्वधिकरणीभूत-यत्किञ्चिद्व्यक्त्य-नुयोगिकत्व-सामान्योभयाभावस्य विवक्षितत्वात्। धूम-संयोगे वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य, चैत्रा-न्यत्व-विशिष्टैतद्दण्ड-संयोगे एतद्दण्डाधिकरण-चैत्रानु-योगिकत्वस्य, गुण-कर्म्मान्यत्व-विशिष्ट-सत्ता-समवाये च जात्यधिकरण-गुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः।

---

दीधिति-प्रकाशः।

साध्यतावच्छेदक-सम्बन्धेन प्रतियोग्यसम्बन्धि हेतु-सम्बन्धि-निष्ठाभावान्तमाकाशाभाव-साधारणं निर्व्वक्ति, "साध्यतावच्छेदके"त्यादिना। प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोग्यसम्बन्धी-त्यादि-विवक्षायाञ्च गगनादेर्वृत्तिमत्त्व-पक्षे निष्कृष्टदर्शनीयत्वाच्च

तत्र समाधिरुक्तः। क्वचिच्च तादृश-सम्बन्धेत्यादि-पाठः, तत्र प्रतियोगितावच्छेदक-सम्बन्ध सामान्ये साध्यतावच्छेदक-सम्बन्ध-सामान्ये चेत्यर्थः। वह्निमान् धूमादित्यादौ महानसीय-वह्नि-संयोगस्यापि वह्नित्वावच्छिन्न-प्रतियोगिकत्व-धूमाधिकरण-यत्किञ्चित्पर्व्वतानुयोगिकत्वोभयाभावस्य सत्त्वादव्याप्ति-वारणाय, "सामान्य" इति। "निरुक्ते"ति तादृशाभाव-प्रतियोगितावच्छेदक-विशिष्टेत्यर्थः। घटादि-संयोग-निष्ठ-पर्व्वतानुयोगिकत्व-व्यक्ति-विशेषायोगोलकीय-संयोग-निष्ठ वह्नि-प्रतियोगिकत्व-विशेषोभयाभावस्य संयोग-सामान्ये सत्त्वात्तथैवाव्याप्तिरतः, "सामान्योभये"ति।

अत्र च प्रतियोगित्वमनुयोगित्वञ्च सम्बन्ध-निरूपितं प्रतियोग्यनुयोगि-निष्ठम्, अधिकरणतादि--व्यावृत्त--स्वरूप-सम्बन्ध-विशेषः, स च सम्बन्ध-भेदेऽपि न भिन्नः। तेन धूम-संयोगी कालिक-सम्बन्धेनायोगोलक-वृत्तित्व-सत्त्वेऽपि नायोगोलकानुयोगिकत्वं, किन्तु धूम-संयोगीय-कालिक-सम्बन्ध एवायोगोलकानुयोगिकत्वमिति नातिव्याप्तिः। एतेन हेत्वधिकरणानुयोगिकत्वेत्यत्रानुयोगिकत्व-सामान्य-प्रवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूम-संयोगस्य कालिकादि(१)सम्बन्धेनायोगोलकानुयोगिकत्व-सत्त्वात्। संयोगीय-विलक्षणानुयोगिकत्वस्य प्रवेशे च द्रव्यवान् सत्त्वादित्यादौ संयोगेन साध्यतायामतिव्याप्तिस्तत्र हेत्वधिकरणीभूत-गुणानुयोगिकत्वस्य संयोग-निष्ठस्याप्रसिद्धेर्द्रव्याभावस्य गुणे प्रतियोगि-वैयधिकरण्याभावादिति दूषणमलग्नकं, गुणानु-

(१) आदीति नास्ति च।

यौगिकत्वस्य समवायादावेव प्रसिद्धेरिति । ("विवक्षितत्वा"-दिति, अभावान्तेन विवक्षितत्वादित्यर्थः ) (१) ।

"यत्किञ्चिदि"त्यस्य फल(२)माह, "वह्न्यधिकरणायोगोलके"ति, अन्यथा वह्न्यधिकरण-सामान्यानुयोगिकत्व-धूम-प्रतियोगिकत्वो-भयस्य धूम-संयोगि सत्त्वात् धूमाभावस्य प्रतियोगि-वैयधिकरण्यं न स्यादिति भावः * ।

"निरुक्त"पदस्य फलमाह, "चैत्रान्यत्वे"ति, चैत्रान्यत्व-विशिष्टैतद्दण्डवान् एतद्दण्डादित्यादौ चैत्रान्यत्व-विशिष्टैतद्दण्डा-भाव-प्रतियोगी एतद्दण्डस्तत्प्रतियोगिकत्व(३)चैत्रानुयोगिकत्वो-भयस्य चैत्र-वृत्ति-दण्ड-संयोगि सत्त्वात् प्रतियोगि-वैयधिकरण्यं न स्यात्, निरुक्त-पद-दाने तु चैत्र-वृत्ति-दण्ड-संयोगि चैत्रान्यत्व-विशिष्टैतद्दण्ड-प्रतियोगिकत्वाभावादुभयाभाव इति भवति चैत्रान्य-त्व-विशिष्टैतद्दण्डाभावः प्रतियोगि-व्यधिकरण इति भावः । एकस्या एव दण्डव्यक्तेश्चैत्रान्यत्व-विशिष्टत्वेन साध्यत्वं दण्डत्वेन हेतुत्वञ्चैतत् सूचनाय "एतदि"ति (४) । अन्यथा चैत्र-वृत्ति-दण्ड-व्यक्तेश्चैत्रान्यत्व-विशिष्टत्वाभावेन चैत्रान्यत्व-विशिष्ट-दण्डा-भाव-प्रतियोगित्वाभावात्, निरुक्त-पदं विहाय केवल-प्रतियोगि-

---

* तथाचाभावान्तरमादायातिव्याप्तिरिति भावः ।

(१) ( ) चिह्नितपाठो नास्ति ख ।

(२) प्रयोजनेति पाठः ख ।

(३) प्रतियोग्येतद्दण्डप्रतियोगिकत्वेति ख

(४) चैत्रत्वस्य सूचनायैतदिति इति ख ।

प्रतियोगिकत्वोक्तावप्युभयाभाव-सत्त्वेन प्रतियोगि-वैयधिकरण्य-सम्भवान्निरुक्त-पदानर्थक्यापातात्। समवायेन साध्यतामपि निरुक्तपद-व्यावृत्तिमाह,"गुणे"ति। यद्यपि सत्ता-समवायस्यैक्यात् गुण-कर्म्मान्यत्व-विशिष्ट-सत्ता-प्रतियोगिकत्व—गुणानुयोगिकत्वोभयमपि समवायेऽस्त्येवेति निरुक्त-पदे दत्तेऽपि न प्रतीकारः। न च साध्यतावच्छेदकावच्छिन्न-साध्य-प्रतियोगिक-सम्बन्ध एव साध्यतावच्छेदक-सम्बन्धोऽत एव, "धूमसंयोग" इत्यादिना तथैव दर्शितं, तथाच समवाये गुणानुयोगिकत्व-सत्त्वेऽपि गुण-कर्म्मान्यत्व-विशिष्ट-सत्ता-समवाये गुणानुयोगिकत्वाभावात् उभयाभाव इति वाच्यं तथा सति निरुक्त-पद-वैयर्थ्यापातात्। तथापि समवाये नानात्वाभिप्रायकोऽयं ग्रन्थः। अतएवोत्तर-विवक्षायां "समवायस्यैकत्वेऽपी"त्यादिनाऽस्यां विवक्षायाम् अस्वरसं वक्ष्यति।

केचित्तु समवायस्य तत्तन्निरूपितस्यैव सम्बन्धत्वं न तु शुद्धस्य, अन्यथा रूपि-नीरूप-व्यवस्था न स्यात्। तथाच सम्बन्ध-पद-स्वरसात् यद्रूपावच्छिन्न-समवायस्य सम्बन्धत्वं तद्रूपावच्छेदेनैवोभयाभावः सामान्य-पदोपसन्धानाद्वाच्यः, तथाच सत्ता-प्रतियोगिक-समवायस्यापि सम्बन्धत्वात् सत्ता-प्रतियोगिकत्वावच्छेदेन केवल-सत्ता-प्रतियोगिकत्व-गुणानुयोगिकत्वोभय—सत्त्वाद्विशिष्ट-सत्ताभावस्य प्रतियोगि वैयधिकरण्य-क्षतिरतो,"निरुक्ते"ति। इत्यच, "समवायस्यैकत्वेऽपी"ति ग्रन्थस्तु शुद्धस्य समवायस्यैव कस्मिंश्चिदधिकरणे कस्यचित्सम्बन्धत्वं न तु तत्तन्निरूपितस्येत्याशयेन योज्य इत्याहुः।

दीधितिः।

स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्त-प्रतियोग्यनधिकरण-हेतुमन्निष्ठाभाव-प्रतियोगिता-सामान्ये यत्सम्बन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभाव-स्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम्।

दीधिति-प्रकाशः।

"स्वरूप-सम्बन्धेने"ति। गगनादेरवृत्तित्व-प्रवादस्तु संयोग-समवाय-सम्बन्ध-पर इति भावः। "निरुक्त-प्रतियोग्यनधिकरणं" प्रतियोगितावच्छेदक-सम्बन्धेन यादृश-प्रतियोगितावच्छेदकावच्छिन्ना-धिकरण-भिन्नम्। "प्रतियोगिता-सामान्ये" तादृश-प्रतियोगिता-सामान्ये। (महाकालो घटवानित्यत्र समवाय-सम्बन्धावच्छिन्न-घटाभावमादाय लक्षण-समन्वयः।) (१) धूमवान् वह्नेरित्यादौ घटाद्यभाव-प्रतियोगितायाम् उभयाभाव-सत्त्वादतिव्याप्तिरतः "सामान्य" इति। वह्निमान् धूमादित्यादौ समवायावच्छिन्न-वह्न्यभाव--संयोगावच्छिन्नमहानसीयवह्न्यभाव--प्रतियोगितयोरेक-काभाव-सत्त्वादुभयाभावानुधावनम्। "तेन सम्बन्धेने"ति।* न चैवं

(१) ( ) एतच्चिह्नितपाठो नास्ति ग।

* ननु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभाव-यद्धर्मावच्छिन्नाभाव-प्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वं नास्ति तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमित्येकाभावघटितलक्षणसम्भवे कथं दीधितिकृतोभयाभाव-घटित-लक्षणं कृतमिति चेन्न इदं प्रमेयवत् अभिधेयत्वादित्यत्र समवायेन प्रमेयत्वाभावाऽव्याप्ते-स्तत्र व्यापकतावच्छेदकावच्छिन्न-प्रतियोगिताकाभावाप्रसिद्धेः। न च तत्र संयोगेन

समवायेन गगनादेरपि व्यापकत्वं स्यात् समवायेन गगनाभावस्य प्रतियोगि-वैयधिकरण्याभावादिति वाच्यं तथात्वेऽपि सामानाधिकरण्याभावेनैव व्याप्ति-लक्षणेऽतिव्याप्त्यभावात्। गगनादि-व्यावृत्त-व्यापकत्वस्य निर्व्वचनीयत्वे तु साध्यतावच्छेदक-सम्बन्धेन यत्किञ्चिदधिकरण-वृत्तितावच्छेदकत्वं व्यापकतावच्छेदके विशेषणीयं, तेन वह्न्याकाशोभयत्वादिनापि न व्यापकतेति।

यद्धर्म्मावच्छिन्नत्वमभाव-प्रतियोगिता-निष्ठं विलक्षणं निवेश्यम्। अन्यथा विषयतया ज्ञानावच्छिन्नस्य समवायेन साध्यतायां ज्ञानावच्छिन्न सुखी दुःखादित्यादौ हेतु समानाधिकरण-घट-पटाद्यभाव-प्रतियोगितायां ज्ञानावच्छिन्नत्व-समवाय-सम्बन्धावच्छिन्नत्वोभय-सत्त्वादव्याप्त्यापत्तेः, विषयता-सम्बन्धेन ज्ञानाश्रयेऽपि ज्ञानावच्छिन्नत्व-सत्त्वात्, ज्ञानावच्छिन्नो घट इति प्रतीतेः। तदपि साध्यतावच्छेदकतावच्छेदक-सम्बन्धेन बोध्यं, तेन वह्निमान् वह्न्यवयवत्वादित्यादौ समवायेन साध्यतायां विषयितया वह्नित्व-विशिष्टस्य ज्ञानादेर्योऽभावस्तत्प्रतियोगितायां विषयितया वह्नित्वावच्छिन्नत्व-समवाय-सम्बन्धावच्छिन्नत्वोभय-सत्त्वेऽपि नाव्याप्तिरिति।

---

दीधितिः।

समवाय-सम्बन्धेन मेय-सामान्याभावस्य साप्र-

---

प्रमेयाभावः प्रसिद्ध इति वाच्यं संयोगावच्छिन्न-प्रमेयाभावस्य संयोगेन द्रव्यं नास्तीत्यभाव-वलनिबलतया तत्प्रतियोगितावच्छेदकं द्रव्यत्वमिति तथाच तदवच्छिन्ना-भावाप्रसिद्ध्याऽव्याप्तिदुर्व्वारैवेति ध्येयम्।

न्यादौ सत्त्वात्मेयत्वादेरप्यभाव-प्रतियोगितावच्छेदकत्वं सुलभम् ।

---

दीधिति-प्रकाशः ।

विषयितया मेयत्व-विशिष्टस्य ज्ञानादेरभाव-प्रतियोगितायां विषयितया मेयत्वावच्छिन्नत्वस्य प्रसिद्धावपि स्वरूप-सम्बन्धेन साध्य-तावच्छेदकतावच्छेदकेन तदवच्छिन्नत्वस्याप्रसिद्धयाऽव्याप्तिरत आह, "मेयत्वादेरपी"ति ।

---

दीधितिः ।

अतएव समवायस्यैकत्वेन द्रव्यत्वादि-प्रतियोगि-कत्व-गुणाद्यनुयोगिकत्वोभय-सत्त्वेऽपि द्रव्यं जातेरि-त्यादौ वह्नि-धूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वा-वच्छिन्न-प्रतियोगिकत्व-विरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति ।

---

दीधिति-प्रकाशः ।

गगनादेरहत्तित्व-पक्षेऽपि पूर्व्व-कल्पो न सम्यगिति दर्शयति "अतएवे"ति । अत्र * संयोगस्य द्वित्वावच्छिन्न-प्रतियोगिकत्व-विर-हेणातिव्याप्ति विरहेऽपि (१) द्रव्यं जातेरित्यादौ नातिव्याप्तिरित्य-न्वयः ।"विरहेऽपी"ति,तथाच पूर्व्व-कल्पेऽपि तत्रातिव्याप्ति-सम्भावना

---

* वह्निधूमोभयवान् वह्नेरित्यत्रेत्यर्थः ।

(१) द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपीति पाठः ख ।

नेत्यर्थः। न च वह्नि-धूमोभयवान् धूमादित्यत्राव्याप्तिः संयोग-सामान्ये द्वित्वावच्छिन्न-प्रतियोगिकत्व-विरहादिति * वाच्यं निरुक्त-प्रतियोगिकत्वेत्यनेन प्रतियोगितावच्छेदकावच्छिन्न-विशिष्ट-धी-नियामकता-विशेषस्य संसर्ग-निष्ठस्य विवक्षितत्वात्, उभयत्वावच्छिन्न-विशिष्ट-धी-नियामकत्वञ्च एकाधिकरणकोभय-संयोग-द्वये,(१) (अन्यथा पर्व्वतो वह्नि-धूमोभयवानिति प्रतीत्यनापत्तेः)(२)। एवमेव चैत्रानुयोगिक-दण्ड प्रतियोगिक-संयोगेऽपि चैत्रान्यत्व-विशिष्ट-दण्ड-प्रतियोगिकत्वाभावादुभयाभावः संगच्छते। इत्यञ्च संयोगस्येत्यस्य अयोगोलकानुयोगिक-संयोगस्येत्यर्थः। महानस-वृत्ति-संयोग-द्वये द्वित्वावच्छिन्न-प्रतियोगिकत्व सत्त्वादिति ध्येयम्। "विरहेऽपि चे"त्यत्र चकारः प्रामादिक इति भावः (३)। वह्नि-धूमोभयवान् धूमादित्यादौ संयोगस्य द्वित्वावच्छिन्न-प्रतियोगिकत्व विरहेऽपि च नातिव्याप्तिरव्याप्तिर्व्वेत्येव पाठ इत्यन्ये।

वस्तुतस्तु साध्य-साधन-भेदेन लक्षण-भेदात् वह्नि-धूमोभयवान् धूमादित्यादावुभयत्वावच्छिन्न-साध्यक-व्याप्ति-लक्षणे निरुक्त-पद-दानेऽसम्भव इत्यतस्तत्र निरुक्त-पदं न देयम्। तथाच वह्नि-धूमोभयवान् वह्नेरित्यादावतिव्याप्तिरित्याह, "वह्निधूमोभयवानि"त्यादिना। "विरहेऽपि चे"ति तथाचासम्भव-सम्पादकतया निरुक्त-पदाप्रक्षेप इत्येतत् सूचनायेति, यथाश्रुतमेव सम्यगिति ध्येयम्।

---

* तथाच साध्याभाव एव प्रतियोगिव्यधिकरण इति भावः।

(१) संसर्गद्वये इति च। (२) ( ) चिह्नितपाठो नास्ति च।

(३) भाव इत्यत्र चकार इति च।

दीधितिः ।

प्रतियोगित्वादिश्च स्वरूप-सम्बन्ध-विशेषो न सम्बन्धत्वेन निविष्टः, सामानाधिकरण्येऽपि सम्बन्धः संयोगत्वादिनैव निविशते । दर्शितश्च नियमाघटितमपि सम्बन्धत्वम् ।

दीधिति-प्रकाशः ।

ननु प्रतियोगित्वं स्वरूप-सम्बन्ध-विशेषः, तत्र च नियम-घटित सम्बन्ध-प्रवेशादात्माश्रय इत्यत आह, "प्रतियोगित्वादिश्चे"ति । आदिनाऽनुयोगित्व-निरूपितत्व-वृत्तित्वानां परिग्रहः । "न सम्बन्धत्वेने"ति, किन्तु प्रतियोगित्वत्वादिना सम्बन्ध-विधया निविष्ट इति भावः ।

ननु सामानाधिकरण्यं सम्बन्धि-सम्बन्धित्वं, तत्र च सम्बन्धत्व-प्रवेशादात्माश्रय इत्यतः "सामानाधिकरण्येऽपी"ति ।

ननु यत्र सम्बन्ध-सामान्येनैव व्याप्तिस्तत्र सम्बन्धत्वं निविष्टम् अतो "दर्शितश्चे"ति, प्रकारता विशेष्यताख्य-विशेषण-विषयक-धी-विषयत्वादि(१)रूपमित्यर्थः ।

दीधितिः ।

अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीति

(१) आदीति नास्ति च ।

प्रतीति-नियामको भावाभाव-साधारणः स्वरूप-सम्बन्ध-विशेषः, अतो नाभाव-साध्यक-व्यभिचारिण्यतिप्रसङ्गः ।

---

दीधिति-प्रकाशः ।

ननु (२) अभावत्वं द्रव्यादि-षट्कान्योन्याभाववत्त्वं, तथाचाभाव-साध्यके व्यभिचारिण्यतिव्याप्तिरत आह "अभावत्वञ्चे"ति । इदमिह नास्तीति प्रतीति-नियामक-भावाभाव-साधारणाभावत्व-प्रवेशे तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिस्तादृश-प्रतीति-नियामकाभाव-प्रतियोगितायां तादात्म्यावच्छिन्नत्वाभावेनोभयाभाव-सत्त्वादत "इदमिदं न भवती"त्युक्तम् । "भावाभावसाधारण" इति, भाव स्वरूपाभाव-मात्र-प्रवेशे घटाभिन्नं मेयत्वादित्यादौ (३) व्यभिचारिण्यतिव्याप्तिरतोऽभावोपादानम् ।

---

दीधितिः ।

तदपि वा नोपादेयं प्रयोजन-विरहात् ।

---

दीधिति-प्रकाशः ।

यादृश-प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृश प्रतियोगितायामुभयाभाव विवक्षयैव सामञ्जस्ये तदुपादानमपि न कर्त्तव्यमित्याह "तदपी"ति ।

---

(२) नन्विति नास्ति ग ।

(३) घटाभिन्नं मेयत्वादित्यत्र भावसाध्यक इति पाठः ख ।

दीधितिः।

विषयता-तत्त्वादिवत् प्रतियोगित्वाधिकरणत्व-तत्त्व-सम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येक-देशिनः।

इति श्रीमद् रघुनाथ-शिरोमणि-कृतायां दीधितौ
अनुमान-खण्डे सिद्धान्तलक्षण-
प्रकरणं समाप्तम्।

---

दीधिति-प्रकाशः।

ननु घटाभाव-प्रतियोगित्वं घटस्वरूपं घटत्व-स्वरूपं वा? आद्ये घटाभाव-प्रतियोगीत्यस्य घटोऽभाव-घटवानित्यर्थः स्यात्तथाचाननु-भवः। द्वितीये घटोऽभाव-घट इत्याकारः स्यात्तत्रापि च स एव दोषः। एवमधिकरणत्वमपि न संयोगादिरूपं, बदरस्यापि कुण्डा-धारत्व-प्रसङ्गात् अत आह "विषयते"ति। "तत्त्वादिवदि"ति, नैया-यिकैकदेशिनाप्यतिरिक्त-विषयता-स्वीकारात् तस्य दृष्टान्तता। अत-एवातिरिक्त-विषयतावादि-मत इति तत्र दर्शयति। "तत्त्वादौ"ति, विषयतात्वादीत्यर्थः। आदिना प्रकारता-विशेष्यता-तत्त्व-परिग्रहः। "तत्त्वे"ति प्रतियोगित्वत्वाधिकरणत्वत्वेत्यर्थः।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमानखण्डे सिद्धान्त-लक्षण-प्रकरण-
व्याख्या समाप्ता।

# अथावच्छेदकत्व-निरुक्ति-प्रकरणम् ।

## अथावच्छेदकत्व-निरुक्ति-प्रकरणे दीधितिः ।

नन्ववच्छेदकत्वमिह न स्वरूप-सम्बन्ध-विशेषः, सम्भवति लघौ धर्म्मे गुरौ तदभावात्, प्रमेय-धूमत्व-कम्बु-ग्रीवादिमत्त्व-घ्राण-ग्राह्य-गुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् ।

---

## अथावच्छेदकत्व-निरुक्ति-प्रकरणे दीधिति-प्रकाशः ।

प्रतियोगितानवच्छेदकेत्यत्रावच्छेदकत्वं किमिति तन्निरूपयति "नन्वि"त्यादिना । "इह" एतल्लक्षणे *। "सम्भवति" समनियते लघौ (१) सम्भवति । ( ननु प्रमेय-धूमत्वस्य धूमत्व-घटितत्वात् वक्ष्यमाण-रीत्या न तत्र धूमत्व-भेदः † सम्भवतीत्यत आह "कम्बु-ग्रीवे"ति ) (२) कम्बुग्रीवात्वादिकं (३) संस्थान-वृत्ति-जाति-भेदः, परम्परा-सम्बन्धेन तद्वत्त्वमेव कम्बु-ग्रीवादिमत्त्वं, अतएव गौरव-

---

* अत्रानुमानवाक्यं यथा स्वरूपसम्बन्धरूपावच्छेदकत्वम् एतल्लक्षणघटकत्वाभाववत् समनियत-लघुधर्म्मत्व-व्यापक-गुरुधर्म्मावृत्तित्वादिति ।

† तद्भिन्नत्वं तदघटितत्वं तद्विषयकप्रतीति विषयत्वमिति यावत् तथाच ताढ़श-प्रतियोगितावच्छेदकधूमत्वाविषयक-प्रतीति-विषयत्वस्य प्रमेय-धूमत्वेऽसत्त्वात् व्याप्तिव्याप्तिरिति भावः ।

(१) लघौ इति नास्ति ख ।

(२) ( ) एतच्चिह्नमध्यस्थितः पाठो नास्ति ग ।

(३) कम्बुत्वादिकमिति पाठः ख ।

मपीति भावः। ननु पार्थिवत्वादि-व्याप्य-नानाघटत्वानां कम्बु-ग्रीवादिमत्त्वं न समनियतं अतस्तत्प्रतियोगितावच्छेदकं भवत्येवेति नातिव्याप्तिरतो "घ्राणग्राह्ये"ति। इदमपि यथाश्रुतं यद्यपि न गन्धत्व-समनियतं अतीन्द्रिय-गन्धे तदभावात्। न च ग्राह्यत्वं प्रकृत योग्यत्वं योग्यतावच्छेदकञ्च गन्धत्वमेवेति वाच्यम्। तथा सति प्रमेय-धूमत्व-तुल्यतापत्त्या पृथगुपन्यासानौचित्यात्। तथापि घ्राण-ग्राह्य-वृत्ति गुणत्व-व्याप्य-जातिमत्त्वं तदर्थः, तस्य च न गन्धत्व-घटितत्वं, गन्धत्वाविषयक-सुरभित्वादि-विषयक-प्रतीत्या विषयीकरण-सम्भवात्, वक्ष्यमाण-रीत्या चावच्छेदक-भेद-सत्त्वादिति भावः। ( यद्वा घ्राणग्राह्यगुणत्वं घ्राणग्राह्य-गुणत्वव्याप्य-जातिमत्त्वं, तस्य च परम्परासम्बन्धेन गन्धत्व-समनियतत्वात् तेन रूपेण साध्यतायामतिव्याप्तिर्यथा श्रुतैवेति। ) (४) "अतथात्वेन" प्रतियोगितानवच्छेदकत्वेन।

---

दीधितिः।

व्याप्यनतिरिक्त-वृत्तित्वं, प्रतियोगितायाः स्वरूप-सम्बन्धात्मिकायाः प्रतिव्यक्ति भिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात्।

---

दीधिति-प्रकाशः।

तत्तत्प्रतियोगितामादायानतिरिक्तवृत्तित्वं निर्व्वाच्यं, तथा-

---

(४) ( ) चिह्नितपाठो नास्ति च।

विध-प्रतियोगितात्वेनानुगतीकृत-प्रतियोगितामादाय वा ? आद्ये दोषमाह "प्रतियोगितायाः" इति। प्रतिव्यक्ति-भिन्नत्वे हेतुमाह "स्वरूपसम्बन्धात्मिकायाः" इति। "धूमत्वादेरपी"ति, तथा चानेक-वृत्ति-धर्म्मेण साध्यतायां व्यभिचारिण्यतिव्याप्तिरिति भावः।

---

दीधितिः।

न च तथाविध-यत्किञ्चिदेकाभाव-प्रतियोगिता-सामान्य-शून्यावृत्तित्वं तत्, अतएवातिरिक्त-सामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्-साधनमपि साधु सङ्गच्छत इति वाच्यं, वह्नि-घट-वृत्ति-द्वित्व-तार्णातार्ण-दहन-वृत्ति-द्वित्वाद्यवच्छिन्न-प्रतियोगिताकाभाव-प्रतियोगितानतिरिक्तवृत्ति-वह्नित्वादावतिप्रसङ्गात्।

---

दीधिति-प्रकाशः।

द्वितीयमाशङ्क्य निषेधति "न च तथाविधे"ति। हेतु-समानाधिकरण-प्रतियोगि-व्यधिकरणेत्यर्थः। प्रतियोगि-व्यधिकरण-हेतु-समानाधिकरणाभाव-प्रतियोगिता-सामान्य-शून्यत्वस्याप्रसिद्धिः, तादृश-प्रतियोगिता-सामान्यस्य* केवलान्वयित्वात्। स्वान्यूनवृत्ति-तादृश-प्रतियोगिता-सामान्यकत्वोक्तौ चासम्भवः, सर्व्वस्यैव साध्य-

---

*केवलान्वयिवृत्तिधर्म्मावच्छिन्नाभावमादायेति भावः।

तावच्छेदकस्य स्वान्यूनवृत्तितादृश-प्रतियोगिताकत्वादत (१) आह "यत्किञ्चिदेके"ति। एक-पदं तत्तदभावानां प्रातिस्विक-रूपेण-ग्रहणस्य, यत्किञ्चित्पदञ्च तादृश-प्रतियोगितावच्छेदकं यद्यत् तत्तद्भेद-कूटवत्त्वस्य च लाभायेति ध्येयम्। तत्तदभाव-प्रतियोगितात्वावच्छिन्नाभाव लाभाय "सामान्ये"ति। न च प्रमेयवान् मेयत्वादित्यादौ समवायेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः समवायावच्छिन्न-प्रमेय-सामान्याभाव-प्रतियोगितायाः केवलान्वयित्वेन तच्छून्याप्रसिद्धा प्रमेयत्वस्य तादृश-प्रतियोगितानवच्छेदकत्वादिति वाच्यं, स्वान्यूनवृत्ति-तादृशप्रतियोगिता-सामान्यकत्वे तात्पर्य्यात्। (यद्वा समवायसम्बन्धावच्छिन्नप्रतियोगिताक प्रमेयाभावस्य सत्त्वाभावादनतिरिक्तत्वात्तस्य प्रतियोगी सन्नेव प्रतियोगितासामान्य-शून्यत्वन्तु सामान्यादौ प्रसिद्धमिति) (२)। "तत्" अनतिरिक्तवृत्तित्वम्। "अतएव" यत्किञ्चिदेकाभाव-प्रवेशादेव। "अनवच्छेदकत्वापातात्" तादृश-यत्किञ्चिदेकाभाव प्रतियोगितानवच्छेदकत्वापातात्। "तत्साधनं इति अतिरिक्त-सामान्याभाव-साधनम्। "सङ्गच्छत" इति, अन्यथा वह्नि-समानाधिकरण-विशेषाभाव-कूट-प्रतियोगितावच्छेदकत्वेनैवातिप्रसङ्ग-वारणे तत्साधनं व्यर्थमेव स्या(३)दित्याशयः। ननु तादृश-प्रतियोगित्वा-

---

(१) स्वान्यूनवृत्ति-तादृश-प्रतियोगिताकत्वादत इत्यत्र तादृश प्रतियोगितावच्छेदकत्वाभावादत इति पाठः ख।

(२) ( ) चिह्नितपाठो नास्ति ग।

(३) स्यादिति नास्ति ग।

न्यूनानतिरिक्तवृत्तित्वमेवावच्छेदकत्वं निर्व्वाच्यमत आह "तार्णे"ति, "हित्वादौ"त्यादिना यावत्त्व-परिग्रहः ।

दीधितिः ।

एतेन अन्यून-वृत्तित्व-विशेषितमपि परास्तम्, अतएव नानाप्रतियोगि-वृत्त्येक-प्रतियोगिताङ्गीकारेऽपि न निस्तारः ।

दीधिति-प्रकाशः ।

"एतेन" तार्णातार्णोभयत्वावच्छिन्न-प्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वस्य वह्नित्वे सत्त्वेन । "विशेषितम्" अनतिरिक्तवृत्तित्वम्, "अतएव" वह्नित्वादावतिप्रसङ्गादेव, "न निस्तार" इति, धूमत्वादेरिव सर्व्वस्यैव तादृश-प्रतियोगितानतिरिक्तवृत्तित्वेन व्याप्ति-लक्षणस्यासम्भवापातादिति भावः ।

दीधितिः ।

लघुरूप-समनियत-गुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः तादृश-तदवच्छिन्नत्वाप्रसिद्धेरिति चेन्न प्रतियोगितावच्छेदकानतिरिक्त-वृत्तित्वस्य विवक्षितत्वात् ।

दीधिति-प्रकाशः ।

ननु तथापि प्रतियोगिता-धर्म्मिकोभयाभाव-घटित-विवक्षायां प्रमेय-धूमत्वाद्यवच्छिन्नत्वस्याप्रसिद्ध्या नातिव्याप्तिः सम्भवतीत्यत -

आह "लघुरूपे"ति, "तादृशे"ति, तादृश-लघु-रूप-समनियतं यद्गुरु-रूपं प्रमेय-वह्नित्वादि तदवच्छेद्यत्वाप्रसिद्धेः, तथा चैतद्विव-क्षायामतिव्याप्ति विरहेऽपि प्रमेय-वह्निमान् धूमादित्यादाव-व्याप्तिरिति भावः।

"प्रतियोगितावच्छेदके"ति, प्रतियोगितानतिरिक्त-वृत्तित्व-मित्युक्तौ हेतु-समानाधिकरण-यत्किञ्चिदेकाभावत्वादेरपि प्रवेशे गौरवम् अनेक-वृत्त्येक-प्रतियोगिताङ्गीकारेऽपि द्वित्वावच्छिन्न-प्रति-योगिताया व्यासज्यवृत्तित्वानङ्गीकारे तार्णतार्णोभयत्वावच्छिन्न-प्रतियोगिताया अपि वह्नित्व-समान-वृत्तिकत्वात्तदनतिरिक्त-वृत्ति-वह्नित्वस्यापि अवच्छेदकत्वापत्तिरतोऽवच्छेदक पर्य्यन्तानुधावनम्। प्रतियोगितावच्छेदकञ्च विशिष्योपादेयं, * तेन तादृश-प्रतियोगि-तावच्छेदकत्वेनानुगतीकृतानां तत्तद्वह्नित्वानाम् अनतिरिक्त-वृत्ति-त्वेऽपि वह्नित्वस्य न क्षतिः।

तदनतिरिक्तवृत्तित्वञ्च प्रतियोगितावच्छेदकता-नियामक-सम्ब-न्धेन तदभाववति साध्यतावच्छेदकता-नियामक-सम्बन्धेनावृत्तित्वं, तेन तादृश-प्रतियोगितावच्छेदकीभूत-घटत्वादेरपि कालिक-सम्ब-न्धेन वह्नि वृत्तित्वात् सम्बन्ध-सामान्येन तदभाववति समवायेन वह्नित्वस्यावृत्तावपि न क्षतिः। न चावच्छेदकता-नियामक-सम-वाय(१)सम्बन्धेन घटत्वादेरभाववति कालादौ कालिक-सम्बन्धेन घटत्वादेर्वृत्तित्वेऽपि अवच्छेदकत्व-क्षतिः। महाकालो ध्वंसवान्

---

* तथाच वह्निवृत्तिप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यर्थः।

(१) समवाय इति नास्ति ग।

कालपरिमाणादित्यादावपि आकाशत्व-घटत्वादिकमेव पारिभाषि-
कमवच्छेदकम्। तादृश-प्रतियोगितावच्छेदकीभूत-गगनत्वाभाव-
वति गगनत्वादेर्ध्वंसत्वीय-स्वरूप-सम्बन्धेनावृत्तेरिति।

---

दीधितिः।

स्व-समान-वृत्तिकस्यावच्छेदकं ग्राह्यम्। तत्त्वञ्च स्व-पर्य्याप्त्यधिकरण-पर्य्याप्ति-वृत्तिकत्वं, यावत्त्वादिकन्तु न तथा।

---

दीधिति-प्रकाशः।

ननु तथाविध-प्रतियोगितावच्छेदक-तायां तावदुभयत्वाद्यनति-
रिक्तवृत्त्येव वह्नित्वादिकमित्यसम्भव इत्यत आह,* "स्वसमाने"ति।
स्वं पारिभाषिकावच्छेदकत्वेनाभिमतम्। ननु समानत्वम् अन्यूना-
नतिरिक्ताधिकरणकत्वेन समवायित्वादिना वा? द्वयमपि तादृशो-

---

* ननु प्रमेयवान् वाच्यत्वादित्यत्र समवायेन साध्यतायां व्यभिचारिणि प्रमेयत्वाभावाप्रसिद्ध्याऽतिव्याप्तिवारणाय स्वाधिकरणवृत्त्यन्योन्याभाव-प्रतियोगितानवच्छेदक-तत्कत्वं वाच्यं, तत्र अवच्छेदकत्वेनाभिमतम्, एवञ्च वह्निमान् धूमादित्यादौ वह्नित्वं स्वं नैतादृशं तदधिकरणे वह्नौ उभयत्वघटभेदसत्त्वात् तत्प्रतियोगितावच्छेदकमेवोभयत्वमिति वह्नित्वस्य नावच्छेदकत्वमिति किं स्वसमानवृत्तिकत्वनिवेशेनेति चेन्न वह्न्यधिकरणे उभयत्वघटभेदासत्त्वात् तत्प्रतियोगितानवच्छेदकमेवोभयत्वमिति वह्नित्वस्यावच्छेदकत्वापातात्तदुद्धरणम्; एको न द्वौ इत्यादिप्रतीत्या हि एकस्मिन् द्वित्वघटभेदो न विषयीक्रियते किन्त्वेकत्वे द्वित्वाधारतावच्छेदकत्वाभावस्तथा च वह्नौ उभयभेदासत्त्वादुभयत्वमनवच्छेदकमिति समानवृत्तिकत्वनिवेश इति भावः।

भयत्वादौ गतमत आह, "तत्त्वञ्चेति। स्व-समानवृत्तिकत्वञ्चे-त्यर्थः। उभयत्वादेरपि वह्नित्वाधिकरणे पर्य्याप्तेराह, "स्व-पर्य्याप्तौ"ति स्व-पर्य्याप्त्यवच्छेदकावच्छिन्न-पर्य्याप्तिकत्व(१)मित्यर्थः*। तेन यावद्वह्नीनामेव वह्नित्व-पर्य्याप्त्यधिकरणत्वेऽपि न क्षतिः। प्रत्येक-रूपावच्छिन्न-पर्य्याप्त्यवच्छेदकत्वञ्च प्रकृते यावान् यावान् वह्निरिति प्रत्यये च वह्नित्वपर्य्याप्तित्वेनानुगतानां तावत्पर्य्याप्तीनामवच्छेद-कतया यावत्त्वं भासते न तु प्रत्येकरूपावच्छिन्नपर्य्याप्तेरिति† न यावत्त्वादौ वह्नित्व-समानवृत्तिकत्वमिति भावः।

यत्तु स्वपर्य्याप्त्यवच्छेदकता-व्यापक-पर्य्याप्त्यवच्छेदकताकत्व-मर्थः। वह्नित्व-पर्य्याप्त्यवच्छेदक-तत्तद्वह्नित्वावच्छेदेन यावत्त्व-स्यापर्य्याप्तेर्न तत्रातिप्रसङ्ग इति। तन्न तथासत्यनतिरिक्तवृत्ति-त्वांशस्य वैयर्थ्यादिति।

उभयत्वादेरपि वह्नित्व पर्य्याप्त्यवच्छेदकावच्छेदेन समवाय-सत्त्वादाह, "पर्य्याप्तिवृत्तिकत्व"मिति, वह्नित्व-पर्य्याप्त्यवच्छेदकाव-च्छिन्नपर्य्याप्तिकं महानसीयत्वादिकमपीति तदनतिरिक्तवृत्तित्व-मुक्तम्। "यावत्त्वादिक"मित्यादिना तार्णतार्णोभयत्व-परिग्रहः। "न तथा" न वह्नित्व-पर्य्याप्त्यधिकरण-पर्य्याप्तिकम्।

---

* तथाच वह्नित्वपर्य्याप्त्यवच्छेदकं तत्तद्वह्नित्वं तदवच्छेदेन नोभयत्वं पर्य्याप्त-मिति भावः।

† यावत्त्वे तत्तद्वह्नित्वावच्छिन्नपर्य्याप्त्यवच्छेदकता न स्वीक्रियते इति भावः।

(१) पर्य्याप्तवृत्तिकत्वमिति ख।

### दीधितिः ।

पर्य्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीति-साक्षिकः स्वरूप-सम्बन्ध-विशेष एव ।

### दीधिति-प्रकाशः ।

ननु पर्य्याप्तिः समवाय एव, स च प्रत्येक-वृत्त्यावपीत्यत आह, "पर्य्याप्तिश्चे"ति । "एको घट" इति एकमात्र-वृत्ति-धर्म्मावच्छेदेन घटत्वस्य पर्य्याप्तिं दर्शयितुम् । "इमौ द्वा"विति उभय-वृत्ति-धर्म्मा-वच्छेदेनैव द्वित्वस्य पर्य्याप्तिरिति दर्शयितुम् ।

### दीधितिः ।

त्रित्वादिकमपि न द्वित्वादि-समान-वृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः ।

### दीधिति-प्रकाशः ।

ननु प्रत्येकवृत्तित्व-व्यासज्यवृत्तित्वाभ्यामेव समानता, तथाच वह्नि-धूमोभयवान् धूमादित्यादावव्याप्तिस्तदुभयत्वस्य समान-पर्य्याप्तिक-वह्निधूमाकाश-त्रित्वानतिरिक्तवृत्तित्वादत आह "त्रित्वा-दिकमपी"ति ।

ननु द्वौ न स्त इति प्रतितौ प्रतियोगितावच्छेदकता-निया-मकतया पर्य्याप्तिरेव सम्बन्धो भासते न समवायः, अन्यथा (१)

(१) अन्यथेत्यत्र तथा प्रतीति पाठः ख ।

प्रत्येक-सत्त्वेऽपि प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिसत्त्वात् द्वित्वावच्छिन्नाभावो न स्यात्, तथाच पर्याप्ति-सम्बन्धेन उभयत्वाभाववति प्रत्येक-वह्नौ वह्नित्वस्य सत्त्वेनैवावच्छेदकत्वाभावे किमिति स्वसमानवृत्तिकत्व-मवच्छेदक-विशेषणमिति चेत्तादृश-सम्बन्ध विशेषेणानतिरिक्तवृत्तित्व-लाभायैव तदुपादानमित्येके ।

पर्याप्ति-सम्बन्धेन द्वित्वस्याभावो न प्रत्येकस्मिन्, अन्यथा उभयत्रैव प्रत्येक-रूपेण द्वित्वाभाव-सत्त्वादिमौ न द्वाविति प्रतीत्यापत्तेः । न च तदुभयत्वावच्छेदेन (१) द्वित्ववत्ता-ज्ञानं विरोधि तत्रेति वाच्यम् । तदुभयत्वस्यानतिरिक्तवृत्तित्व-रूपावच्छेदकत्वमादाय (२) तादृश प्रतीत्यापत्तेर्दुर्व्वारत्वात् । तादृश-प्रतीतिं प्रत्यपि विरोधित्व-कल्पने तदपेक्षया तत्र द्वित्वाभावानभ्युपगम एव लाघवात्, एको न द्वौ इति प्रतीतेर्द्वित्वाधारतावच्छेदकत्वाभावावगाहित्वेनैवोपपत्तेरित्यन्ये ।

परे (३) तु तादृश-सम्बन्धेन प्रतियोगितावच्छेदकाभाववद्वृत्तित्वमित्युक्तौ तार्णतार्णोभयत्वमपि न प्रतियोगितावच्छेदकं स्यात् उभयत्वाभाववत्प्रत्येक-पर्य्याप्तत्वादुभयत्वस्य, तथाच तदाधारत्वाय प्रतियोगि-व्यधिकरणत्वस्याभाव-विशेषणस्यावश्यकत्वे वह्नित्वादावति-व्याप्तिरतः स्वसमानवृत्तिकत्व-विशेषणम् । न च प्रतियोगि-व्यधिकरणत्वं प्रतियोग्यनधिकरण-वृत्तित्वं, उभयत्वा(४)नधि-

(१) अवच्छेदेनैव इति च । (२) तथाप्रतीत्यापत्तिरित्यर्थः इति च ।
(३) अपरे इति च । (४) द्वित्वा इति च ।

करणञ्च प्रत्येकमपीति तद्दोष-तादवस्थ्यं, पर्य्याप्त्यवच्छिन्न-समवाय-स्यैव प्रकृते प्रतियोगितावच्छेदक-सम्बन्धत्वेन तत्र पर्य्याप्त्यंशं विहाय समवाय-सम्बन्धेन यत्प्रतियोग्यधिकरणं तदन्यत्वस्यैव लाघवेन विवक्षणात्। यद्वा द्वौ मल्लौ इति प्रतीतेरवच्छेदकता-नियामकः पर्य्याप्त्यवच्छिन्न-समवाय एव सम्बन्धो भासते, तथाच तेन सम्ब-न्धेन तदभाव-विवक्षणे तार्णातार्णोभयत्वादेरवच्छेदकत्व-सम्पत्तये प्रतियोगि-अधिकरणत्वविवक्षणापत्तेरतः पर्य्याप्त्यंशमनुपादाय सम-वायादि-रूपमेव प्रतियोगितावच्छेदकता-नियामकसम्बन्धमादाय तदनतिरिक्तवृत्तित्वं निर्व्वाच्यम्। तथा सति वह्नित्वादावतिव्याप्ति-रतः स्वसमानवृत्तिकत्वमिति प्राहुः।

---

दीधितिः।

घटकत्वावच्छेदकत्वं स्वरूप-सम्बन्ध-विशेषः। एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्ति-धर्म्मावच्छिन्नेति वक्तव्यं, तेनोक्ताव्याप्ति-निरासः।

---

दीधिति-प्रकाशः।

"घटकत्वे"ति, प्रतियोगितावच्छेदकानतिरिक्तत्वावच्छेदकत्वं स्वरूप-सम्बन्ध-विशेष इत्यर्थः। (द्वितीयकल्पं परिष्करोति) (१) "एवञ्चे"ति, स्वसमानवृत्तिकत्व-(२) विवक्षणे चेत्यर्थः*। यद्वा

---

* तथाच यद्धर्म्मसमानवृत्ति यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नत्वमित्यर्थ इति भावः।

(१) ( ) चिह्नितपाठो नास्ति ख।

(२) वृत्तिकत्वस्य इति ख।

वह्नित्वान्यूनवृत्ति-तार्णातार्णोभयत्वावच्छिन्नत्वस्य संयोगावच्छिन्न-
त्वस्य च धूम-समानाधिकरणाभाव-प्रतियोगितायां सत्त्वादसम्भव
एव स्यादिति भावः। "उक्ताव्याप्ती"ति, लघु-रूप-समनियत-गुरु-
रूपेण साध्यतायामव्याप्तिरित्यर्थः (१)।

नन्वेवमपि प्रमेयवान् सत्तावत्त्वात् वा मेयत्वादित्यादावति-
व्याप्तिः, प्रमेयत्वस्यावच्छेदकस्याभावाप्रसिद्ध्या सत्तायाः समवाये-
नाभाववति साध्यतावच्छेदकता-नियामक-सम्बन्धेन वृत्तेरप्रसिद्ध्या
च साध्यतावच्छेदके प्रमेयत्वे सत्तायाञ्च तादृशावच्छेदकत्वस्य विर-
हात्। अवच्छेदकानतिरिक्तवृत्ति-पदेन स्व-समानाधिकरणात्यन्ता-
भाव-प्रतियोगितानवच्छेदक-तादृशावच्छेदकतावच्छेदकस्य विव-
क्षणेऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, तत्र धूमत्वस्य स्वरूपत
एवावच्छेदकत्वेनावच्छेदकतावच्छेदक(२)स्याभावात्, स्व-समाना-
धिकरणाभाव-(३) प्रतियोगितावच्छेदक-वृत्ति-तदन्यत्वं यत्समा-
नाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदकं तत्त्वमवच्छेदकत्व-
मित्यभिधानेऽपि दण्डिमान् द्रव्यत्वादित्यादौ द्रव्यत्व समानाधिक-
रणा-भाव-प्रतियोगितावच्छेदकीभूत—दण्ड—वृत्ति-तत्तदन्यत्वानां
दण्ड-समानाधिकरणाभाव—प्रतियोगितावच्छेदकत्वादवच्छेदक-त्व-
विरहात् दण्डादावव्याप्तिः। न च दण्डित्व-सामान्य-लक्षणाधीन-
दण्डिमात्र-विषयक-ज्ञानमेव दण्डाभाव-प्रतियोगितावच्छेदकं, तथा

(१) गुरुरूपावच्छिन्नसाध्यताकाव्याप्तीत्यर्थ इति पाठः च।
(२) अवच्छेदकस्य इति च।
(३) स्वसमानाधिकरणाभावेति नास्ति च।

च तज्ज्ञानीय-तद्व्याप्तित्वं दण्ड-समानाधिकरणाभाव-प्रतियोगिता-नवच्छेदकमिति नाव्याप्तिरिति वाच्यम्। जात्यतिरिक्त-पदार्थस्य किञ्चिद्धर्मावच्छिन्नस्यैवावच्छेदकत्वेन दण्डि-भिन्नाविषयक-(५) दण्डि-विशेष्यक-ज्ञानत्वेनावच्छेदकत्वे वाच्ये, तदपेक्षया दण्डत्वेनैवावच्छेदकत्वे लाघवादाह "वस्तुत" इति।

---

दीधितिः।

वस्तुतस्तु तदवच्छिन्न-प्रतियोगिताकाभाववदसम्बन्ध-स्व-विशिष्ट-सामान्यकत्वं, स्व-विशिष्ट-सम्बन्धि-निष्ठा-भावप्रतियोगितानवच्छेदक-तत्कत्वं वा तदनतिरिक्त-वृत्तित्वं वक्तव्यम्। अतएव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभाव-प्रतियोगितावच्छेदक--गुणान्यत्ववि-शिष्ट-सत्तात्व-तुल्य-वृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः।

---

दीधिति-प्रकाशः।

"तदवच्छिन्ने"ति, तदवच्छिन्नाभाववदसम्बन्धं यद्विशिष्ट-सामान्यं तत्त्वमित्यर्थः। तत्पदं तादृश-स्वरूप-सम्बन्ध-रूपावच्छेदक-परम् *। भवति हि वह्नि-समानाधिकरण-तादृशाभाव-प्रतियोगि-तायाः स्वरूप-सम्बन्ध-रूपं यदवच्छेदकं धूमत्वं तदवच्छिन्नाभाव-

---

* हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकपरमिति भावः।

(१) भिन्नाविशेष्यक इति च।

वति प्रमेय-धूमत्व-विशिष्ट-सामान्यमसम्बद्धमेवेति प्रमेय-धूमत्व-मप्यवच्छेदकम्।

अत्र तादृश-धूमत्वाश्रय-प्रतियोगिक-धूमाकाशोभय(१)त्वाव-च्छिन्नाभाववति धूमत्व-विशिष्टस्य सम्बन्धत्वाद्धूमत्वादावव्याप्तिरत-स्तदवच्छिन्नेति। न च तत्र तादृशावच्छेदकाप्रसिद्ध्या (२) न व्याप्ति-लक्षणातिव्याप्तिरिति वाच्यम्। गगनत्वस्यैव तथात्वात्। गग-नत्व विशिष्टस्य कुत्राप्यधिकरणेऽसम्बद्धत्वेन तदवच्छिन्नाभाववत्य-सम्बद्धत्वात्।

धूमत्वावच्छिन्नाभावस्यापि उत्पत्तिकालावच्छेदेन(३) धूमवति सत्त्वात् गगनत्व-रूप-तादृशावच्छेदकमादाय धूमत्वादिकमप्यनव-च्छेदकं स्यात्, अतः प्रतियोगि-व्यधिकरणत्वेनाभावो विशेष-णीयः (४)। तदर्थश्च साध्यतावच्छेदक-सम्बन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोग्यनधिकरणत्वं* ( तेन प्रतियोगितावच्छे-दकावच्छिन्नस्य यस्य कस्यचित् सामान्यस्य वेत्यादि-विकल्पोक्त-दोषानवकाशः ) (५)। न वा (६) समवायेन धूमानधिकरण-पर्वतादौ धूमत्व-विशिष्टस्य सम्बद्धत्वेऽपि धूमत्व(७)स्यावच्छेदकत्व-क्षतिः। सम्बन्ध-सामान्येन प्रतियोगि-व्यधिकरणत्व-विवक्षणे घट-

---

* तथाच तदवच्छिन्नाभावीयप्रतियोगितावच्छेदकावच्छिन्नानधिकरणीभूतसम्बन्ध-विशिष्टवान्नावच्छेदकत्वमित्यर्थ इति तु तत्त्वम्।

(१) धूमघटोभय इति च।
(२) अप्रसिद्धाविति च।
(३) कालावच्छेदेनेति च।
(४) विशेष्य इति च।
(५) ( ) चिह्नितपाठो नास्ति च।
(६) नवेत्यत्र तेनेति च।
(७) न धूमत्व इति च।

रूप-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदक-घटत्वावच्छि-न्नस्यानधिकरणे गगनादौ घटत्वत्व-विशिष्टादेरसम्बन्धत्वात् अयं घटत्ववान् घटरूपादित्यादौ नाव्याप्तिः, * न वा द्रव्यं गुणादित्यत्र पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्वाभावस्य तादृशस्य प्रतियोगितावच्छे-दकीभूत-पृथिव्यन्यत्व-विशिष्ट-द्रव्यत्वत्वावच्छिन्न-प्रतियोगिताकस्य द्रव्यत्व-रूप-प्रतियोगि-अधिकरणस्याधिकरणे गुणादौ द्रव्यत्वत्व-विशिष्ट-सामान्यस्यासम्बन्धत्वेऽपि क्षतिरिति । तदवच्छिन्नाभावो-ऽपि साध्यतावच्छेदक सम्बन्ध-सामान्ये इत्यादि-क्रमेण प्रति-योग्यसमानाधिकरणः, तेन न कालो घटवान् कालपरिमाणा-दित्यत्र तादृशाभाव-प्रतियोगितावच्छेदकीभूत गगनत्वावच्छि-न्नाभावस्य प्रतियोगि-अधिकरणत्वाप्रसिद्ध्या गगनत्वस्य पारिभाषि-कावच्छेदकत्व-क्षतिः ।

तादृशाभाववदसम्बन्धत्वञ्च साध्यतावच्छेदक-सम्बन्धेन तादृशा-भाववत्सम्बन्धत्व-सामान्याभावः, तेन गगनत्वादि-विशिष्ट-सामान्य-स्यापि गगनत्वावच्छिन्नाभाववति तादात्म्येन स्वत्वनियामक-सम्बन्धादिना सम्बन्धत्वात्पारिभाषिकावच्छेदकाप्रसिद्धौ न व्याप्ति-लक्षणासम्भवः । † न वा तादृशाभाव-प्रतियोगितावच्छेदकीभूत-महानसीय-वह्नित्वावच्छिन्नाभाववति जलादौ वह्नित्व-विशिष्ट-सामान्यासम्बन्धत्वेऽपि वह्निमान् धूमादित्यादावव्याप्तिः ।

तादात्म्येन साध्यतायां तेन सम्बन्धेन इतरप्रसिद्धेरसम्भव-

* गगने संयोगेन वह्नेः सम्बन्धात् वह्निमान् धूमादित्यादावव्याप्तिरिति भावः ।

† सामान्याभावनिवेशस्य फलितार्थकथनमिदम् ।

त्वेति। अविशिष्टेति कारणाच्च गुणकर्मान्यत्व-विशिष्ट-सत्तावान् जातिमत्त्वादित्यत्र विशिष्ट-सत्तात्वावच्छिन्नाभाववति गुणे विशिष्ट-सत्तात्वाश्रयीभूत-सत्तायाः सम्बन्धत्वेऽपि विशिष्ट-सत्तात्वस्य नावच्छेदकत्व-क्षतिः।

स्व-विशिष्टत्वं यद्यपि(१) न साध्यतावच्छेदकता-घटक-सम्बन्धेन; कालो दण्डिमान् ध्वंसवान् वा काल-परिमाणादित्यादौ वृत्तिता-नियामक-संयोगेन ध्वंसत्वीय-विशेषणता-विशेषेण वा साध्यतावच्छेदकतायां तादृशावच्छेदकाप्रसिद्धेः, गगनत्वादेस्तेन सम्बन्धेनावृत्तेः। नापि प्रतियोगितावच्छेदकता-घटकेन, सम्बूपीवादिमत्त्वात् मैयत्वादित्यत्र घटत्व-निष्ठ-प्रतियोगितावच्छेदकता-घटकीभूत-समवायेन सम्बूपीवादिमत्त्वस्य वृत्तेरप्रसिद्धेरनवच्छेदकत्वापातात्। वह्निमान् धूमादित्यादौ विषयितया वह्नित्वज्-ज्ञानाभाव-प्रतियोगितावच्छेदकीभूत-वह्नित्व-विशिष्ट-ज्ञानादेस्तदवच्छिन्नाभाववत्त्वसंयुक्तत्वात्, वह्नित्वादेरवच्छेदकत्वापाताच्च। नापि सम्बन्ध-सामान्येन, घटत्वावच्छिन्नाभाववति गगनत्वावच्छिन्नाभाववति च कालिकादि-सम्बन्धेन घटत्व-गगनत्वादि-विशिष्टस्य साध्यतावच्छेदकीभूत-संयोग-सम्बन्धेन सम्बन्धत्वात्तादृशावच्छेदकाप्रसिद्धाऽसम्भवात्। नापि साध्यतावच्छेदकताघटक-प्रतियोगितावच्छेदकताघटकान्यतर-सम्बन्धेन, कालिक-सम्बन्धेन दण्ड-विशिष्टस्य कालिक-सम्बन्धेन साध्यतायां काल परिमाण-हेतौ (२) तादृशाव-

(१) विशिष्टत्वन्तु इति च।
(२) कालपरिमाणे हेतौ इति च।

च्छेदकाप्रसिद्ध्यापत्तेः। तादृश-प्रतियोगितावच्छेदकीभूत-गगनत्वादेः कालिक-सम्बन्धेनाश्रयस्य घटादेस्तदवच्छिन्नाभाववति कालादौ सम्बद्धत्वात्, कालभेद-विशिष्ट-गगनत्वस्य कालिकसम्बन्धेन घटाद्यवृत्तितयाऽन्यतर-सम्बन्धेन तद्विशिष्ट सामान्यस्य तदवच्छिन्नाभाववदसम्बद्धतया तत्रावच्छेदक प्रसिद्धावपि तादात्म्येन धूम-सम्बन्धिनः संयोगेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः, तादृश-प्रतियोगितावच्छेदकीभूत-धूमत्वावच्छिन्नाभाववति प्रतियोगितावच्छेदकता-घटक-समवायेन धूम-विशिष्टस्य परमाण्वादेः संयुक्तत्वेन धूमादेरनवच्छेदकत्वात्। तथापि तदवच्छिन्नाभाववति येन येन सम्बन्धेन यद्विशिष्ट-सामान्यमसम्बद्धं तेन तेन सम्बन्धेन तत्प्रकारक-ज्ञानत्वावच्छिन्न भिन्नं साध्यतावच्छेदकता-घटक-सम्बन्धेन यद्धर्म-प्रकारक-ज्ञानं तद्धर्मावच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति वस्तुतार्थः(१)। विषयिता-सम्बन्धेन वह्नित्व-प्रकारक-ज्ञानत्वावच्छिन्न-भिन्नं समवायेन वह्नित्व-प्रकारक-ज्ञानमपीति वह्निमान् धूमादित्यादौ वह्नित्वादेर्नावच्छेदकत्व-सम्भवः। अतएव प्रमेय-धूमत्व-प्रकारक ज्ञानत्वावच्छिन्ने धूमत्व-प्रकारक-ज्ञानत्वावच्छिन्न-भेदाभावात् स्वरूप-सम्बन्ध-रूपावच्छेदकत्वस्य लक्षणे प्रवेशेऽपि न तत्रातिव्याप्ति-सम्भव इत्यभिप्रेत्य तादृश-लघु-रूपाघटितं कम्बुग्रीवादिकमुपक्रान्त वानवच्छेदक-लक्षण-पूर्व्वपक्षोपक्रमे दीधिति-कारः। विवेचयिष्यते चेदमधिकम्। महानसीय-वह्नित्वावच्छिन्न-प्रतियोगिताक तादृशाभाववति वह्नित्व-विशिष्टस्य महानसीय-वह्नेरसम्बद्धत्वात्

(१) वस्तुतार्थः इति च।

सामान्येति, पर्व्वतीय-वह्न्यादेर्वह्नित्व-विशिष्ट-सामान्यस्य महान-सीय-वह्न्याद्यभाववति सत्त्वात्तत्राव्याप्तिः।

ननु गुणकर्म्मान्यत्व-विशिष्ट-सत्तावान् जातेरित्यत्राव्याप्तिः, विशिष्टस्यानतिरेकेण विशिष्ट-सत्तात्वावच्छिन्नाभाववति विशिष्ट-सत्ताया अपि सत्त्वात्। न च तदवच्छिन्नाभाववदधि-करणतानवच्छेदकत्वं तदर्थः, प्रमेय-वह्निमान् धूमादित्यादाव-व्याप्तेः। तादृश-महानसीय-वह्नित्वावच्छिन्नाभाववति प्रमेय-वह्नित्व-विशिष्टस्य सत्त्वेऽपि प्रमेय-वह्नित्वस्य गुरुतया आधेयता-नवच्छेदकत्वात्। प्रमेय-वह्निमान् पर्व्वत इति प्रतीति-बलात् गुरुणोऽप्याधेयतावच्छेदकत्व-स्वीकारेऽपि सत्तावान् मेयत्वादि-त्यत्राव्याप्तिः। तत्र सत्तात्वावच्छिन्नाभाववति आत्मादौ सम-वायेन हत्तेरप्रसिद्धतया सत्तात्वस्य पारिभाषिकावच्छेदकत्वा-भावात्, इत्यत्तरेणाह "स्वविशिष्टे"ति। स्वं पारिभाषिकाव-च्छेदकत्वेनाभिमतम्। तद्विशिष्टत्वञ्च पूर्व्वोक्त-सम्बन्धेन बोध्यम्। तेन न पूर्व्वोक्त-दोषः। तत्पदं तादृश-स्वरूप-सम्बन्ध-रूपावच्छेदक-परम्। तथाच हेतु-समानाधिकरण-तादृशाभाव-प्रतियोगिताव-च्छेदकं यद्विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं तत् पारिभाषिकावच्छेदकमित्यर्थः। विशिष्ट-सत्तात्वाश्रय-सत्ता-सम्बन्धि-गुणादि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वाद्विशिष्ट-सत्ता-त्वस्यानवच्छेदकत्वापत्तितः स्वविशिष्टेति। प्रतियोगितावच्छे-दकमात्रस्यैव सम्बन्धान्तरेण स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रति-योगितावच्छेदकत्वात्तादृशावच्छेदकाप्रसिद्ध्या व्याप्ति-लक्षणाव्याप

इत्यत: साध्यतावच्छेदक-सम्बन्धेन सम्बन्धित्वं वाच्यम्। संयोगेन साध्यतायां तादृश प्रतियोगितावच्छेदकमात्रस्यैव स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वादवच्छेदकाप्रसिद्ध्याऽव्याप्तिरत: प्रतियोगि-व्यधिकरणत्वमभावे देयम्।

साध्यतावच्छेदक-सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नास-मानाधिकरणत्वं तदर्थः। तेन वह्निमान् धूमादित्यादौ वह्नि-समाना-धिकरण-घटाद्यभावस्यापि कालिकादि-सम्बन्धेन प्रतियोगि-समा-नाधिकरणत्वात्तादृशाभाव-प्रतियोगितावच्छेदकीभूत घटत्वादेर्वह्नि-त्वादि-विशिष्ट सम्बन्धि-निष्ठो यः सम्बन्ध सामान्येन प्रतियोगि-व्यधिकरणोऽभाव*-स्वप्रतियोगितानवच्छेदकत्वेऽपि नासम्भवः। न च शब्दवान् गगनत्वादित्यादौ शब्द-समानाधिकरणस्य घटत्वाद्यभावस्य केनापि सम्बन्धेन प्रतियोगि-समानाधिकरणत्वा-भावात् घटत्वादौ शब्दत्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगिता-वच्छेदकत्वस्यैव सत्त्वात् शब्दत्वादेर्नावच्छेदकत्वमिति नासम्भव इति वाच्यम्। घटत्वादेरपि स्वाश्रय-संयोगादिना गगनादि-सम्बन्धत्वात्। एवं समवायेन गगनाद्यभावस्यापि शब्द-समाना-धिकरणस्य तादात्म्येन स्व-प्रतियोगि-समानाधिकरणत्वात्प्रतियोगि-व्यधिकरण-तादृशाभावान्तर-प्रतियोगितानवच्छेदकत्वात् गगन-त्वादेस्तमादायापि शब्दत्वस्यावच्छेदकत्वं बोध्यम्। तादा-त्म्यादि-सम्बन्धेन साध्यतायामव्याप्तिवारणाय प्रतियोग्य-सम्बन्धि-

* [illegible] इति पाठः।

त्वस्यैव तदर्थत्वादिति (१)। न चैवं सर्व्वस्यैव धर्मस्य यत्किञ्चित्-सम्बन्धेन (२) सत्त्वात् प्रतियोगि-व्यधिकरणाभावस्यैवाप्रसिद्धिः, विशिष्ट-प्रतीति-विषयस्यैव सम्बन्धत्वात्, सर्व्वत्र च सर्व्वस्यैव विशिष्ट-प्रतीतौ मानाभावात्। एतावताप्यसम्भवस्यानपायाच्चेति।

सत्तात्वविशिष्ट-सम्बन्धि-निष्ठो यः प्रतियोगि-व्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकं विशिष्ट-सत्तात्वमपीति सत्तावान् जातेरित्यत्राव्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नेति। प्रतियोगितानवच्छेदकत्वमत्रावच्छेदकत्वं हेतु-समानाधिकरणाभाव-प्रतियोगितावच्छेदकता घटक-सम्बन्धेन बोध्यम्। तेन विषयिता-सम्बन्धेन घटत्व-विशिष्टस्य ज्ञानादेः संयोगेनाभावस्य प्रतियोगि-व्यधिकरणस्य घटत्वादि-विशिष्ट-सम्बन्धि-निष्ठस्य प्रतियोगितायाः विषयिता-सम्बन्धेनावच्छेदकत्वेऽपि घटत्वादेर्न तादृशावच्छेदकत्वा-प्रसिद्धिः। विषयितया धूम-समानाधिकरणाभाव-प्रतियोगितावच्छेदकस्य वह्नित्वादेर्वह्नित्व-विशिष्ट-सम्बन्धि निष्ठाभाव प्रतियोगितायाः समवायेनानवच्छेदकत्वात् वह्नित्वादेर्न तादृशावच्छेदकत्वापत्तिर्वा। नन्वेवं हेतु-समानाधिकरणाभावे प्रतियोगि-व्यधिकरणत्वस्य प्रतियोगितावच्छेदकावच्छिन्नासमानाधिकरणत्व-विवरणं व्यर्थं, जाति-समानाधिकरणाभाव-प्रतियोगितावच्छेदकं यद्-द्रव्यत्वत्वं तदवच्छिन्नाभाववति विशिष्टसत्तात्व-विशिष्टस्यासम्बन्धात्, द्रव्यत्वत्वस्य विशिष्ट-सत्तात्व विशिष्ट-सम्बन्धि-

(१) तदर्थतया वाच्यत्वादित्यपीति च।

(२) सम्बन्धेनेति अधिकं च।

निष्ठाभाव-प्रतियोगितानवच्छेदकत्वाच्च लक्षण-द्वयेऽपि तादृश-द्रव्यत्वाभावमादाय (१) विशिष्ट-सत्तात्वस्य प्रतियोगितावच्छेदकत्वेन गुणान्यत्व-विशिष्ट-सत्तावान् जातेरित्यत्राति-व्याप्ति-विरहादिति। अत्र ब्रूमः; प्रतियोगितावच्छेदकावच्छिन्नानुपादाने हि यत् प्रतियोगिता-विशिष्टस्यानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकं यद्विशिष्ट-सम्बन्धि-निष्ठ-तादृशाभाव-प्रतियोगितानवच्छेदकं तद्भिन्नं यत्साध्यतावच्छेदकमित्यर्थः, तथा चाव्याप्तिः वह्निमान् धूमादित्यादौ महानसीय-वह्नि-निष्ठा या वह्नित्वावच्छिन्ना प्रतियोगिता तद्विशिष्ट-महानसीय-वह्नेरनधिकरणं धूमाधिकरणं पर्व्वतादि तत्प्रतियोगितावच्छेदक-वह्नित्वस्य वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठाभाव प्रतियोगितानवच्छेदकत्वेन वह्नित्वादेरपि पारिभाषिकावच्छेदकत्वात्। प्रतियोगि-भेदेऽप्येकाभाव-प्रतियोगिताया अभेदे तु गुणकर्म्मान्यत्व-विशिष्ट-सत्तावान् जातेरित्यत्रातिव्याप्तिः, विशिष्ट-सत्ताभावस्य द्रव्यत्वाभाव-समनियततया एकत्वेन द्रव्यत्व-निष्ठ-प्रतियोगिताया अपि सत्ता-निष्ठतया गुणादेः प्रतियोगिता-विशिष्ट-सत्ताधिकरणत्वेन द्रव्यत्वाभावस्यापि प्रतियोगि-अधिकरणत्वाभावात्। न चैवं समवायेन गगनाभावस्य संयोगेन सत्ताभावाभिन्नतया समवायेन प्रतियोगि-अधिकरणत्वाभावस्य जातिमत्त्वसम्भवात् जायमतिव्याप्तिरिति वाच्यं तत्रापि लक्षणस्याप्रसम्भवात्। संयोगेन घटाभावस्यापि घटवृत्तित्व-विशिष्ट-प्रमेयत्वाभावाभिन्नतया तत्प्रतियोगिता-विशिष्ट-प्रमेयत्वस्य

(१) आदायैव इति ग।



केवलान्वयितया प्रतियोगि-व्यधिकरणाभावस्यैवाप्रसिद्धेः। न च प्रतियोगितावच्छेदक-भेदेनैव प्रतियोगिता भिद्यत इति द्रव्यत्व-त्वावच्छिन्ना प्रतियोगिता विशिष्ट-सत्तात्वावच्छिन्न-प्रतियोगितातो भिन्नेति वाच्यं मानाभावात् प्रतीति-वैलक्षण्यस्यावच्छेदक-भेदेनो-(१)पपत्तेः! न चैवं सति (२) (क) जगति समवायवदेकैव प्रति-योगिता (ख) स्यात् लाघवादिति वाच्यम् इष्टत्वात्।

(ग) वस्तुतस्तु प्रतियोगितावच्छेदक-भेदेन प्रतियोगिता-भेदेऽपि एतद्रूपान्यत्व-विशिष्ट-सत्तावान् जातेः, आकाशान्यत्व-विशिष्टद्रव्यवान् द्रव्यत्वादित्यादौ समवायेन संयोगेन च साध्यतायामति व्याप्तिः (घ)। (ङ) एतद्रूपासमवेतैतद्रूप-भिन्न-

(१) भेदेनैवो इति च। (२) सतीति नास्ति।

(क) अवच्छेदकभेदेनैव प्रतीति-वैलक्षण्ये सतीत्यर्थः।

(ख) निखिलाभावनिरूपिता एकैव प्रतियोगिता स्यादित्यर्थः, घटत्वाद्यव-च्छेदकभेदेनैव घटो नास्तीत्यादि प्रतीतिवैलक्षण्योपपत्तेरिति भावः।

(ग) ननु प्रतियोगितावच्छेदकभेदेन तत्तत्प्रतियोगिताभेदानङ्गीकारे घटत्वादेः घटत्वादिसाधारण प्रतियोगिताया न्यूनवृत्तित्वेनावच्छेदकत्वानुपपत्तिरत आह-'वस्तुतस्त्वि'ति।

(घ) साध्याभावस्य सत्तादिरूपप्रतियोगिव्यधिकरणत्वेन सद्भावघटन त्वादिति भावः।

(ङ) रूपान्यत्वविशिष्टसत्तायाः साध्यत्वे रूपान्यत्वविशिष्टसत्तावत्यपि रूपासमवेतत्वावच्छिन्नाभावस्य सत्वात्तन्निष्ठाभाव प्रतियोगितावच्छेदकं रू-पासमवेतत्वं तत्तु केवलविशिष्टाभावप्रतियोगितावच्छेदकं भवतीति रूपान्यत्वविशिष्ट-सत्तात्वं पारिभाषिकावच्छेदकं भवेत् तथाच नातिव्याप्तिरितो रूपान्यत्वमपहाय साध्य एतद्रूपान्यत्वेनोक्तम्। एतद्रूपासमवेतत्वावच्छिन्नाभावस्तु एतद्रूपान्यत्वविशिष्ट-सत्तावत्यपि तद्रूपे वर्त्तते एतद्रूपासमवेतैतद्रूपभिन्नत्वावद्रूपसमवेतत्वाद्यवच्छेदकाभा-

(क) यावत्समवेतस्याकाशासंयुक्तस्य काशातिरिक्त यावत्-द्रव्य-संयुक्तस्य चाप्रसिद्धया प्रतियोगि-व्यधि-करण-तादृशाभावासम्भवादतो हेतु-समानाधिकरणाभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नास-मानाधिकरणत्वं वाच्यमिति दिक् ।

ननु महाकालो घटवान् काल-परिमाणादित्यत्राव्याप्तिः, तादृश-प्रतियोगितावच्छेदकीभूत-गगनत्वस्य गगनत्व-विशिष्ट-सम्बन्ध्यप्रसिद्धया पारिभाषिकावच्छेदकत्वाभावात् । न च सम्बन्ध-सामान्येन स्व-विशिष्ट-सम्बन्धित्वं वाच्यं तथाच तादात्म्येन द्रव्य-नियामक-संयोगेन वा गगनत्व-विशिष्ट-सम्बन्धी प्रसिद्ध एवेति वाच्यं तादृश-सम्बन्धिनि (ख) कालिक-सम्बन्धेन गगनाभावस्य (ग) सत्त्वात् तत्तत्प्रतियोगितावच्छेदकत्वेन गगनत्वस्यावच्छेदकत्वाभावात् । न च स्वविशिष्ट-सम्बन्धित्वं सम्बन्धसामान्येन वाच्यं तन्निष्ठाभावोऽपि सम्बन्ध-सामान्येनैव (१) वाच्यः सम्बन्ध-सामान्येन

---

चैतद्रूपासमवेतत्वस्य एतद्रूपान्यत्वविशिष्टसत्तासम्बन्धिभिन्नाभावप्रतियोगितावच्छेदकत्वेन साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वाभावादतिव्याप्तिरिति विभावनीयम् ।

(क) अत्रैतद्रूपासमवेतैतद्रूपभिन्नयावत्समवेताद्यभावमादायापि नातिव्याप्ति-परिहार इत्याशयेनाह "एतद्रूपासमवेते"ति एतद्रूपासमवेतैतद्रूपभिन्नयत्किञ्चित्-समवेताद्यभावमादायातिव्याप्तिपरिहारसम्भावनायां अभावादाह "एतद्रूपभिन्न-याव"दित्यादि ।

(ख) गगन-परमाण्वादाविति शेषः ।

(ग) गगनाभावस्यापि सम्बन्धधर्म्मिकोभयाभावघटितप्रतियोगिव्यधिकरण-त्वादिति भावः ।

(१) सामान्येनेति च ।

गगन सम्बन्धिनि च न तेन सम्बन्धेन गगनाभाव इति वाच्यं धूम-समानाधिकरण-तादृशाभाव-(क)-प्रतियोगितावच्छेदकीभूत-द्रव्यत्वत्वादे(१)र्वह्नित्व--विशिष्ट--सम्बन्धिनि सम्बन्ध-सामान्येन योऽभाव(ख)स्तत्प्रतियोगितानवच्छेदकत्वात् वह्नित्वादेरप्यवच्छेदकत्वापातात् । नापि तादात्म्येन सम्बन्धित्वं प्रतियोगित्वञ्च वाच्यं विशिष्ट-सत्तात्वस्य सत्तात्व-विशिष्ट-सम्बन्धि-निष्ठ-भेद-प्रति-योगितानवच्छेदकतया सत्तावान् जातेरित्यत्र सत्तात्वस्यावच्छेदकत्वापातात् ।

यस्तु हेतु-समानाधिकरण-तादृशाभाव-प्रतियोगितावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन स्व-विशिष्ट-सम्बन्धित्वं प्रतियोगित्वञ्च वाच्यं, भवति हि काल-परिमाण-समानाधिकरणो गगन-भेदः कालिक-सम्बन्धेन प्रतियोगि-व्यधिकरणस्तत्प्रतियोगितावच्छेदकीभूत-तादात्म्य-सम्बन्धेन यद्गगनत्व-विशिष्ट-सम्बन्धि तन्निष्ठो यो भेदस्तत्प्रतियोगितानवच्छेदकं गगनत्वमिति । न च विशिष्ट-सत्तात्वावच्छिन्न-प्रतियोगिक-भेदस्यापि गुण-निष्ठतया तत्-प्रति-योगितावच्छेदक-तादात्म्य-सम्बन्धेन सत्तात्व-विशिष्ट-सम्बन्धिनि वर्त्तते यो भेदस्तत्प्रतियोगितानवच्छेदकं विशिष्ट-सत्तात्वमिति सत्तावान् जातेरित्यत्राव्याप्तिरिति वाच्यं विशिष्ट-सत्तात्वस्य गुरुतया जाति-समानाधिकरण-तादृश-भेद-प्रतियोगितायाः सत्तात्वेनैवा-

(क) उभयाभावघटितप्रतियोगिवैयधिकरण्यानवच्छेदकत्वेन द्रव्यत्वाभाव इत्यर्थः ।

(१) घटत्वादेरिति ग ।

(ख) घटीयाभावावच्छेदकत्वाभाव इत्यर्थः ।

वच्छेदात्। तथाच साध्यतावच्छेदक-समवायेन स्व-प्रतियोगि-तावच्छेदक-सत्तात्वावच्छिन्न-समानाधिकरणत्वादिविशिष्ट-भेदस्येति न विशिष्टाभावो लक्षण-घटक इति भावः। तत्र वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसम्बन्धेन प्रतियोगि-व्यधिकरण-धूम-समानाधिकरण-समवाय-सम्बन्धावच्छिन्नाभाव-प्रतियोगिता-वच्छेदकं रूपत्वम् उत्पत्तिकालेऽवयविनि रूप-सामान्याभावस्य सत्त्वात् तत्प्रतियोगितावच्छेदकीभूत-समवाय-सम्बन्धेन वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठो यः समवायावच्छिन्न-प्रतियोगिताको-ऽभावस्तत्प्रतियोगितानवच्छेदकमित्यव्याप्तेः। न च स्व-विशिष्ट-सम्बन्धि-निष्ठाभावे प्रतियोगि-व्यधिकरणत्वं साध्यतावच्छेदक-सम्बन्धेनैव वक्तव्यं न तु प्रतियोगितावच्छेदकसम्बन्धेन, तथाच वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठो यो रूपाभावः स संयोगेन स्व-प्रति-योगि-व्यधिकरण एवेति तत्प्रतियोगितावच्छेदकं रूपत्वमिति नाव्याप्तिरिति वाच्यम् इदं जल-द्व्यणुकवत् जल-द्व्यणुक-संयोगादि-त्यत्र संयोगेन साध्यतायां जल-द्व्यणुक-संयोग-समानाधिकरण-ताहशाभाव-प्रतियोगितावच्छेदकं रूपत्वं तत्प्रतियोगितावच्छेदकी-भूत-समवायेन जल-द्व्यणुकत्व-विशिष्ट-सम्बन्धिनि जल-परमाणौ समवायावच्छिन्न-प्रतियोगिताकः संयोगेन प्रतियोगि-व्यधिकरणो यो घटाद्यभावस्तत्प्रतियोगितानवच्छेदकमित्यव्याप्तेः जल-परमाणौ रूप-सामान्याभावस्याभावादिति।

अथ केचित् साध्यतावच्छेदक-सम्बन्धसामान्ये यद्विशिष्ट-प्रति-योगिकत्व यादृश-प्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिक-

त्वोभयाभावसत्त्वात्पारिभाषिकावच्छेदकम् । कालो घटवान् काल-परिमाणादित्यत्र तादृशाभाव-प्रतियोगितावच्छेदकं गगनत्वं कालिक सम्बन्ध-सामान्ये च गगनत्व-विशिष्ट प्रतियोगिकत्व-तद-वच्छिन्नाभाववदनुयोगिकत्वोभयाभाव-सत्त्वात् न गगनत्वस्य पारि-भाषिकावच्छेदकत्व-क्षतिः । गगनाभावस्य प्रतियोगि व्यधिकर-णत्वं पूर्व्वोक्त-रीत्या निर्व्वाच्यम् । स्व-विशिष्ट-प्रतियोगिकत्वञ्च विशिष्योपादेयम् । तेन प्रमेय-धूमत्व-विशिष्ट-प्रतियोगिकत्व-घटितो भयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः । इत्यञ्च (क) तादृशोभयाभाव-कूट एव लक्षण-घटकस्तेन वह्नित्व-विशिष्ट-महानसीय-वह्नि-प्रतियोगिकत्व-महानसीय-वह्नित्वाव-च्छिन्नाभाववदनुयोगिकत्वोभयाभावस्य संयोग सामान्ये सत्त्वेऽपि न वह्नित्वस्यावच्छेदकत्वमिति ।

(ख) इदन्त्ववधेयं ; हेतु समानाधिकरणाभावस्य प्रतियोगि-व्य-धिकरणत्व-निरुक्तौ प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिकत्व-मपहाय यद्धर्म्म-विशिष्ट-प्रतियोगिकत्वमात्रमुपादेयं, तथाच साध्य-तावच्छेदक-सम्बन्ध-सामान्ये यद्धर्म्म-विशिष्ट-प्रतियोगिकत्व-हेत्व-धिकरणीभूत-यत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाव-कूटवत्त्वं(ग) तद्ध-र्म्म-भिन्नं यत्साध्यतावच्छेदकं तदवच्छिन्न-सामानाधिकरण्यं व्याप्ति-रित्येतावतैव प्रमेय-धूमवान् वह्नेरित्यत्रातिव्याप्तेः कालो घटवान्

---

(क) स्वविशिष्टप्रतियोगिकत्वस्य विशिष्योपादानस्याभ्युपगमे चेत्यर्थः ।

(ख) पूर्व्वकल्पे गौरवात् प्रकारान्तरमाहेदमित्यादिना ।

(ग) पूर्व्वोक्तरीत्या साध्याभावनिवेशावश्यकत्वात् कूटेत्यादि ।

काल-परिमाणादित्यादौ चाव्याप्तेर्वारणे तादृशोभयाभाव-घटितं लक्षणं नादरणीयम्। धूम-संयोग-सामान्ये प्रमेय-धूमत्व-विशिष्ट-तत्प्रतियोगिकत्व-वह्न्यधिकरणायोगोलकानुयोगिकत्वोभयाभाव-कूट-सत्त्वेनातिव्याप्तेरभावात्। कूटपद दानाच्च संयोग सामान्ये वह्नि-त्व-विशिष्ट महानसीय-वह्नि-प्रतियोगिकत्व हेत्वधिकरणीभूत-पर्व्व-तानुयोगिकत्वोभयाभाववत्त्वेऽपि वह्नित्व-विशिष्ट-पर्व्वतीय-वह्नि-प्रतियोगिकत्व-पर्व्वतानुयोगिकत्वोभयवत्त्वात् पर्व्वतीय-वह्नि-सं-योगस्य तादृशोभयाभावासत्त्वात् न तादृशोभयाभावकूटवत्त्वमिति न वह्निमान् धूमादित्यव्याप्तिरिति।

केचित्तु तादात्म्य-साध्यतावच्छेदकान्यतर-सम्बन्धेन यत् स्व-विशिष्ट-सम्बन्धितन्निष्ठो यस्तदन्यतर सम्बन्धेन प्रतियोगि-अधिकर-णोऽभावस्तत्प्रतियोगितानवच्छेदक-तत्कत्वमित्यर्थः। (क) गगनत्व-विशिष्ट-तादृश-सम्बन्धिनि गगने वर्त्तते यः कालिक-सम्बन्धेन गगना-भावः स तादात्म्येन प्रतियोगि-समानाधिकरण एवेति न तमा-दाय गगनत्वस्यावच्छेदकत्व-क्षतिः।(ख)सत्तावान् जातेरित्यत्रान्य-तर सम्बन्धेन तादात्म्य-समवायेन गुणकर्म्मान्य-सत्ताया असम्बन्धिनि गुणे सत्तात्व-विशिष्ट-सम्बन्धिनि वर्त्तते योऽभावस्तत्प्रतियोगिताव-च्छेदकमेव गुणकर्म्मान्यसत्तात्वमिति नाव्याप्तिरित्याहुः। तदपि न साधीयः; आकाशं शब्द-समानाधिकरण-वह्निमत् शब्दादित्यत्र(ग)

---

(क) तादात्म्यनिवेशस्य फलमाह गगनत्वेत्यादिना।

(ख) साध्यतावच्छेदकसम्बन्धनिवेशस्य फलमाह सत्तावानित्यादिना।

(ग) वह्नित्वेनैव वह्नेः साध्यत्वे आकाशादावुक्तदोषाद्विशेषणमिदं वह्निमती

वृत्तिनियामक-संयोगेन साध्यतायामव्याप्तेः; भवति हि धूम-समानाधिकरण-तादृशाभाव-प्रतियोगितावच्छेदकं गगनत्वं तच्च तादृशसम्बन्धेन धूम-समानाधिकरण-वह्नित्व-विशिष्ट सम्बन्धिनि गगने वह्नौ च वर्त्तते यस्मात्तादृश-सम्बन्धेन प्रतियोगि-व्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकमिति वह्नौ साध्यतावच्छेदकीभूत-वृत्तिनियामक-सम्बन्धेन गगने तादात्म्येन गगनस्य च सम्बद्धत्वेन तादृश-गगनाभावस्य प्रतियोगि-व्यधिकरणत्वाभावात्।

अन्ये तु येन येन सम्बन्धेन स्व-विशिष्ट-सम्बन्धि यद्यत् तेन तेन सम्बन्धेन प्रतियोगि-व्यधिकरणो यस्तन्निष्ठोऽभावस्तत्प्रतियोगितानवच्छेदक-तत्कत्वमित्यर्थः। न च इदं सर्व्वत्वप्रमेयत्वादिति समवायादिना साध्यतायां व्यभिचारिणि सर्व्वत्वस्य पारिभाषिकावच्छेदकत्वं न स्यात्। विषयितया कालिकेन वा सर्व्वत्व-विशिष्ट-सम्बन्धिनि विषयितया कालिकेन वा प्रतियोगि-व्यधिकरणाभावस्याप्रसिद्धेरिति वाच्यं विषयिता सम्बन्धे निरुक्तप्रतियोगि-प्रतियोगिकत्व-स्व-विशिष्ट-सम्बन्ध्यनुयोगिकत्वोभयाभावस्य सत्त्वादुक्तरीत्या ईश्वर-ज्ञानान्यत्व-विशिष्ट-घटाभावे एव प्रतियोगि-वैयधिकरण्यस्य प्रसिद्धि-सम्भवात्। साध्यतावच्छेदक-सम्बन्धेन सम्बन्धित्वं प्रतियोगित्वञ्च वाच्यमित्यपेतनचोत्तरकल्पाभिप्रायेण, अतो न तद्विरोध इत्याहुः (क)।

---

वृत्तिनियामकसंयोगेन गगनस्यावृत्ततया गगनाभावस्य प्रतियोगि-वैयधिकरण्या-सम्भावाद्व्याप्तिरत आह भवतीत्यादि।

(क) अयमेव—अन्यत्र संयोगेनोत्तरपक्षाभिप्रायकत्वमर्थगङ्गाधर-प्रकाशस्य कारणमुक्तम्।

अस्यास्तु वाकारो (क) व्यवस्थित-विकल्पार्थः । तेन यत्र तादृश-प्रतियोगितावच्छेदके साध्यतावच्छेदक-सम्बन्धेन स्व-विशिष्ट-सम्बन्धी अप्रसिद्धस्तत्र तदवच्छिन्नाभाववदसम्बद्ध-स्व-विशिष्ट-सामान्यकत्वमेवोपादेयम् । यत्र तु तदवच्छिन्नाभाववति साध्यतावच्छेदक-सम्बन्धेन सम्बन्धित्वमप्रसिद्धं तत्र स्व-विशिष्ट-सम्बन्धि-भिन्नेत्या-त्यादिकमेवोपादेयम् । तेन कालो घटवान् काल-परिमाणादित्यादौ गगनत्व-विशिष्ट-सम्बन्धिनोऽप्रसिद्धया तदवच्छिन्नाभाववदित्यादिकमेवोपादेयम् । सत्तावान् मेयत्वादित्यादौ तु सत्तात्वावच्छिन्नाभाववति सामान्यादौ समवायेन सम्बन्धत्वस्याप्रसिद्धया स्वविशिष्ट-सम्बन्धीत्यादि-रूपमेवोपादेयमिति । वस्तुतस्त्वित्या-रभ्य लक्षण-द्वयमेव व्यवस्थित-वैकल्पिकमेकः कल्पः । अतएव मिलित्वैक-कल्पना-सूचनाय ग्रन्थे तदनतिरिक्तवृत्तित्वमित्युक्तम् । एवञ्च (ख) दूषणाभास-समाधानाभासा नादरणीया इति प्राहुः (ग) ।

---

(क) दीधितौ अनवच्छेदकतत्त्वं वेति वाकार इत्यर्थः ।

(ख) "एवञ्च" वाकारस्य व्यवस्थितविकल्पार्थकत्वे चेत्यर्थः । घटवान् काल-परिमाणादित्यादावनवच्छेदकाप्रसिद्धिरूपदूषणाभासः, तत्तद्धर्मितत्तत्साधारणरूपसमाधानाभासो ज्ञेयः, वस्तुत उक्तरीत्याऽप्रसिद्ध्यभावाद्दूषणस्याभासत्वं तत्तद्धर्मितत्समाधानस्य चाभासत्वमप्रयोजकत्वादिति भावः ।

(ग) अस्यैतमप्यत्राविरोधरूपमर्थं ज्ञापनाय प्राहुरित्युक्तम् । वस्तुतस्तु तादृश-प्रकर्षत्वेऽपि कालो घटवान् कालपरिमाणादित्यादावुक्तदोषेण प्रकृतावच्छेदकत्वा-नवच्छेदकत्वपक्षकत्वे सत्तावान् मेयत्वादित्यत्र प्रकृतनिरुक्तावच्छेदकत्वा-भावेन सत्तात्वेऽवच्छिन्नता भवं विनैव सत्ताद्यभिन्नप्रतियोगिकत्वात्: प्राहुरित्य-नेनाभिहितं इति विभावनीयम् ।

प्रतियोगितावच्छेदकानतिरिक्त-वृत्तित्वमित्यस्याविर्थं प्रका-शयति "अतएवे"ति तदवच्छिन्नाभाववदित्यादि-विवक्षणादेवे-त्यर्थः । "तुल्य-वृत्तिकत्वेऽपी"त्यपिरभ्युपगमे । तेन द्वित्वादि-वह्निविशिष्ट-धर्मस्यापि विशेष्य-विशेषण-सम्बन्धेषु पर्य्याप्तत्व-स्वीकारे नायं दोष इति सूचितम् ।

अत्रेदं चिन्त्यम् । हेतु-समानाधिकरणाभाव-प्रतियोगिताव-च्छेदकं यद्दिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं तद्भिन्नं यत्साध्यतावच्छेदकमित्युक्तौ विशिष्टस्यानतिरिक्तत्व-मते वह्निमान् धूमादित्यादावव्याप्तिर्महानसीय-वह्नित्वस्य पारिभाषिकावच्छेदक-त्वेन वह्नित्वे तद्भेदाभावात् । न चावच्छेदकत्वं व्याप्यवृत्तीति तद-वच्छिन्न-भेदो वह्नित्वे वर्त्तत एवेति वाच्यं स्वरूप-सम्बन्ध-रूपावच्छे-दकस्य भेद-प्रतियोगित्वेन प्रकृत-लक्षणेऽप्रवेशात् (किन्तु पारिभाषि-कावच्छेदकभिन्नत्वेन)(१) (क) । तस्मात्तदघटितं यत्साध्यतावच्छेद-कमिति वक्तव्यम् । तदघटितत्वञ्च तदविषयक-प्रतीति-विषयत्वं, भवति च वह्नित्वं महानसीय-वह्नित्वाविषयक-प्रतीति-विषयः । तादृश-पारिभाषिकावच्छेदकता येन रूपेण तेन रूपेण तदविषय-कत्वं वाच्यं, तेन (ख) महानसीयत्व-विशिष्टत्वेन वह्नित्वाविष-

---

(१) ( ) चिह्नित पाठोऽपि न युक्तः । अत्र तु "किन्तु पारिभाषिकाव-च्छेदकत्वेन" इति पाठः समीचीनतया प्रतिभाति ।

(क) स्वरूपसम्बन्धरूपावच्छेदकत्वमेव व्याप्यवृत्त्यपि न तु पारिभाषिकावच्छेद-कत्वमिति भावः ।

(ख) अन्यथा वह्नित्वविषयकप्रतीतेर्वह्नित्वाविषयमहानसीय वह्नित्वविषयक-त्वेन वह्नित्वे महानसीयवह्नित्वाविषयकप्रतीतिविषयत्वस्यानिर्वाहादिति भावः ।

यक-प्रतीत्या वह्नित्वस्य विषयी-करणान्न वह्नित्वस्य तद्घटितत्व-क्षतिः ।

(क) यदि चैकाभाव-प्रतीतं विजातीयमङ्कुर-द्वयं न परस्परा-विषयक-प्रतीति-विषय इति एतदङ्कुरस्य तादात्म्येन साध्यतायां तदङ्कुरत्वस्य पारिभाषिकावच्छेदकत्वे एतदङ्कुरत्वे तदघटितत्वं तद्-विषयक-प्रतीति-विषयत्व-रूपं नास्तीति सम्भाव्यते तदा प्रकारता-सम्बन्धेन (ख) यद्धर्म्मावच्छिन्न-कार्य्यतातो यद्धर्म्मावच्छिन्न-कार्य्यता भिन्ना (१) भवतीति वाच्यं, भवति हि एतदङ्कुरत्व-प्रकारकत्वाव-च्छिन्न-कार्य्यतातस्तदङ्कुरत्व-प्रकारकत्वावच्छिन्न-कार्य्यता भिन्ना । विशेषण-ज्ञानस्य विशेषणतावच्छेदक-प्रकारक-निश्चयस्य वा कार्य्यतायां प्रमेय-धूमत्वादेरपि कार्य्यतावच्छेदकत्वं प्रसिद्धमिति मन्तव्यम् । (२)

दीधितिः ।

एवं स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितान-वच्छेदकावच्छेद्यत्वं बोध्यम् ।

दीधिति-प्रकाशः ।

ननु प्रतियोगिता-धर्म्मिकोभयाभाव-विवक्षायां यद्धर्म्मान्यून-

(क) नियत-[illegible] वक्तव्येति ।

(ख) प्रकारतायाः प्रकारतया निवेशे गौरवादाह प्रकारतासम्बन्धेनेति ।

(१) कार्य्यतातो भिन्ना यद्धर्म्मावच्छिन्नकार्य्यता इति च ।

(२) यद्धर्म्मावच्छिन्नविषयितातोभिन्ना यद्धर्म्मावच्छिन्नविषयिता तद्धर्म्मा-

वृत्ति-धर्म्मावच्छिन्नत्वोक्तौ सत्तावान् जातेरित्यत्र सत्तात्वान्यूनवृत्ति-गुणान्यत्व-विशिष्ट-सत्तात्वावच्छेद्यत्वस्य समवाय-सम्बन्धावच्छिन्न-त्वस्य च जाति-समानाधिकरणाभाव-प्रतियोगितायां सत्त्वाद-व्याप्तिरत आह "एव"मिति। "स्व-विशिष्टे"ति, स्वं(क) साध्यताव-च्छेदकत्वेनाभिमतम्। ईदृशञ्च तादृश-प्रतियोगिता-सामान्ये यद्वि-शिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकावच्छेद्यत्व-यत्सम्ब-न्धावच्छिन्नत्वोभयाभावस्तेन धर्म्मेण तेन सम्बन्धेन व्यापकत्वमिति बोध्यम्। गुणान्यत्व-विशिष्ट सत्तावान् जातेरित्यादौ गुणान्य-त्व-विशिष्ट-सत्तात्वाश्रय-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं सत्तात्वादिकमेव, जाति-समानाधिकरणाभाव-प्रतियोगिता-सामान्ये तदवच्छेद्यत्वस्याभावादतिव्याप्तिरतः "स्व-विशिष्टे"ति। स्व-विशि-ष्टत्वं साध्यतावच्छेदकतावच्छेदक-सम्बन्धेन, तेन धूमवान् वह्ने-रित्यत्र कालिकेन घटादेरपि धूमत्व-विशिष्टत्वात् धूमत्व विशिष्टस्य संयोगेन यत् सम्बन्धि तन्निष्ठाभाव-प्रतियोगितानवच्छेदकं द्रव्यत्वं तदवच्छेद्यत्वाभावस्य वह्निमन्निष्ठाभाव-प्रतियोगितायां सत्त्वेऽपि नातिव्याप्तिः। धूमवान् वह्नेरित्यादावतिव्याप्ति-वारणाय सम्ब-न्धित्वं साध्यतावच्छेदक-सम्बन्धेन वाच्यम्। न च कालिक-सम्बन्धेन धूमत्व-विशिष्ट-सम्बन्धिनि ध्वंसादौ (ख) वर्त्तते योऽभावः

---

वच्छिन्न समानाधिकरणमिति वा वक्तव्यं इदन्तु कार्य्यत्वावच्छेदेऽपि बध्यते। एतद्विवरणादिः टिप्पनीक्रमेण वर्त्तते न मूलके।

(क) पूर्व्ववचनयोः स्व-पदस्य पारिभाषिकावच्छेदक-परतया भान तत्परत्व-सत्ता-निराकाङ्क्षाय वर्णितेति।

(ख) आदिना क्रिया-परिग्रहः।

संयोगावच्छिन्न-तत्प्रतियोगितानवच्छेदकाप्रसिद्धया कथमतिव्याप्ति-रिति वाच्यं घटाभावत्वादेरेव तथात्वात्, घटाभावस्य संयोगावच्छिन्न-प्रतियोगिताकाभाव प्रतितोगितायां लाघवादभावत्वेनैवा-वच्छेदात्(क)। न चैवमपि तदवच्छेद्यत्वाप्रसिद्धया कथमतिव्याप्तिः, घटाभावस्य भेद-प्रतियोगितायां घटाभावत्वावच्छिन्नत्वस्य प्रसिद्धि-सम्भवात्। अतएव वह्निमान् धूमादित्यादावव्याप्तिर्न भवति तादृश-घटाभावत्वावच्छेद्यत्वाभावेनैव लक्षण-समन्वयात्।

प्रतियोगि व्यधिकरण–पदमप्येतदर्थमेवाभावे देयम्। अन्यथा संयोगावच्छिन्न-प्रतियोगितावच्छेदकमात्रस्यैव धूमत्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वात् तदनवच्छेदकं घटाभावत्वादिकमेव वह्नि-समानाधिकरणाभाव प्रतियोगितायां तदवच्छेद्यत्वाभावस्य सत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिः। प्रतियोगितावच्छेदक–सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्न–व्यधिकरणत्वं तदर्थः। तेनायं घटो घट-रूपादित्यत्र समवायेन घटत्वस्य साध्यतायां घटत्वत्व-विशिष्ट-सम्बन्धिनि घटे समवायावच्छिन्न-ज्ञानाभावस्य विषयतया प्रतियोगि-समानाधिकरणत्वात् सम्बन्ध-सामान्येन प्रतियोगि-व्यधिकरणोऽतीत-नष्टज्ञानत्वावच्छिन्नाभाव-एव तत्प्रतियोगितानवच्छेदक-ज्ञानत्वावच्छेद्यत्व-समवायावच्छिन्न-त्वोभयस्य घटरूपवन्निष्ठाभाव-प्रतियोगितायां सत्त्वेन, वह्निमान् धूमादित्यादौ संयोगेन साध्यतायां वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठो

---

(क) संयोगेनाभावत्वावच्छिन्नाभावस्य घटाभावत्वाद्यवच्छिन्नाभावस्य च समनैयत्यादिति भावः।

घटाभावः कालिक-सम्बन्धेन प्रतियोगि-समानाधिकरण एवेति प्रतियोगि-व्यधिकरण-तादृशाभाव-प्रतियोगितानवच्छेदकं घटत्वं तदवच्छेद्यत्व-संयोगावच्छिन्नत्वोभयस्य धूमवन्निष्ठाभाव-प्रतियोगि-तायाञ्च सत्त्वेन, (क) सत्तावान् जातेरित्यत्र सत्तात्व-विशिष्ट-सम्बन्धि-निष्ठ-प्रतियोगि-व्यधिकरणाभाव-प्रतियोगितानवच्छेदकं विशिष्ट-सत्तात्वं तदवच्छेद्यत्व-समवायावच्छिन्नत्वोभयस्य जाति-समानाधिकरणाभाव-प्रतियोगितायां सत्त्वेऽपि च नासम्भवो-ऽव्याप्तिर्वा (ख) ।

(ग) वृत्त्यनियामक-सम्बन्धस्याभाव-प्रतियोगितावच्छेदकत्वे स-र्व्वस्यैव धर्म्मस्य वह्नित्वादि-विशिष्ट-सम्बन्धि-निष्ठ-प्रतियोगि-व्यधि-करणाभाव-प्रतियोगितावच्छेदकत्वात् तदनवच्छेदकावच्छेद्यत्वा-प्रसिद्ध्याऽसम्भवः । मेयत्वादेरपि पर्व्वतादौ विषयिता-सम्बन्धा-वच्छिन्न प्रतियोगिताकाभाव-प्रतियोगितावच्छेदकत्वात् । यदि च ह्रदत्वाद्यभाव-वह्निमदन्यतरत्वं वह्निमन्निष्ठ-तादृशा-भाव-प्रतियोगि-तानवच्छेदकं, वह्निमति संयोगेन समवायेन वा तदन्यतराभाव-

---

(क) प्रतियोगितावच्छेदकावच्छिन्नत्वस्य व्याप्तिसमाह सत्तावानित्यादि ।

(ख) सम्बन्धविशेषाविवक्षणे असम्भवः, प्रतियोगितावच्छेदकावच्छिन्ना विवक्षणे चाव्याप्तिरित्यर्थः ।

(ग) साध्यतावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षणादोषमाह वृत्त्यनिया-मकेत्यादिना । वृत्त्यनियामकसम्बन्धस्याभाव-प्रतियोगितानवच्छेदकत्वे चकाराचं-टीका मेयत्वादेः प्रतियोगितावच्छेदकतासम्बन्धेन मेयत्वादेरेव तादृशानवच्छेदकतया तदवच्छेद्यत्वस्य विषयितादिना मेयत्वाद्यभाव-प्रतियोगितायां प्रसिद्ध्या नासम्भव वक्तव्येऽसतो वृत्त्यनियामक सम्बन्धस्याभावप्रतियोगितावच्छेदकत्वोक्तौर्णनम् ।

सत्त्वेऽपि तत्प्रतियोगिताया लाघवेन वह्निमत्त्वेनैवावच्छेदात् (क)। विषयितादि-रूप- (१) अधिकरण-(ख)-सम्बन्धावच्छिन्न-तदभाव-प्रतियोगिताया अपि वह्निमत्त्व-ह्रदत्वाभावत्वादिनैवावच्छेदात् तदवच्छेद्यत्वञ्च भेद-प्रतियोगितायामेव प्रसिद्धमिति विभाव्यते तदाऽसत्त्वञ्च विरहेऽपि धूमवान् वह्नेरित्यादावतिव्याप्ति-वारणायोक्त्या ह्रदत्वाद्यभाव-धूमवदन्यतरत्वस्यैव धूमवन्निष्ठाभाव-प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नत्व-संयोगावच्छिन्नत्वोभयाभावस्य वह्निमन्निष्ठाभाव-प्रतियोगिता-सामान्ये सत्त्वादतः प्रतियोगित्वमपि साध्यतावच्छेदक-सम्बन्धेन वाच्यम्। इत्थञ्च धूमत्व-विशिष्ट-सम्बन्धि-निष्ठ-तादृशाभावीय-संयोगावच्छिन्न-प्रतियोगिताया अनवच्छेदकं धूमत्वायोगोलकावृत्तित्वादि तदवच्छेद्यत्वस्य तादृश-प्रतियोगितायां सत्त्वादेव नातिव्याप्तिरिति।

ननु तथाप्यव्याप्तिः कालो जगदाधारः काल-परिमाणात् (ग) ईश्वरज्ञानं सर्व्वविषयत्वविषयकत्वात् (२) (इत्यादौ स्व-विशिष्ट-सम्बन्धिनि महाकाले ईश्वरज्ञाने) च तेन सम्बन्धेन प्रतियोगि-

---

(क) संयोगेन समवायेन वा तदन्यतराभावस्य वह्निमत्त्वावच्छिन्नाभाव-समनैयत्यादिति भावः।

(१) रूप इति नास्ति ख।

(ख) यद्यपि तादृशान्यतरस्य विषयितया ज्ञाने वृत्तित्वेन विषयिताया अधिकरणतावच्छेदकत्वेऽपि अधिकरणत्वमात्रस्यानियामकत्वादुपन्यस्तमिति भावः।

(ग) प्राचां मते क्रियाणामेव कालोपाधित्वेन कालत्वादिहेतौ व्यभिचारः स्यादतः कालपरिमाणादिहेतुकं नव्यमते कालपरिमाणपदं महाकालपरिमाणपरं अन्यथा तन्मते अन्य दूरस्य कालोपाधित्वेन तत्र व्यभिचारप्रसक्तिः स्यादितिभावः।

(२) ( ) एतच्चिह्नितस्थले “इत्थञ्च व्यापक-विषयितासम्बन्धाभ्यां साध्यतायां

अधिकरणस्याभावस्याप्रसिद्धेः। न च महा-कालान्यत्व-विशिष्ट-घटाद्यभावस्य ईश्वर-ज्ञानान्यत्व-विशिष्ट-घटाद्यभावस्य वा तथात्वान्नाव्याप्तिरिति वाच्यम्। तथापि महा-कालमात्र-वृत्ति-विशेषणता-विशेषेण ईश्वरज्ञान-वृत्ति-विषयिता-विशेषेण च साध्यतायामव्याप्तेरपरिहारात्, तेन सम्बन्धेन महा-कालान्य-त्व-विशिष्ट-घटाधिकरणस्याप्यप्रसिद्धेरिति। येन स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितायां यद्धर्मावच्छिन्नत्व-यत्-सम्बन्धावच्छिन्नत्वोभयाभावो हेतु-समानाधिकरणाभाव-प्रतियोगि-ता-सामान्ये तद्धर्मावच्छिन्नत्व-तत्सम्बन्धावच्छिन्नत्वोभयाभावस्य विवक्षितत्वात्। भवति हि(क) सत्त्व-विशिष्ट-सम्बन्धि-महाकाल-निष्ठ-समवायाद्यवच्छिन्न-प्रतियोगिताक-घटाभावादि-प्रतियोगि-तायां सत्त्वत्वावच्छेद्यत्व-कालिक-सम्बन्धावच्छिन्नत्वोभयाभावः काल-परिमाण-समानाधिकरणाभाव-प्रतियोगितायामपि तदु-भयाभाव इति नाव्याप्तिः। धूमत्व-विशिष्ट-सम्बन्धि-निष्ठ-तादृशा-भाव-प्रतियोगितायां धूमत्वावच्छेद्यत्व-संयोग-सम्बन्धावच्छिन्न-त्वोभयाभावस्य सत्त्वेऽपि वह्नि-समानाधिकरण-तादृशाभाव-प्रति-योगितायां तदुभय-सत्त्वान्न धूमवान् वह्नेरित्यादावतिव्याप्तिरिति कृतं पल्लवितेन।

---

तेन सम्बन्धेन जगदाधारत्वविशिष्टमहाकाले सत्त्वविशिष्टसम्बन्धिनि ईश्वरज्ञा-नादौ" इति पाठो वर्त्तते च पुस्तके।

(क) काले जगदाधारत्वं सत्त्वत्वरूपेणैवावच्छेदेनाच सत्त्वविशिष्टेऽस्ति। एतेन पूर्वपक्षे जगदाधारत्वघटितेऽव्याप्तिरुक्ता सिद्धान्ते च सत्त्वघटितेऽव्याप्तिः परिहृतेति महानिरुक्तोक्ति भावः॥

दीधितिः ।

ताद्दश-प्रतियोगितायश्च विशिष्योपादेया नातो गुरो-रवच्छेदकत्वं विना दुर्व्वचत्वम् ।

---

दीधिति प्रकाशः ।

ननु प्रमेय-धूमवान् वह्नेरित्यादौ प्रमेयधूमत्वे गुरुधर्म्म-स्व-विशिष्टेत्यादि-पारिभाषिकावच्छेदकत्व-लक्षणमव्याप्तं स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकेत्यत्र ताद्दश-प्रतियोगि-तावच्छेदक-प्रतियोगिक-भेदस्यातिप्रसञ्जकतया (क) ताद्दशप्रति-योगितावच्छेदकत्वावच्छिन्न-प्रतियोगिताकभेदस्य विवक्षणीयत्वेन प्रमेय-धूमत्वविशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वस्य धूमत्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकत्व-लघु-रूप-समनियतस्य गुरुतयानवच्छेदकत्वात्, एवं प्रमेयवह्निमान् धूमादित्यत्र प्रतियोगिता-धर्म्मिकोभयाभाव-(ख)-लक्षणमव्याप्तं, प्रमेय-वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वस्य गुरुतयाऽभाव-प्रतियोगितानवच्छेदकत्वेन ताद्दश-प्रतियोगितानव-च्छेदकावच्छेद्यत्वस्याप्रसिद्धेरत आह "ताद्दशे"ति । तथाच प्रमेय-वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठाभावीया या या प्रतियोगिता-तत्तदवच्छेदक-भेदकूटवदेव ताद्दशानवच्छेदकं प्रसिद्धमिति ना-

---

(क) ताद्दश प्रतियोगितावच्छेदकेऽपि यत्किञ्चित्तादृशावच्छेदकभेदसत्त्वादिति भावः ।

(ख) उभयाभावघटितनिष्कर्षः ।

व्याप्तिः । एवं पारिभाषिकावच्छेदक-लक्षणमपि प्रमेय-धूमत्वादौ ज्ञेयमिति (१) ।

न च तादृशावच्छेदकमेव विशिष्य वक्तुमुचितमिति वाच्यम् । एक-प्रतियोगिताया अपि नाना-तदवच्छेदकाङ्गीकारात्, नानावच्छेदकानां विशिष्योपादाने गौरवात्, तत्प्रतियोगितावच्छेदकत्वेनोपादाने च लाघवादिति ।

दीधितिः ।

प्रतियोगित्वं सम्बन्धित्वञ्च साध्यतावच्छेदक-सम्बन्धेन बोध्यम्, अतो न सम्बन्ध-भेदमादाय दोषः ।

दीधिति-प्रकाशः ।

"प्रतियोगित्व"मिति, प्रतियोगिता-धर्म्मिकोभयाभाव विवक्षायां स्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगित्वं साध्यतावच्छेदक-सम्बन्धेनैव वाच्यं, न तु पूर्व्वत्रापि, तत्र साध्यतावच्छेदक-सम्बन्धेन प्रतियोगि-व्यधिकरणत्वेनैव सम्बन्ध-भेदमादाय दोषाभावात् । व्याहृत्तिस्तु तद्व्याख्यानावसर एव प्रपञ्चितेति नेह प्रस्तूयते, एवम् उत्तरत्रापि । "सम्बन्धित्वं" स्व-विशिष्ट-सम्बन्धित्वम् । प्रतियोगित्वस्य चरमोक्तत्वेऽपि प्रतियोगित्वस्याव्यवहित(क)लक्षण एव विशेषण(ख)दानात्तस्य प्रथमं निर्देशः । सम्बन्धित्वस्य लक्षण-द्वयेऽपि

(१) नेत्यपितीति च ।

(क) उभयाभावघटितेत्यर्थः ।

(ख) साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वरूपविशेषणनिवेशः ।

विशेषण-दानात्तस्य चरमं निर्द्देशः। अभावे प्रतियोगि-वैयधिकरण्यञ्च "वस्तुतस्त्वि"त्यारभ्य-लक्षण-त्रय एव देयमित्यभिप्रायेण तत्र पूर्व्वपक्षसमाधानयोरप्यवतारणीयत्वेन च तस्य चरमं निर्द्देशः।

---

दीधितिः।

कालिक-विशेषणता-विशेषेण च साध्यतायां तादृश-प्रतियोगितावच्छेदकत्वमनित्य-तत्तद्व्यक्तित्वे प्रसिद्धम्। अभावस्य प्रतियोगि-व्यधिकरणो बोध्यः।

---

दीधिति-प्रकाशः।

ननु कालो घटवान् कालपरिमाणादित्यत्र कालिक-सम्बन्धेन घटत्व विशिष्ट सम्बन्धि-निष्ठ-प्रतियोगि-व्यधिकरणाभावीय-कालिक-सम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकाप्रसिद्ध्या तदनवच्छेकावच्छेद्यत्वमप्रसिद्धमत आह, "कालिके"ति। "अनित्ये"ति, अतीत-तत्तद्घटव्यक्तित्वावच्छिन्नानधिकरणं स्वविशिष्ट-सम्बन्धि-(वर्त्तमान-क्रियात्मक)(१)खण्डकालोपाधिरेव तन्निष्ठ-तादृशाभाव प्रतियोगितावच्छेदकं तत्तद्घटव्यक्तित्वमिति नाप्रसिद्धिः। कालो जगदाधारः कालपरिमाणादित्यत्र तु पूर्व्वोक्त दिशा(क)लक्षणं सङ्गमनीयमिति। "अभावस्ये"त्यत्र प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य वा प्रतियोगितावच्छेदक-यत्किञ्चिदवच्छिन्नस्य वाऽनधिकरणं न वाच्यम्, आद्ये धूमवान् वह्नेरित्यत्रातिव्याप्तिः, धूमवतो

---

(१) ( ) चिह्नित पाठोनास्ति ख।

(क) [illegible]

ऽपि यत्किञ्चिद्धूमव्यक्त्यनधिकरणत्वेन तद्वृत्ति-धूमाभावस्य प्रति-योगि-व्यधिकरणत्वात् तादृश-प्रतियोगि-व्यधिकरणाभाव-प्रति-योगितानवच्छेदक घटाभावत्वावच्छेद्यत्व घटितोभयाभावस्य तादृ-श-प्रतियोगितायां सत्त्वात्। द्वितीये द्रव्यत्वाभाववान् गुणत्वादि-त्यादावव्याप्तिर्गुणत्ववन्निष्ठाभाव-प्रतियोगितायां गुणत्वाभावत्वा-वच्छिन्नायां प्रतियोगितावच्छेदकावच्छिन्न-सामान्यानधिकरण-द्रव्यत्वाभाव-सम्बन्धि निष्ठाभाव-प्रतियोगितानवच्छेदक-गुणत्वाभा-वत्वावच्छेद्यत्व-तादृश सम्बन्धावच्छेद्यत्वोभय-सत्त्वात्। गुणत्वा-भावाभाववतोऽपि गुणस्य नित्यत्वादि-विशिष्ट गुणत्वाभावात्मक-प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोग्यधिकरणत्वात्। नित्यत्वा-दि-विशिष्ट-गुणत्वस्य नित्यत्वादि-विशिष्ट-गुणत्वाभावाभावात्म-कस्य गुणत्वानतिरेकात्। तृतीये धूमवान् वह्नेरित्यत्रातिव्याप्तिः धूमत्व-विशिष्ट-सम्बन्धिनो धूमाभाववत्पर्व्वतादेरपि (१) धूमा-भाव-पर्व्वत-भिन्नत्व-प्रकारक-प्रमा-विषयत्वा(२)भावान्यतरत्वाव-च्छिन्न-प्रतियोगिताकाभावत्व-रूप-यत्किञ्चित्-प्रतियोगितावच्छेद-कावच्छिन्न-सामान्यानधिकरणत्वात्, तादृशाभाव प्रतियोगितानव-च्छेदकं घटाभावत्वादिकमेव, तदवच्छेद्यत्व संयोगावच्छिन्नत्वोभया-भावस्य वह्नि-समानाधिकरण-तादृशाभाव-प्रतियोगितायां सत्त्वात्। किन्तु तादृश-सम्बन्धेन यादृश-प्रतियोगितावच्छेदकावच्छिन्नान-धिकरणत्वं स्व-विशिष्ट-सम्बन्धिनस्तादृश-प्रतियोगितानवच्छेदकत्वं

(१) धूमाभाववतः पर्व्वतादेरपीति च।
(२) विषेयत्वा इति च।

वाच्यं तेन नातिव्याप्त्यादि-दोषः। एतस्य व्यावृत्तिस्तु (क) तल्ल-क्षणावसर एवानुसन्धेया।

---

दीधितिः।

न च मौलमिदमीयञ्च प्रतियोगि-वैयधिकरण्य-मनुपादेयं, संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादि-विशिष्टस्य वृत्तेर्गुणादि--निष्ठाभाव--प्रतियोगितावच्छे-दकद्रव्यत्वत्व--द्रव्यमात्र-समवेतत्वाद्यवच्छिन्नाभाववति चावृत्तेरव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यं धूमवान् वह्नेरित्यादावतिव्याप्तिः, न ह्युत्पत्तिकालावच्छेदेनापि महानसादौ किञ्चित् संयोगेन वर्त्तते येन वह्निमदयो-गोलक-निष्ठात्यन्ताभाव-प्रतियोगितावच्छेदकायोगोल--कावृत्ति-द्रव्यत्वाद्यवच्छिन्नाभाववदवृत्तित्वं धूमत्व-विशि-ष्टस्य सम्भाव्येत।

---

दीधिति-प्रकाशः।

"मौलं" मूलोपात्तम्। "इदमीयम्" अवच्छेदक-लक्षणे प्रविष्टम्। ननु मौल-प्रतियोगि-व्यधिकरणत्वानुपादाने इदं संयोगि द्रव्यत्वा-

---

(क) पूर्वलक्षणद्वये साध्यतावच्छेदक सम्बन्धेन प्रतियोगिवैयधिकरण्यस्य तृ-तीयलक्षणे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य व्यावृत्तिर-न्वर्थः।

दित्यादावव्याप्तिरत आह "संयोगत्वे"ति। संयोगत्वस्य द्रव्यत्व-समानाधिकरणाभाव प्रतियोगितावच्छेदकत्वेऽपि तदवच्छिन्नाभाववति संयोगत्व-विशिष्टस्य सम्बन्धत्वात् संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं (१) तादृशावच्छेदकं (२) गगनत्वादिकमेवेति तद्भिन्नत्वस्य संयोगत्वे सत्त्वान्नाव्याप्तिरित्यर्थः। इदमीय-प्रतियोगि-वैयधिकरण्यानुपादानेऽपि (३) संयोगी सत्त्वादित्यत्रातिव्याप्तिं निरस्यति "गुणादौ"ति। संयोगत्वावच्छिन्नाभाववति संयोगत्व विशिष्टस्य सम्बन्धत्वेऽपि गुणादि-निष्ठाभाव-प्रतियोगितावच्छेदकीभूत-द्रव्यत्वत्वावच्छिन्नाभाववत्यसम्बन्धत्वात् संयोगत्वस्य पारिभाषिकावच्छेदकत्वा(४)-न्नातिव्याप्तिरित्यर्थः। सकल-द्रव्य-वृत्तित्व-घटितं द्रव्यत्वत्वं नावच्छेदकमतो "द्रव्यमात्रे"ति द्रव्यान्यासमवेतत्वावच्छिन्नेत्यर्थः। संयोग-प्रतियोगिकाभावमादायाप्यतिव्याप्तिं वारयति "द्रव्यमात्रे"त्यपि कश्चित्।

अवच्छेदक-लक्षणे तत्पदं प्रवेशयितुम् आह "धूमवान् वह्ने"-रिति। अत्रातिव्याप्ति(५)वारणाय-तत्पदे दत्ते मूलेऽप्यव्याप्ति-वारणाय तत्पदं दत्तमिति भावः। तदेव दर्शयति "न ह्नी"ति, धूमवान् वह्नेरित्यत्र वह्नि-समानाधिकरणाभावीय-संयोग-सम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकं यद्यत् उत्पत्ति-कालावच्छेदेन तत्तद-

---

(१) पारिभाषिकमवच्छेदकत्वमिति ख।

(२) तादृशावच्छेदकमिति ख।

(३) वैयधिकरण्यादानेऽपि इति ख।

(४) अवच्छेदकत्वेन तद्भिन्नत्वाभावा इति ख।

(५) तथा धूमवान् वह्नेरित्यत्रातिव्याप्ति इति ख।

वच्छिन्नाभाववति धूमत्व-विशिष्टस्य सत्त्वात् धूमत्वस्य पारिभाषिकावच्छेदकत्वमनुपपन्नमिति तादृशावच्छेदकं गगनत्वादिकमेव तद्भिन्नत्वस्य धूमत्वे सत्त्वादतिव्याप्तिरित्यर्थः। "येने"त्यादि। यदि च यत्किञ्चित्संयोगेनोत्पत्तिकालेऽपि वर्त्तते(३) तदायोगोलकावृत्ति-द्रव्यत्वावच्छिन्नाभाववदयोगोलकाद्येव स्यान्न तु धूमवत् येन (४) तत्र धूमत्व-विशिष्टस्यासम्बद्धत्वात् धूमत्वस्यावच्छेदकत्वं स्यादिति भावः। "अयोगोलकावृत्तिद्रव्यत्वे"ति अत्र द्रव्यत्व-पदं संयोग-सम्बन्धेनायोगोलकावृत्तित्वस्य संयोगावच्छिन्नायाश्च प्रतियोगिताया अवच्छेदकत्व-लाभाय। "तदवच्छिन्नाभावव"दित्यादित्यादि-प्रथम-विवक्षायां प्रतियोगिता-धर्म्मिकोभयाभाव-विवक्षायाञ्चातिव्याप्तिः। प्रथमे गगनत्वरूप-तादृशावच्छेदकं प्रसिद्धं तद्भेदस्य धूमत्वे सत्त्वात्। तृतीये धूमत्व-विशिष्ट-सम्बन्धि-निष्ठाभावस्य संयोगावच्छिन्न-प्रतियोगितानवच्छेदकं घटाभावत्वं संयोगावच्छिन्न-प्रतियोगिताया लाघवेनाभावत्वेनैवावच्छेदात् तदवच्छेद्यत्वस्य भेद-प्रतियोगितायां प्रसिद्धस्य संयोगावच्छेद्यत्व-तदवच्छेद्यत्वोभयाभावस्य हेतु-समानाधिकरण-तादृशाभाव-प्रतियोगिता-सामान्ये सत्त्वात्। मध्यम-विवक्षायान्तु नातिव्याप्तिः। गगनत्व-विशिष्ट-सम्बन्ध्यप्रसिद्ध्या गगनत्वस्य पारिभाषिकावच्छेदकत्वासम्भवात्। किन्तु संयोगेन साध्यतायामव्याप्तिः, तादृश-पारिभाषिकावच्छेदकाप्रसिद्धेरिति। न च प्रथम-विवक्षायां कथमतिव्याप्तिः हेतु-समा-

(३) यदि किञ्चित् संयोगेन उत्पत्तिकालावच्छेदेनापि वर्त्तेत इति च।

(४) येनेत्यादि च।

नाधिकरणस्यायोगोलकभेदाभावस्य प्रतियोगितावच्छेदकं यदयो-गोलक-भेदत्वं तदवच्छिन्नाभाववत्ययोगोलके धूमत्व-विशिष्टस्या-सम्बन्धत्वेन धूमत्वस्य पारिभाषिकावच्छेदकत्वादिति वाच्यं प्रति-योगि-वैयधिकरण्यानुपादाने तादात्म्येन साध्यतायां धर्म्ममात्रस्यैव तदवच्छिन्नाभाववत्सम्बन्ध-स्वविशिष्ट-सामान्यकत्वेन पारिभाषि-कावच्छेदकताप्रसिद्ध्याऽव्याप्ति-भयेन प्रतियोगितायां साध्यतावच्छे-दक-सम्बन्धावच्छिन्नत्वस्य विवक्षणीयत्वात् संयोगावच्छिन्नप्रति-योगितायां लाघवेन भेदत्वस्यैवावच्छेदकत्वेनायोगोलकभेदत्वस्य(१) प्रतियोगितावच्छेदकत्वाभावेऽप्यतिव्याप्तेः (२) सत्त्वादिति। वस्तु-तस्तु पर्य्यायोगोलक-भेदस्य कालिक-सम्बन्धावच्छिन्न-प्रतियोगिताको-ऽभावः (३) कालेऽयोगोलकावच्छेदेन वर्त्तते इत्यविवादं जन्यमात्र-स्यैव कालोपाधित्वाच्च (४) पर्व्वतादावपि तादृशाभाववदेव (५) तत्र च धूमत्वविशिष्टस्य सम्बद्धत्वात्। साध्यतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगित्व-विवक्षणेऽप्यतिव्याप्तिर्दुरुद्धरैवेति, तथाचातिव्याप्ति-वार-णाय इदमीय-प्रतियोगि-वैयधिकरण्योपादाने कपि-संयोगी एतत्त्वा-दित्यादावव्याप्तिः, एतत्त्व-समानाधिकरणात्यन्ताभाव-प्रतियोगिता-वच्छेदक-कपि संयोगत्वावच्छिन्न-प्रतियोगिताक प्रतियोगि- व्यधि-व्यधिकरणाभाववति कपि-संयोगत्व-विशिष्टस्यासम्बद्धत्वेनावच्छेद-

---

(१) भेदत्वे इति ग।

(२) प्रतियोगितानवच्छेदकत्वेनातिव्याप्तेरिति ग।

(३) प्रतियोगिताकाभावः इति ग।

(४) चकारो नास्ति ग।

(५) तादृशाभाववदेव इति ग।

क-लक्षणाक्रान्तत्वात्, एवञ्चाव्याप्ति-वारणाय मौलमपि प्रतियो-
गि-वैयधिकरण्यमुपादेयमिति भावः।

दीधितिः।

प्रतियोगितयोरेक-सम्बन्धावच्छिन्नत्वस्य विशेषणता-विशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगि-वैयधिकरण्य-द्वयम्। यत्राधिकरणे व्यभिचारस्तदन्यत्वत्व--तदन्यत्व-प्रकारक--प्रमा-विषयत्वत्व-साध्यवत्त्व-प्रकारक-प्रमा-विषयत्वत्वादीनां साध्यतावच्छेदक-विशिष्ट-साध्यवन्निष्ठात्यन्ताभाव--प्रतियोगितानवच्छेदकत्वात्, हेतुतावच्छेदक-विशिष्ट--हेतुमन्निष्ठाभाव-प्रतियोगितावच्छेदकत्वाच्चातिव्याप्तेरनवकाशात्।

दीधिति-प्रकाशः।

"प्रतियोगितयो"रिति। हेतु-समानाधिकरणाभाव-प्रतियो-
गिता-ऽवच्छेदकलक्षणनिविष्टाभावप्रतियोगितयोरित्यर्थः। तथाच
हेतु-समानाधिकरणाभावीय--यत्सम्बन्धावच्छिन्न--प्रतियोगिताव--
च्छेदकं यत् तत्सम्बन्धावच्छिन्न-तदवच्छिन्न-प्रतियोगिताका-
भाववदसम्बन्ध-स्व-विशिष्ट-सामान्यकं यत्तत् पारिभाषिकाव-
च्छेदकमिति। एवमन्य-लक्षणेऽपि योज्यम्। धूमवान् वह्नेरि-
त्यादौ हेतु-समानाधिकरणाभावीय-स्वरूप-सम्बन्धावच्छिन्न-प्रति-
योगितावच्छेदकम् अयोगोलक-भेदत्वं तदवच्छिन्न-तत्सम्बन्धावच्छि-

त्व-प्रतियोगिताकाभाववत्ययोगोलके धूमत्व-विशिष्टस्यासम्बद्धत्वा-भावच्छेदकत्व-क्षतिः ।

यत्त्व-तत्त्वयोरननुगमात् विशिष्यतत्तत्सम्बन्धानां निवेशे विशेषणता-विशेषस्यापि निवेशात् तन्निवेशादेव सामञ्जस्ये सम्बन्धान्तर-प्रवेशो व्यर्थ इत्याशयेनाह"विशेषणता विशेषे"ति, जातिमान् भावत्वादित्यत्र भावत्व-समानाधिकरणाभावीय-विशेषणता-विशेषावच्छिन्न-प्रतियोगितावच्छेदकं जातिमत्त्व-प्रकारक-प्रमा-विशेष्यत्वत्वं तदवच्छिन्नाभाववति समवायेन सम्बद्धत्वस्याप्रसिद्धत्या जातित्वस्य पारिभाषिकावच्छेदकत्व-क्षतिरतो मध्यम-प्रकार-मालम्ब्य प्रतियोगि-वैयधिकरण्यानुपादानेऽप्यतिव्याप्ति (१)वारण-प्रकारं दर्शयति "यत्रे"त्यादिना। घटत्ववान् (घट-तद्भिन्नान्यतरत्वा-दित्यत्र व्यभिचार-निरूपकाधिकरणान्यत्वादेः साध्यवन्निष्ठस्य घटत्वात्मकस्याभावीय-विशेषणता न सम्भवतीत्यतो ) (२) ज्ञान-विषयतानिरूपित-विशेषणता-विशेषमवलम्ब्यातिव्याप्ति-वारणमाह, "तदन्यत्व-प्रकारके"ति। लाघवमभिप्रेत्याह, (क) "साध्यवत्त्वे"ति ।

---

(१) अनुपादानेऽपि व्यभिचारिण्यतिव्याप्ति इति च ।

(२) ( ) चिह्नितस्थले "घटतद्भेदान्यतरत्वादित्यत्र घटभेदात्मकव्यभिचार-निरूपकाधिकरणान्यत्वस्य साध्यवन्निष्ठस्य (घ घटात्मकस्याभावीयविशेषणता न सम्भवतीत्यतो" इति पाठो वर्त्तते च पुस्तके ।

---

(क) तदन्यत्वत्वादेर्भेदघटिततया साध्यवत्त्वं स्यादेकदघटितत्वादिति भावः ।

(ख) घटभेदभेदस्याधिकरणस्वरूपतया घटात्मकत्वं, तद्व्यतिरिक्तत्वे तद्भेदो-ऽप्यतिरिक्त इत्येवं क्रमेण भेदानन्त्यं स्यादतो घटपटादिभेदेन नानेति टिप्पणी-वर्त्तते च पुस्तके ।

दीधितिः ।

तथा च विशेषणता-विशेषावच्छिन्न-यद्धर्म्म-विशिष्ट-सम्बन्धि--निष्ठाभाव-प्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्न--साधन--समानाधिकरणात्यन्ताभाव-प्रतियोगिता-सामान्ये नास्ति साधने धद्धर्म्म-विशिष्ट-सामानाधिकरण्यं व्याप्तिरिति पर्य्यवसितोऽर्थः ।

दीधिति-प्रकाशः ।

(क) यद्धर्म्म-विशिष्ट-सम्बन्धि-निष्ठाभावीय-विशेषणता-विशेषावच्छिन्न-प्रतियोगितानवच्छेदकं हेतु-समानाधिकरणाभावीय-विशेषणता-विशेषावच्छिन्न-प्रतियोगितावच्छेदकं तदन्य-धर्म्मवत्त्वं व्यापकत्वमित्येवं मध्यम-प्रकार पर्य्यवसितेऽर्थे कालो घटवान् काल-परिमाणादित्यत्राव्याप्तिः(ख) तादृश-पारिभाषिकावच्छेदकाप्रसिद्धेः, महाकालान्यत्व विशिष्ट-घटत्वादीनां(ग) प्रागुक्तरीत्या(१)

(१) प्रागुक्तयुक्त्या इति च ।

(क) दीधितौ द्वितीयलक्षणं परित्यज्य तृतीयलक्षणपरिष्कारे बीजमाह यद्धर्म्मेत्यादिना ।

(ख) स्वरूपसम्बन्धेन गगनादेरवृत्तित्वे वृत्तित्वे वाऽव्याप्तिः, अवृत्तित्वपक्षे साध्यतावच्छेदकतावच्छेदकसम्बन्धेन गगनत्वविशिष्टसम्बन्धिनोऽप्रसिद्ध्या गगनत्वादेः साध्यतावच्छेदकत्वासम्भवात्, वृत्तित्वपक्षे तादृशसम्बन्धिनः प्रसिद्धावपि तन्निष्ठाभावीयतादृश-प्रतियोगितानवच्छेदकत्वस्य हेतुसमानाधिकरणाभावीयतादृशप्रतियोगितावच्छेदके-ऽसम्भवादिति भावः ।

(ग) महाकालीयविशेषावच्छिन्नसाध्यकस्थलीयाव्याप्तिरूपदोषोऽर्थः ।

तादृशत्वासम्भवात्। (क) एवं समवायेन गगनादेरपि धूम-व्यापकतापत्तिः समवायेन गगनत्व-विशिष्ट-सम्बन्ध्यप्रसिद्ध्या गगनत्वादेरपि तादृशावच्छेदकत्वाभावात् (१) अतः प्रतियोगिता-धर्म्मिकोभयाभाव-विवक्षणमेव तृतीयं प्रकारं साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वांश-परित्यागेन परिष्कुरुते "तथापी"ति, विशेषणताविशेषस्य लक्षण-घटकत्व इत्यर्थः। "यद्धर्म्मे"ति, यो धर्म्मः साध्यतावच्छेदक-रूप-धर्म्मः, "तत्सम्बन्धावच्छिन्ने"ति विशेषणताविशेषावच्छिन्नेत्यर्थः। धूमवान् वह्नेरित्यादौ वह्नि-समानाधिकरण-ह्रदत्व-प्रकारक-प्रमाविषयत्वाभाव-प्रतियोगितायां धूमत्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकीभूतधूमवत्त्व-प्रकारक-प्रमा-विषयत्वत्वावच्छेद्यत्वाभावादतिव्याप्तिरतः "सामान्य" इति। इत्यञ्च धूमवत्त्व-प्रकारक-प्रमा-विशेष्यत्वाद्यभाव(२) प्रतियोगितायां तदवच्छेद्यत्वाभावस्यासत्त्वादेव नातिव्याप्तिः। (ख) कालो-घटवान् काल-परिमाणादित्यादौ तु कालान्यत्व-

(१) पारिभाषिकावच्छेदकत्वाभावादिति च।

(२) विषयत्वाभाव इति च।

(क) ननु प्रदर्शितरीत्या घटवान् कालपरिमाणादित्यादौ तदवच्छिन्नत्वादि-प्रवेशप्रकारान्तरेणाप्यस्य मध्यमप्रकारे बाधकाभाव इत्यत आह एवमिति।

(ख) ननु विशेषणताविशेषावच्छिन्नत्वनिवेशेऽपि हेतुमन्निष्ठाभावप्रतियोगिता-वाधान्ते तादृशानवच्छेदकावच्छिन्नत्वविशेषणताविशेषावच्छिन्नत्वोभयाभावनिवेश एवोचितः सिद्धान्तलक्षणे प्रतियोगिताधर्म्मिकोभयाभावनिवेशावश्यकत्वात् अत आह काल इत्यादि।

प्रकारक-प्रमा-विषयत्वाभाव-प्रतियोगिता तादृशी (क) प्रसिद्धेति नाव्याप्तिः (ख)।

अत्र यद्यपि साधन-समानाधिकरणाभाव-प्रतियोगिता-सामान्ये यद्धर्म-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितावच्छेदकावच्छेद्यत्वमित्यत एव सर्व्व-सामञ्जस्ये नञ्-द्वय-गर्भतायां गौरवं तथापि मूले नञ उपादानात्तद्घटितमेव लक्षणमुक्तं, यथा सन्निवेशे न वैयर्थ्यम्।

परे तु नञ्-द्वयागर्भतायां व्यभिचारिण्यतिव्याप्तिः, वह्नि-समानाधिकरण-धूमवत्त्व--प्रकारक-प्रमा-विषयत्वाभाव--प्रतियोगितायां तादृश-प्रमा-विषयत्वात्मक-प्रतियोगि-रूपायां (ग) धूमत्व-विशिष्ट-सम्बन्धि-निष्ठाभाव प्रतियोगितावच्छेदकीभूतं यन्महानस-वृत्तित्व-विशिष्ट-तादृश-प्रमा-विषयत्वत्वं तदवच्छेद्यत्वस्य सत्त्वात् (घ) महानसवृत्तित्वविशिष्ट-- तादृश-प्रमा--विषयत्वाभाव--प्रतियोगिता-

---

(क) विशेषणताविशेषावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावीयेत्यर्थः।

(ख) उभयाभावानिवेशेऽपि नाव्याप्तिरित्यर्थः। अयमाशयः सिद्धान्तलक्षणे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यानुयोगितावच्छेदककोटौ निवेशे कालो घटवानित्यादौ तादृशप्रतियोगित्याप्रसिद्ध्याऽव्याप्तिरित्यगत्या तत्रोभयाभावो निवेशितः। इह तु साध्यान्यत्वप्रकारकप्रमाविशेष्यत्वाभावप्रतियोगिताया एव तादृश्याः प्रसिद्ध्याऽव्याप्त्यभावेनानुयोगितावच्छेदककोटौ विशेषणताविशेषावच्छिन्नत्वनिवेशे नैव सामञ्जस्ये उभयाभावनिवेशे प्रयोजनाभाव इति।

(ग) इदन्तु धूमवत्त्वप्रकारकप्रमाविषयत्वाभावप्रतियोगिताया महानसवृत्तित्वविशिष्टतादृशप्रमाविषयत्वाभावप्रतियोगिताया ऐक्ये एवातिव्याप्तिरिति तदुपपादनायोक्तम् इति भावः।

(घ) एतन्मते अवच्छेद्यत्वं वैशिष्ट्यं न तु विलक्षणमितिभावः।

रूपस्य(क) महानस-वृत्तित्व-विशिष्टस्यापि तादृश-प्रमा-विषयत्वस्य तादृश-प्रमा-विषयत्वानतिरेकात् । तादृश-प्रतियोगितानवच्छेदक-कावच्छेद्यत्वाभिधाने तु नायं दोषः, तादृश प्रमा-विषयत्वत्व-रूप-तादृश-प्रतियोगितानवच्छेदकावच्छिन्नत्वेन तदभावासम्भवादिति । न चैवं (ख) वह्निमान् धूमादित्यादावव्याप्तिः, वह्नित्व-विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं वह्निमत्त्व-प्रकारक-प्रमा-विषयत्वत्वं धूम-समानाधिकरण-महानस--वृत्तित्व-विशिष्ट-तादृश-प्रमा--विषयत्वाभाव-प्रतियोगितायां विशिष्ट-तादृश-प्रमा-विषयत्व-रूपायां (तादृश-प्रमा-विषयत्वाभाव-प्रतियोगितारूपा-यामपि) (१) तदवच्छेद्यत्व-सत्त्वेन तदभावासम्भवादिति (ग) वाच्यं

---

(१) ( ) चिह्नितपाठोनास्ति च ।

---

(क) ननु महानसवृत्तित्वविशिष्ट तादृश प्रमा विषयत्वत्वावच्छिन्नत्वं विशिष्टा-भावप्रतियोगितायामेव न तु शुद्धधूमवत्त्वप्रकारक प्रमाविषयत्वाभावप्रतियोगि-तायामिति नातिव्याप्तिरत आह महानसेत्यादि । तथाच मञ्जूषागर्भतायां वह्निसमानाधिकरणधूमवत्त्वप्रकारक--प्रमाविषयत्वाभावप्रतियोगितायां विशिष्ट-तादृशप्रमाविषयत्वत्वरूप-तादृशप्रतियोगितावच्छेदकावच्छिन्नत्व-सत्त्वादुक्तदोषाति-व्याप्तिरिति तद्वारणाय मञ्जूषागर्भतापक्षकेति भावः ।

(ख) प्रतियोगितायाः प्रतियोगिरूपत्वे इत्यर्थः ।

(ग) शुद्ध प्रमाविषयत्वानतिरिक्त-विशिष्ट प्रमाविषयत्वरूपविशिष्टाभावप्रति-योगितायाः शुद्धतादृशप्रमाविषयत्वत्वावच्छिन्न-शुद्धतादृशप्रमाविषयत्वाभाव-प्रति-योगितानतिरेकादिति भावः ।

विशेष्ये तादृश-प्रमा-विषयत्वे तदवच्छेद्यत्व-सम्भवेऽपि विशेषणे तद्-भावेन विशिष्टे (क) तदवच्छेद्यत्वाभावा-(१) दित्याहुः(ख)। (२)

दीधितिः।

यत्र सद्धेतु-विशिष्टे साध्यतावच्छेदकं न प्रतियोगि-तावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति।

---

(१) अवच्छेद्यत्वाभावसत्त्वा इति च।

(२) परे तु नञ्द्वयागर्भतायां तादृशप्रतियोगितात्वव्यापक यद्धर्मविशिष्ट-सामान्यभिन्नाभाव प्रतियोगितावच्छेदकावच्छेद्यत्वमित्यर्थस्तादृशप्रतियोगिता सामान्य इत्यादेर्भावो, व्यापकत्वञ्च तद्भिन्नाभावप्रतियोगितानवच्छेदकावच्छिन्नत्वं तथाच प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिस्तथाहि वह्निमद्भिन्नाभावप्रतियोगितात्व-समानाधिकरणाभावप्रतियोगितानवच्छेदकमेव प्रमेयधूमवद्भिन्नाभावप्रतियोगिता-वच्छेदकावच्छेद्यत्वं तत्प्रतियोगितायाः लाघवेन धूमवद्भिन्नाभावप्रतियोगितावच्छे-दकावच्छेद्यत्वेनैवावच्छेदात्। किञ्च नानाव्यक्तिकस्थलेऽव्याप्तिश्च [illegible] साध्यवद्भिन्नाभावप्रतियोगितावच्छेदकावच्छेद्यत्वमात्रमेव हेतुसमानाधिकरणा-भावप्रतियोगितात्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति। नञ्द्वयगर्भ-तायान्तु साध्यवद्भिन्नाभावप्रतियोगिताः प्रातिस्विकरूपेणोपादाय तत्तत्प्रतियोगि-तावच्छेदकभेदकूटवान् यो धर्मस्तद्धर्मावच्छेद्यत्वाभाववत्तादृशप्रतियोगितात्वव्यापक इत्यर्थस्तात्पर्यविषय इति न कश्चिद्दोष इत्यधिकः पाठो वर्तते च पुस्तके।

---

(क) विशिष्टे विशिष्टरूपप्रतियोगित्वे इत्यर्थः।

(ख) तथाच विशिष्टाभाव-प्रतियोगितायां विशेष्य-विशेषणोभयरूपत्वोपगमेन शुद्धे विशेषणे तदवच्छेद्यत्वाभावादेव विशिष्टे तदवच्छेद्यत्वाभाव इति भावः। अत्र विशेषण-वैशिष्ट्यावच्छेदेनावच्छेद्यत्वाभावोपगमेऽतिव्याप्तिरपरिहार्या धूमत्व-प्रकारक-प्रमाविषयत्वरूपायां शुद्धधूमत्वप्रकारकप्रमाविषयत्वावच्छिन्नप्रति-योगितायामपि विशिष्टविशेषणवैशिष्ट्यावच्छेदेन तदवच्छेद्यत्वाभावस्यापरि-हरणीयम् आशङ्कितमनेन दूषितम्।

## दीधिति-प्रकाशः ।

"यत्र सद्धेतु-विशेष" इति प्रमेय-वह्निमान् धूमादित्यादावित्यर्थः। "तत्रैवेति," वह्निमान् धूमादित्यादौ तु प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोगि-व्यधिकरणस्य हेतु-समानाधिकरणाभावस्य प्रतियोगितायां यद्धर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभाव इत्येतावदेव सम्यगिति भावः। तेन (क) कालोघटवान् काल-परिमाणादित्यादौ साध्यतावच्छेदक-सम्बन्धेन प्रतियोगि-व्यधिकरणाभावाप्रसिद्धा नाव्याप्तिः।

"यत्रासद्धेतु-विशेष" इति पाठः प्रामादिकः। असद्धेतौ व्याप्तेरभावेन तत्र लक्षणस्याप्रसक्तत्वादिति। "वदन्तो"त्यस्वरस-स्तद्बीजन्तु अव्याप्यवृत्ति साध्यके प्रतियोगि-व्यधिकरणत्व-घटित-लक्षणापेक्षया निरुक्त लक्षणमेव लघुतयोचितमिति (ख)।

## दीधितिः ।

गौरव-प्रतिसन्धान-दशायामपि कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलात् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः।

---

(क) वस्तुतस्तु साध्यतायां अवच्छेदकत्वघटितलक्षणं विहाय प्रतियोगिता व्यधिकरणाभावघटितलक्षणकरणेनैवार्थः।

(ख) तथाच तत्रैवेत्येवकारो न सङ्गत इति भावः।

दीधिति-प्रकाशः ।

(१)(क) गौरवे सति यादृशावच्छेदकत्व-विरह(ख)-स्तादृशाव-च्छेदकत्वस्य संसर्गतयापि (ग) भाने गौरव-ज्ञानं विरोधि (घ) प्रकृते च गौरव-ज्ञाने सत्यपि कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वो

---

(१) अपरेषामभिमतमाह इत्यधिकः पाठो वर्त्तते च पुस्तके ।

---

(क) ननु गुरोरनवच्छेदकत्वमतेऽपि गौरवप्रतिसन्धानदशायां कम्बुग्रीवादि-मान्नास्तीति प्रतीतेर्नानुपपत्तिः, तन्मते गौरव-प्रतियोगितावच्छेदकत्वयोर्विरुद्धत्वेन तद्विरोधिज्ञानस्य तद्बुद्धिप्रतिबन्धकत्वमुद्रया गौरवज्ञानस्य प्रतियोगितावच्छेदकत्व-बुद्धौ प्रतिबन्धकत्वं वाच्यं, तत्र तद्विरोधिज्ञानस्य तत्प्रकारक बुद्धावेव प्रतिबन्धक-त्वस्य इष्टतया कम्बुग्रीवादिमान्नास्तीति प्रतीतौ च प्रतियोगितावच्छेदकत्वस्य संसर्ग-तया गौरवज्ञानाप्रतिबध्यत्वादत आह 'गौरवे सती'ति ।

(ख) शक्यतावच्छेदकत्वादिविरह इत्यर्थः ।

(ग) अन्यथा गवयो गवयपदवाच्य इत्युपमितेः संसर्गतया गवयपदवाच्य-तावच्छेदकत्व-विषयकत्वेन गौरवज्ञानाप्रतिबध्यतया, गोसादृश्यादौ गवयत्वापेक्षया गौरवज्ञानदशायामपि तत्र संसर्गतया गवयपदवाच्यतावच्छेदकत्वविषयिण्या गो-सदृशो गवयपदवाच्य इत्याकारिकाया उपमितेरापत्तिरिति भावः ।

(घ तथाच विरोधिभेदेन प्रतिबन्धकताया विभिन्नतयाऽन्यत्र तद्विरोधि-ज्ञानस्य तत्प्रकारक-बुद्धावेव विरोधित्वेऽपि प्रकृते फलबलात् तादृशावच्छेदकत्व-विषयकज्ञान एव गौरवज्ञानस्य प्रतिबन्धकत्वं कल्प्यत इति भावः । अथैवमपि गौरवज्ञानदशायां प्रमेयत्वादिना तज्ज्ञानोदयेन तत्र व्यभिचारः, अवच्छेदकतात्वा-वच्छिन्नविषयतायाः प्रतिबध्यतावच्छेदकत्वे च सम्बन्धभाने संसर्गतावच्छेदकत्वाना-[illegible] अवच्छेदकत्व-संसर्गकज्ञानासंग्रह इति चेन्न तादृशावच्छेदकत्वा-तिरिक्तप्रकारक तादृशावच्छेदकत्वविषयकज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वोप-गमात् ।

शेषि (क) प्रत्यय-सत्त्वाद्गौरव-ज्ञानं नैतादृशावच्छेदकत्व-ग्रह-विरोधीत्यभिप्रायेणाह, (ख) "गौरवे"ति ।

---

दीधितिः ।

न चास्यास्तत्प्रतियोगिकाभाव-मात्रावलम्बनं, तथा-विध-यत्किञ्चिद्व्यक्ति-सत्त्व एव तादृश-प्रतीतेरनुदयात् ।

---

दीधिति-प्रकाशः ।

- "अस्याः" कम्बुग्रीवादिमान्नास्तीति प्रतीतेः । "तथाविधे"ति कम्बुग्रीवादिमद्यत्किञ्चिद्व्यक्ति सत्त्व इत्यर्थः ।

---

दीधितिः ।

अतएवैक-घटवति भूतले कम्बुग्रीवादिमान्नास्तीति शब्दो न प्रमाणं, प्रमाणञ्च घट-सामान्य-शून्ये । न चैदेवं, लघु-रूप-समनियतानां गुरूणामव्याप्यतापत्तिः ।

---

(क) संसर्गविधया प्रतियोगितावच्छेदकत्वविषयकोऽर्थः ।

(ख) यथा घटादौ अनेकगुणवत्त्वे गौरवमिति गौरवज्ञान-सत्त्वेऽपि चक्षुः-सन्नि-कर्षवशाद्घटादौ अनेकगुणवत्तासाक्षात्कारोदयेन गौरवज्ञानस्य न तादृशज्ञानविरोधित्वं, तथा प्रकृतेऽपि कम्बुग्रीवादिमत्त्वादौ घटत्वाद्यपेक्षया गौरवज्ञानसत्त्वेऽपि कम्बुग्रीवा-दिमान्नास्तीति प्रतियोगितावच्छेदकत्वविषयक-प्रतीत्युदयेन गौरवज्ञानस्य नैता-दृशज्ञानविरोधित्वं, प्रकृतमावच्छेदकत्वादिज्ञानं प्रत्येव तस्य विरोधित्वकल्पनादिति, यथाच व्याप्यत्वाभावे व्याप्याभावज्ञानप्रयोजकतया गौरवज्ञानस्य प्रतियोगितावच्छेदक-त्वज्ञानविरोधित्वाभावे गौरवे प्रतियोगितावच्छेदकत्वविरोधित्वाभिधानं गुरु-धर्मस्यावच्छेदकत्वविरहितिरिति वक्तृहिताभिप्रायः ।

दीधिति-प्रकाशः ।

"अतएवे"ति, यत एव कम्बुग्रीवादिमान्नास्तीति प्रतीतेर्यत्-किञ्चित्कम्बुग्रीवादिमत्प्रतियोगिकाभावमात्रं न विषयः, किन्तु कम्बुग्रीवादिमत्त्वावच्छिन्न-प्रतियोगिताकाभाव एव अतएवेत्यर्थः। अन्यथा एक-घटवत्यपि यत्किञ्चित्कम्बुग्रीवादिमद्व्यक्तेरभाव-सत्त्वात्तत्रापि प्रमात्वं स्यादिति भावः। ननु गुरुतयानवच्छेदकस्य कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वावगाहनादेव स शब्दो न प्रमाणमत आह, "प्रमाणत्वे"ति। तथा सति घट-सामान्य-शून्येऽपि प्रमाण-व्यवहारो न स्यादिति भावः। "न चेदेवं" यदि गुरु-धर्मस्य न प्रतियोगितावच्छेदकत्वम्।

दीधितिः ।

गुणादि-गुणकर्मान्यत्व--विशिष्ट-सत्तादि-समानाधिकरणाभाव-प्रतियोगितावच्छेदकत्व-निष्ठाया प्रतियोगितया लाघवेन द्रव्यादि-निष्ठाभाव-प्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् तत्तदवच्छेदकत्व-व्यक्तीनाञ्च प्रातिस्विक-रूपेणाभावानां युग-सहस्रेणापि ज्ञातुमशक्यत्वात्। एवं द्रव्यत्वत्वादि-विशिष्ट-द्रव्यत्वादेरव्याप्यत्व-प्रसङ्गोऽप्यनुसन्धेयः। उपदर्शित-प्रकाराणामपि सत्त्वादि-घटितत्वेन दुर्ज्ञेयत्वात्। अतएव प्राच-याम-

गुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु-सङ्गच्छत इत्यपि केचिदिति कृतं पल्लवितेन ।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां दीधितौ अनुमान-खण्डे अवच्छेदकत्व-निरुक्ति-प्रकरणं समाप्तम् ।

---

## दीधिति-प्रकाशः ।

"गुणादीति" । इदं द्रव्यं गुणात्, गुणकर्मान्यत्व-विशिष्ट-सत्त्वात्, द्रव्यत्वाद्वेत्यत्र त्रयाणामेवाव्याप्यत्वं स्यादित्यर्थः । "लाघवेने"ति, गुणादि-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकत्वस्य द्रव्य-वृत्त्यत्यन्ताभाव-प्रतियोगितावच्छेदकत्वत्व-रूप-लघु-रूप-समनियतस्यानवच्छेदकत्वादिति भावः । एवं तादात्म्येन द्रव्यस्यापि न व्याप्यता, द्रव्य-सम्बन्धि-निष्ठत्वाद्यपेक्षया द्रव्य-वृत्ती-त्वादेर्लघुत्वादिति ।

ननु तत्तदवच्छेदक-व्यक्तीः प्रातिस्विक-रूपेणोपादाय तावद-भाव-कूट एव वक्तव्य इत्यत आह, "तत्त"दिति । ननु तादृशावच्छे-दकत्वत्वावच्छिन्नाभावो न वाच्यः, किन्तु स्वावच्छिन्नाभाववदस-म्बद्ध-हेतुमन्निष्ठाभाव-प्रतियोगितावच्छेदकत्व-सामान्यको यो धर्म-स्तद्धर्मावच्छिन्न—प्रतियोगिताकाभाववद्वृत्त्यत्वं साध्यतावच्छेदकं तद-

वच्छिन्न-सामानाधिकरण्यं व्याप्तिः, द्रव्यं गुणादित्यादौ द्रव्य-निष्ठा-भाव-प्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभाववदसम्बद्धमेव गुण-वन्निष्ठाभाव-प्रतियोगितावच्छेदकत्व-सामान्यमिति द्रव्यनिष्ठा-भाव-प्रतियोगितावच्छेदकत्वत्वमेव तादृशं स्वं तदवच्छिन्नाभावस्य च द्रव्यत्वत्वे सत्त्वात् गुरोरवच्छेदकत्व-स्वीकार इत्यत आह "उप-दर्शिते"ति । द्रव्यवृत्त्यत्यन्ताभाव-प्रतियोगितावच्छेदकत्वत्वमेव प्रकृते स्वपदार्थस्तस्य च न दुर्ग्रहत्वमतः "स्वत्वादौ"ति । आदिना हेतु-समानाधिकरणाभाव प्रतियोगितावच्छेदकत्व-व्यक्तीनां प्राति-स्विक-रूपेणाज्ञाने तत्सामान्ये तादृशाभाववदसम्बद्धत्वस्य ज्ञातु-मशक्यत्वमित्यादेः परिग्रहः । यद्यपि धूमत्वावच्छेदेन वह्निमद-व्यावृत्तित्वमिव गुण-समानाधिकरणाभाव-प्रतियोगितावच्छेदक-त्वत्वावच्छिन्ने द्रव्य-वृत्त्यत्यन्ताभाव-प्रतियोगितावच्छेदकत्वत्वाव-च्छिन्नाभाववदसम्बद्धत्वं सुग्रहमेव तथापीदृश ज्ञान-सामग्र्यभाव-दशायामपि निरुक्त-यथाश्रुत-व्याप्तिज्ञानादनुमितेरानुभविकत्वादयं प्रकारः सम्भवतीति भावः । "अतएव" यत एव ज्ञाण-ग्राह्य-गुण-त्वादेर्गुरोरपि प्रतियोगितावच्छेदकत्वमतएवेत्यर्थः । केचित्तु पूर्व्वोक्त-रीत्या व्याप्तेर्न दुर्ग्रहत्वमित्यस्वरसादाह "अतएवे"ति । अत्र हेतु-समानाधिकरणाभाव-प्रतियोगितावच्छेदकं यद्विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं तद्धर्मः (१) पारिभाषिकावच्छे-दक इत्येवं रीत्या व्यभिचारस्य दुर्ग्रहत्वं तत्र प्रतियोगिता-

(१) तद्धर्म्म इति च ।

व्यक्तीनां विभिन्न ज्ञानासत्त्वेन तादृश-व्यभिचारज्ञानाज्ञान-सत्त्वादिति (१) व्याचख्युः ।

इति श्रीमद्भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमान-खण्डे अवच्छेदकत्व-निरुक्ति-प्रकरण-
व्याख्या समाप्ता ।

---

(१) व्यभिचारज्ञानाजनकत्वादिति ख ।

## सामान्याभाव-प्रकरणम् ।

### अथ सामान्याभाव-प्रकरणे तत्त्वचिन्तामणिः ।

अन्य-निष्ठ-वह्नेर्धूमवत्पर्व्वत-वृत्त्यन्ताभाव-प्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते धूमवति वह्निर्नास्तीत्यप्रतीतेः, सामान्यावच्छिन्न-प्रतियोगिताकाभावः पृथगेव । अन्यथा सकल-प्रसिद्ध-रूपाभावे प्रसिद्ध-रूपवदन्यत्वे चावगते वायौ रूपं न वा वायू रूपवान्न वेति संशयो न स्यात्, विशेषाभाव-कूटस्य निश्चितत्वात् ।

इति श्रीमद्-गङ्गेशोपाध्याय-विरचिते तत्त्व-चिन्तामणौ अनुमान-खण्डे सामान्याभाव-प्रकरणं समाप्तम् ।

---

### अथ सामान्याभाव-प्रकरणे दीधितिः ।

ननु य एव मिलिता वह्न्यभावा जल-ह्रदादौ वह्निर्नास्तीति धियं जनयन्ति त एव प्रत्येकं धूमवति महानसादौ वर्त्तन्ते, तत्र च तेषां स्वत्वावच्छेदक-तत्तद्वह्नित्वावच्छिन्न-वैयधिकरण्य-निरूपिका याः प्रतियोगितास्तदवच्छेदकमेव वह्नित्वमतोऽव्याप्तिः ।

अथ सामान्याभाव-प्रकरणे दीधिति-प्रकाशः ।

व्याप्ति-लक्षणानन्तरं सामान्याभावः पृथगेवेत्यस्यावतारार्थमाह "ननु य एवे"ति । "प्रत्येक"मिति, महानसे पर्व्वतीयवह्नेरभावः पर्व्वते महानसीयवह्नेरभाव इत्येवं चालनी-न्यायेनेत्यर्थः । "तत्र" महानसाद्यवच्छेदेन । 'स्वं' तत्तत्प्रतियोगिता । तथा च तेषामभावानां महानसाद्यवच्छेदेन यत् तत्तत्प्रतियोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्न-वैयधिकरण्यं तन्निरूपिका इत्यर्थः । तथाच यादृश-प्रतियोगितायाः यत्किञ्चिदवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृश-प्रतियोगितानवच्छेदकत्वं लक्षण-घटकमित्यभिप्रायः ।

---

दीधितिः ।

न चैवं वह्नित्वावच्छिन्नस्य तद्वृत्तित्वान्न तथात्वं, तथा सति ह्रदवृत्तिधूमाभाव-प्रतियोगितावच्छेदकह्रदावृत्तित्वावच्छिन्नस्य वह्निमदयोगोलक-वृत्तित्वादति-व्याप्तिः ।

---

दीधिति-प्रकाशः ।

"एवं" वह्नित्वस्यापि तत्तत्प्रतियोगितावच्छेदकत्वे । "तद्वृत्तित्वात्" महानस-वृत्तित्वात् । "न तथात्वं" न प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यम् । तथाच यादृश-प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्यत्र यत्किञ्चित्-पदाप्रवेशेन प्रतियोगितावच्छेदक-सामान्यमेव वक्तव्यमिति भावः ।

एवं सति वह्निमान् धूमादित्यादौ संयोगेन साध्यतायां साध्यता-
वच्छेदक-सम्बन्धेन प्रतियोगि-व्यधिकरणस्याभावस्याप्रसिद्धया तत्-
त्वं (क) विहाय प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोग्यनधि-
करण-हेत्वधिकरण-वृत्त्यभाव-प्रतियोगिता सामान्ये यद्धर्मावच्छि-
न्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभाव इति विवक्षणमाश्रयणीयं तथा
सत्याह "तथा सती"ति। अन्तक्रदे क्रदावृत्तिर्नास्तीति बुद्धौ
सर्व्वेषामेव क्रदावृत्तीनामभावो विषयः, धूमोऽपि च क्रदावृत्ति-
रिति, तत्तद्धूमाभावस्यापि क्रदावृत्तित्वं प्रतियोगितावच्छेदकं,
तदवच्छिन्नश्च वह्निमत्ययोगोलके वर्त्तत एवेति तत्तद्धूमाभाव-
स्यापि प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्याभावादभावा-
न्तरमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरित्यर्थः। (ख) न च
प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोगि-व्यधिकरणस्याभावस्या-
प्रसिद्धया कथमतिव्याप्तिरिति वाच्यम्। अन्यमात्रस्य कालोपाधि-
त्वानभ्युपगमे कालिक-सम्बन्धावच्छिन्न-प्रतियोगिताकस्य घटादे-
रभावस्यैव तथात्वात्, एवं (ग) विषयितासम्बन्धेन घटादेरभावोऽपि
महानसादौ प्रतियोगि-व्यधिकरणः कालिकसम्बन्धेन विषयिता-
दिना वा पदार्थमात्रस्यैव महानसादावसत्त्वेन केनापि रूपेण
[illegible]गितावच्छेदकावच्छिन्नाधिकरणत्वस्य हेत्वधिकरणेऽसत्त्व-

---

(क) अनवच्छेदकत्वघटितलक्षणमित्यर्थः।

(ख) अभावाधिकरणाद्यप्रसिद्धिमाक्षिपति "न चे"त्यादिना।

(ग) अन्यमात्रस्य कालोपाधित्वे त्वाह एवमिति।

(क)एतद्भीत्या(ख) चेदमनुगत-रूपं तत्तदभाव-प्रतियोगितानव-च्छेदकमित्यङ्गीकृत्य (ग) वह्निमान् धूमादित्यादौ वह्नित्वाव-च्छेद्यत्वस्याप्रसिद्ध्या (घ) प्रतियोगिता-धर्म्मिकोभयाभाव-विव-क्षणमुपेक्ष्य हेतु-समानाधिकरण-प्रतियोगि-व्यधिकरणाभाव-प्रति-योगितानवच्छेदकत्व घटितं लक्षणमङ्गीकरोषि तदा धूमवान् वह्नेरित्यादावतिव्याप्तिरित्याह "अथे"त्यादिना।

दीधितिः।

अथानुगतं रूपं तत्तदभाव-प्रतियोगितानां नाव-च्छेदकम्, अनवच्छेदकमेव तद्भाव-प्रतियोगितायाः, अभावान्तरे मानाभावात्, तथा च तद्रूपावच्छिन्न-साध्यके व्यभिचारिण्यतिव्याप्तिरत आह "सामान्ये"ति।

दीधिति-प्रकाशः।

केचित्तु पूर्व्वक्षण-वृत्तित्व-विशिष्टस्य यत्किञ्चित्-क्षण-वृत्तित्व-विशिष्टस्य वा तद्रूपाभावस्याभाव एव साध्यतावच्छेदक-सम्बन्धेन

(क) नन्वेतेनापि दीधिति-ग्रन्थेन धूमवान् वह्नेरित्यादावतिव्याप्त्यभिधानमनुपपन्नं सामान्यधर्म्मावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वे धूमत्वावच्छेद्यत्वाप्रसिद्ध्या प्रतियोगिताधर्म्मिकोभयाभावघटितलक्षणासम्भवात्। न चानवच्छेदकत्वघटितलक्षणाभिप्रायकमिदमिति वाच्यं पूर्व्वोत्तरफक्किकयोर्भिन्नलक्षणाभिप्रायकत्वे सन्दर्भविरोधापत्तेरत आह "एतद्भीत्ये"त्यादि।

(ख) अतिव्याप्तिभीत्येत्यर्थः।

(ग) अतिव्याप्तिं निरस्यापि तदेति शेषः।

(घ) अव्याप्तिरेतद्भीत्या चेदिति शेषः।

प्रतियोगि-व्यधिकरणः (क), अभाव-प्रतियोगिकस्यापि प्रतियोग्या-व्यतिरिक्तस्य विशिष्टाभावस्याभ्युपगमादिति (ख)। तदसत् पूर्व्वक्षण-वृत्तित्व-विशिष्ट-यत्किञ्चित्-(१) रूपाभावाभावस्यापि विशेषण-तया (ग) तद्रूपवदवृत्तित्वावच्छिन्नाभावतया विशेषणतया तद्रूप-वदवृत्तित्व-रूप-प्रतियोगितावच्छेदकावच्छिन्नेन समं संयोगेन सामानाधिकरण्यात्, अन्यथा पूर्व्व-क्षण-वृत्तित्व-विशिष्ट-तद्रूपस्या-भाव एव प्रतियोग्यसमानाधिकरणत्वेन कुतो नोच्यते। अथ पूर्व्व-क्षण-वृत्तित्व-विशिष्ट-रूपस्याभावो वाय्ववृत्तित्वावच्छिन्नाभावतया वाय्व-वृत्तित्व-रूप-प्रतियोगितावच्छेदकावच्छिन्न-समानाधिकरण-स्तदा प्रकृतेऽपि तुल्यमिति।

अन्ये तु आकाशाभाव एव प्रतियोग्यसमानाधिकरणः। न च तस्यापि क्वचिदवृत्तित्वात् तदभावोऽपि (घ) तथा (ङ) यस्य क्वचिद-वृत्तेरभावाभावेन तादृश-क्वचिदवृत्तिर्नास्तीति-प्रतीतेरभावस्तदभाव-

---

(१) यत्किञ्चिदिति नास्ति ख।

---

(क) उभयाभावघटितप्रतियोगिवैयधिकरण्याभाव इत्यर्थः, एकतरस्येऽपि तथात्वे तादृशविशिष्टाभावाभावादेव वह्निमान् धूमादित्यत्र अव्याप्ति-प्रसङ्ग इति भावः।

(ख) ननु सर्व्वैस्तावदभावाभावस्य प्रतियोगिरूपतया तद्रूपात्मकविशिष्टाभावस्य वैयधिकरण्याभावेन कथं अत्यन्त-घटत्व-भूतलाद्यभाव-प्रतियोगिकत्वे-स्यादि। अभ्युपगमादिति, अन्यथा तस्य वैयधिकरण्यविरहानुपपत्तेरिति-भावः।

(ग) विशेषणतयेति तद्रूपवदवृत्तीत्यनेनान्वितम्।

(घ) आकाशाभावोऽपीत्यर्थः।

(ङ) न प्रतियोगिव्यधिकरण इत्यर्थः।

स्यैव ध्वंसादिवृत्तित्वं प्रतियोगितावच्छेदकं कल्प्यते, भाकाशाभावस्य च केवलान्वयित्वात् तद्व्यतिरेकेण तत्प्रतीत्यभावासिद्धेर्न तस्य तत्प्रतियोगितावच्छेदकमिति, तदपि तुच्छं लौकिक-प्रत्यक्षस्यैव विषयाधीनतयाऽतीन्द्रिय धूम-ध्वंसकाभावस्याभावेन तादृश-प्रतीत्यभावासिद्धेः तस्य न ध्वंसादिवृत्तित्वं प्रतियोगितावच्छेदकमिति। तस्यैव प्रतियोगि-व्यधिकरणत्वेऽतिव्याप्त्यसम्भवात्। (न च तत्तद्रूप-ध्वंस एव प्रतियोगि-व्यधिकरणः, तस्य ध्वंसादिवृत्तित्वं न प्रतियोगितावच्छेदकं चरम-ध्वंसातिरिक्त-ध्वंसादिवृत्तित्वावच्छिन्न-ध्वंसाप्रसिद्धेरिति वाच्यं तद्रूपानधिकरण-कालादिवृत्तित्वावच्छिन्न-ध्वंसस्य तद्रूप-ध्वंस-समनियततयाऽभिन्नत्वेन तद्रूप ध्वंसस्य प्रतियोगितावच्छेदकं यत् तद्रूपानधिकरण-कालादिवृत्तित्वं तदवच्छिन्न-सामानाधिकरण्यात्) (१)।

"अभावान्तर" इति, अनुगत-रूपस्य तत्तदभाव-भिन्नाभाव-प्रतियोगितावच्छेदकत्वे इत्यर्थः। "तत्तद्रूपावच्छिन्न-साध्यके" अनुगत-रूपावच्छिन्न-साध्यके।

दीधितिः।

संशयान्यथानुपपत्तिं प्रमाणयति "अन्यथे"ति। "वाया"विति। यद्यप्ययं संशयो न वायु-विशेष्यकः तस्य विशेषणत्वेनोल्लेखात्, न वा रूप-विशेष्यकः तथा सति रूप-तदभावयोर्विरोधिनोरकोटितायां प्रकृतानु-

(१) ( ) एतच्चिह्नितः पाठो नास्ति ग।

पयोग-प्रसङ्गात्, तथापि वायू रूपवान् तदभाववान् वेति रूप-तदभाव-कोटिक संशये तात्पर्य्यम् । अन्यस्तु रूपवत्तदन्योन्याभाव-कोटिक इति नाभेद इति सम्प्रदाय-विदः ।

---

दीधिति-प्रकाशः ।

अत्र रूपत्वं तत्तद्रूपाभाव-प्रतियोगितावच्छेदकं न वेति न विप्रतिपत्तिः, (क) अभावाधिकरणकातिरिक्ताभावानभ्युपगमे सामान्याभावाभ्युपगन्त्रापि तत्तद्रूपाभावस्य रूपत्वावच्छिन्न-प्रतियोगिताकत्व-स्वीकारात् । किन्तु वायौ रूपं नास्तीति प्रतीतिरभाव-द्वय-विषयिणी न वा, (ख) अत्यन्ताभाव-वृत्ति-रूपत्वावच्छिन्न-प्रतियोगिताकत्वं रूप-कालावच्छेदेन रूपवद्वृत्ति-भिन्न-रूपवद्वृत्ति-वृत्ति न वेत्यादिका (ग) । अत्र घटोत्पत्ति-द्वितीय-क्षणोत्पन्न-वायु-संयोग-प्रागभावे रूपत्वावच्छिन्न-प्रतियोगिताकत्व-सत्त्वात् विधौ सिद्धसाधनमतः पक्षे वृत्त्यन्तम् । तत्तद्रूपाभाव-वृत्तित्वादिविधौ सिद्धसाधनमतः साध्ये भिन्नान्तम् । रूप-सामान्याभावस्यापि उ-

---

(क) विधिकोटिः परमते, निषेधकोटिः सिद्धान्ते ।

(ख) विधिकोटिः परमते, निषेधकोटिः सिद्धान्ते । अत्र सामानाधिकरण्येन पक्षत्वे अभावान्तरविषयकसमूहालम्बनमादाय विधौ सिद्धसाधनम् । अवच्छेदकावच्छेदेन पक्षत्वे तमादाय निषेधे बाध इति विप्रतिपत्त्यन्तरमाह अत्यन्ताभावेत्यादिना ।

(ग) रूप-कालावच्छेदेन रूपवद्वृत्त-भिन्नो रूपवद्वृत्तिर्योऽभावस्तद्वृत्तित्वं रूप-भावकोटिः सामान्याभाववादिनां, तदनङ्गीकुर्वतामभावः कोटिरन्यः ।

त्पत्ति-कालावच्छेदेन रूपवद्वृत्तित्वाद्बाध इत्यतो रूप-कालाव-च्छेदेनेति भेद-प्रतियोगि-विशेषणम्। रूपवत्त्व-प्रकारक-प्रमा-विशेष्यत्वाभाव-वृत्तितया द्रव्यत्वाभाव-वृत्तितया च सिद्धसाधनमतो वृत्त्यन्तम्। रूप-कालावच्छेदेन रूपवद्वृत्तित्व-विशिष्ट-द्रव्यत्वाद्यभा-वस्य रूप-सामान्याभाव-समनियतस्य सिद्धावपि इष्ट-सिद्धिरेव सम-नियताभावानामैक्यादिति दिक् (क)।

"संशयान्यथानुपपत्तिम्" अन्यथानुपपद्यमान-संशयम्। "अयं" वायौ रूपं न वेति शब्देनाभिलप्यमानः। "तस्य" वायोः "उक्ते-त्या"दिति सप्तम्यन्त पदेन विशेषणत्व प्रतिपादनात् इत्यर्थः। रूप-विशेष्यकत्वे वायु-वृत्तित्व-तदभावौ कोटी स्यातां तथा सत्त्वाह "तथा सती"ति। "प्रकृते"ति, रूपाभाव-निश्चय-प्रतिबध्य-संशय-स्यैवोक्त-रीत्या रूप-सामान्याभाव-साधकत्वेन प्रकृतोपयोगादिति भावः, रूपवान् वेत्युक्ते रूपवदन्योन्याभावस्यैव कोटित्वं लभ्यते न तु रूपाभावस्येत्यत"स्तदभाववान् वे"त्युक्तम्। "नाभेदः" न मूलोक्त-संशययोरभेदः। शब्दासन्दर्भमेव "सम्प्रदायविद" इत्यने-नोक्तस्य शब्द-सन्दर्भमेव व्यवस्थापयति "विरुद्धयो"रित्यादिना।

---

दीधितिः।

विरुद्धयोरेक-धर्म्मि-विशेष्यक-ज्ञानमेव संशयो न

---

(क) उत्पत्तिकालावच्छेदेन-रूपसामान्याभावानङ्गीकारे उक्तभिन्नत्वविशेषणवैय-र्थ्यापत्तेराह "दिगि"ति. दिगर्थस्तु रूपत्वावच्छिन्न-प्रतियोगिताकत्वं यावत्स्वीकृतमपि [illegible] विप्रतिपत्तिः [illegible] भावः।

तु तदुभय-प्रकारतापि नियता, तथा च रूप-तदभाव-विशेष्यको वायु-विशेषणकोऽसाविति तु नव्याः ।

दीधिति-प्रकाशः ।

कोटि-विशेष्यकत्वे संशयत्वमनुपपन्नम्, एक-विशेष्यक-विरुद्धोभय-प्रकारक-ज्ञानस्यैव संशयत्वादित्यतोऽन्यथा संशयत्व-निर्व्वचनम् । "तदुभय-प्रकारता" विरुद्धोभय-प्रकारता । "नियता" आवश्यकी । "तथाचे"ति, रूपं वायौ रूपाभावो वेत्याकारकः संशय इत्यर्थः । "असौ" संशयः ।

दीधितिः ।

वायु-वृत्तित्व-तदभाव-कोटिको रूप-धर्म्मिक एवायं संशयः, अधिकरणे तत्तदभावान्यतर-निश्चयस्यापि तत्राधिकरण--वृत्तित्व--संशय--विरोधित्वात्, अन्यथा भूतले घट-तदभावान्यतर-निर्णयेऽपि घटो भूतल-वृत्तिर्न वेति संशय-प्रसङ्गादित्यपरे ।

दीधिति-प्रकाशः ।

मतान्तरमाह "वायु-वृत्तित्वे"त्यादिना । ननु तथा सति प्रकृतानुपयोग इत्यतः प्रकृतोपयोगं साधयति "अधिकरण" इति, "तत्त"दिति, तत्-तदभावयोर्यदन्यतरत्तन्निश्चयस्येत्यर्थः । तथा च वायौ रूपाभाव-निश्चये रूपे वायु-वृत्तित्व-संशयोऽनुपपन्न इति रूप-सामान्याभाववत्त्वे विशेषाभाव-निश्चय-दशायां वायौ तादृश-

संशयोऽप्यनुपपन्न इति भवति प्रकृतोपयोगित्वमिति भावः। "अन्यथा" तादृश-निश्चयस्याविरोधित्वे। अत्र चत्र-विलम्बादिना प्रतिबन्धकीभूत-प्रमाणान्तर-सम्पादकत्वेनाप्यन्वय-व्यतिरेकयोरन्यथा सिद्धत्वात् स्वातन्त्र्येण प्रतिबन्धकत्व-कल्पने गौरवमित्यरुचिं विभावयत्यपर इति।

दीधितिः।

अथैतावत्स्वेव रूपाणीत्यनिर्णयात् यावद्रूपाभावानिर्णये संशयो न विरुध्यत इति चेत् यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावास्तेषां, यावत्त्वेन रूपेण तेषां, यावन्ति रूपाणि तावदभावानां, यावद्रूपत्वेन तदभावानां वा अनिर्णय इत्यर्थः। न प्रथमतृतीयौ तथा निर्णीतत्वात्। नेतरौ प्रतियोगि-तदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घट-तदभाव-संशयोच्छेद-दर्शनेन तस्याकिञ्चित्करत्वात्।

दीधिति-प्रकाशः।

"याव"दिति, तथा च (१) यावद्रूपाभाव-निर्णय एव तादृशसंशय-विरोधी, तदभावात् संशयो नानुपपन्न इति भावः। "इत्यस्य" इति वाक्यस्य। "तथा निर्णीतत्वात्" वस्तु-गत्या यावन्तो

(१) तथा चेति नास्ति ख।

रूपाभावास्तेषां, यावन्ति रूपाणि तावदभावानाञ्च निर्णयः प्रकृते वर्त्तत इति भावः। "तस्य" प्रतियोगि-गत-यावत्त्व-निर्णयस्य अभाव-गत-यावत्त्व-निर्णयस्य। "अकिञ्चित्करत्वात्" संशयोत्पत्तौ अकिञ्चित्करत्वात्।

---

दीधितिः।

न चातिरिक्त-सम्भावना-विरह-सहकृत एवाभाव-निश्चयस्तत्प्रतिबन्धकः, सम्भावना च रूपं पार्थिवादि-त्रितय-भिन्नं न वेत्याकारा, निवर्त्तते चेयं रूपत्वावच्छेदे-नैतत्त्रितय-भिन्नत्वाभाव-निश्चयादेवेति वाच्यं गौरवात्, विनाप्यतिरिक्त-सम्भावनां विशेषाभाव-निश्चये सामान्य-संशय-दर्शनाच्च।

---

दीधिति-प्रकाशः।

"अभावनिश्चय" इति तथा च वस्तु-गत्या यावन्तो रूपाभावा-स्तन्निश्चय एव तादृश-सम्भावना-विरह-सहकृतः प्रतिबन्धक इत्यर्थः। नन्वतिरिक्त-रूपस्याप्रसिद्धेः कथं सम्भावनेत्यत आह "सम्भावना चे"ति। ननु रूपत्व-सामानाधिकरण्येन पार्थिवादि-त्रितय-भिन्न-त्वाभाव-निर्णय-सत्त्वात् कथं तादृश-सम्भावना इत्यत आह "निवर्त्तते चे"ति। रूपत्व-सामानाधिकरण्येन तादृश-भिन्नत्व-संशयो रूपत्वावच्छेदेन तदभाव-निश्चयादेव निवर्त्तत इति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह "विनापी"ति। तथाच व्यभिचारेण न तथा प्रतिबन्धकत्वमिति भावः।

दीधितिः।

अथाभावस्य सामान्यावच्छिन्न-प्रतियोगिताकत्व-निश्चय एव तादृश-संशय-विरोधी, अन्यथा तवाप्यति-प्रसङ्गात्, स च न प्रकृते, अभावस्य च यावद्विशेषा-भावाधिकरण-वृत्तित्वेन विशिष्टस्य तदवच्छेदेन (क) वा सामान्यावच्छिन्न--प्रतियोगिताकत्वं, सम्भवति चेदं तादृशाभाव-प्रतियोगितायाः अतिरिक्तत्वात्, तेन नैक-विशेषवतो विशेषान्तराभाववत्त्वेन सामान्याभाववत्त्व-प्रसङ्गः।

---

दीधिति-प्रकाशः।

"अन्यथा" अभाव-ज्ञानमात्रस्य प्रतिबन्धकत्वे। "तवापि" सामान्याभावाभ्युपगन्तुरपि। "अतिप्रसङ्गात्" प्रमेयत्वादिना सा-मान्याभाव-निश्चयस्यापि प्रतिबन्धकत्व-प्रसङ्गात्। "स च" रूपत्व-सामान्य-धर्मावच्छिन्न-प्रतियोगिताकत्व-निश्चयः। ननु विशेषा-भावानामेव रूपत्वावच्छिन्न-प्रतियोगिताकत्वे मिलित-घट-द्वये (ख) रूपं नास्तीति बुद्ध्यापत्तिरतो रूपत्वावच्छिन्न-प्रतियोगि-ताकत्वाश्रयत्वेनातिरिक्ताभावः (१) सिद्ध एवेत्यत आह "अभावस्य

---

(१) अतिरिक्तोऽभाव इति च।

---

(क) यावद्विशेषाभावाधिकरण-वृत्तित्वावच्छेदेनेत्यर्थः।

(ख) एकदा चक्षुः-सन्निकृष्ट-घटद्वये इत्यर्थः। तथा चैकदा-घटद्वये चक्षुःसं-योगद्वयाभावात् विशेषाभाव कूटेऽपि-चक्षुः-सन्निकर्ष इति भावः।

चे"ति, अत्र घटाद्यभावस्यापि तेन रूपेण रूपत्वावच्छिन्न-प्रतियोगिताकत्वे विरोधाभावादभावस्येति सामान्यत एवोक्तम्। ननु विशेषणीभूतस्य यावद्विशेषाभावाधिकरणस्य निष्प्रतियोगिकत्वात् विशिष्टस्य तथात्वं न सम्भवतीति(क) भावाभावकरम्बितत्वमप्येतदेव यद्भावेऽभावे च विशेष्य-विशेषण-भावापन्ने सप्रतियोगिकत्वमत आह "तदवच्छेदेने"ति। ननु यावद्विशेषाभाव-प्रतियोगिता सैव चेत् सामान्यावच्छिन्ना तदा तादृश (ख) प्रतियोगिताकत्व-विशिष्टस्याभावस्य विशेषान्तरवत्यपि सम्भवात् (ग) यावद्विशेषा-भावाधिकरण-वृत्तित्वस्य तन्नानवच्छेदकत्वं (घ) तथा च तत्रापि (ङ) सामान्याभाव-धी-प्रसङ्ग इत्यत आह "सम्भवति चे"ति। तथाच (च) सामान्यावच्छिन्नप्रतियोगिताकत्वमभावस्य यावद्विशेषाभावाधिकरणावच्छेदेनैवेति भावः। इदञ्च (छ) प्रोक्ता उक्तम्। गुणे सत्तायाः सत्त्वेऽपि गुणान्यत्व-विशिष्टसत्ताया असत्त्ववत् तत्प्रतियोगिताकाभावस्य (ज) विशेषान्तरवति सम्भवेऽपि सामा-

---

(क) भावाभावकरम्बितत्वदोषापत्तेरिति शेषः। तमेव निरूपयति भावा-भावेति।

(ख) सामान्यावच्छिन्नेत्यर्थः।

(ग) अन्यथा विशेषाभाव प्रतीत्यनुपपत्तेरिति भावः।

(घ) सामान्यावच्छिन्नप्रतियोगिताकत्वे भावच्छेदकत्वं न्यूनवृत्तित्वादिति भावः।

(ङ) विशेषान्तरवत्यपीत्यर्थः।

(च) तादृशप्रतियोगिताया अतिरिक्तत्वे चेत्यर्थः।

(छ) तादृशप्रतियोगिताया अतिरिक्तत्वाभिधानस्येत्यर्थः।

(ज) सामान्यावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः।

स्वावच्छिन्न-प्रतियोगिताकत्व-विशिष्टस्याभावस्यासत्त्व-सम्भवादिति भावः (क) ।

---

दीधितिः ।

न च प्रतियोगितावच्छेदक-भेदस्याभाव भेद-नियामकतया भेद-सिद्धिः, प्रतियोगि-भेदस्य तत्त्वे एक-घट-प्रतियोगिकस्य प्रागभावादि-चतुष्कस्याभेद-प्रसङ्गात्, अवच्छेदकन्तु भिद्यत एव, तच्च क्वचित् तादात्म्यस्य क्वचित् संसर्गस्य क्वचित् पूर्व्वापरकालीन-तद्घटत्वादेश्च तथात्वादिति वाच्यम् । संसर्ग-प्रतियोगि-विशेषण-साधारणस्यैकस्यावच्छेदकत्वस्य दुर्व्वचत्वात्, पूर्व्वापर-कालीनत्वादेर्ध्वंसादि-प्रतियोगितावच्छेदकत्वे माना-भावाच्च ।

---

दीधिति-प्रकाशः ।

प्रतियोगितायाः (ख) स्वतन्त्रप्रतियोगि-रूपतया तद्भेदस्याभाव-भेदकत्वे प्रतियोगिताभेदपक्षोक्तदोषापत्तिरतोऽवच्छेदक-भेदमाश्रित्य निषेधति "न चे"ति । "भेदो" वैलक्षण्यं तेन घटत्वस्य

---

(क) तथाच तादृशप्रतियोगितात्वेन तादृशप्रतियोगिताकत्वविशिष्टाभावस्यासम्भवात् तादृशप्रतियोगिताया अतिरिक्तत्वमनावश्यकमिति भावः ।

(ख) प्रतियोगिता-भेदस्याभाव-भेद-नियामकत्वं [illegible] प्रतियोगिताया इत्यादि ।

नील-घटत्वानतिरिक्तत्वेऽपि न क्षतिः। "तत्त्वे" अभाव-भेद-नियामकत्वे। "एकघटे"ति, नियामकाभावान्नियमानुपपत्तेरिति-भावः। "अवच्छेदकत्वि"ति, अत्र प्रतियोगितावच्छेदकता-नियामक-सम्बन्धः, प्रतियोगितावच्छेदक-सम्बन्धः, प्रतियोगि-विशेषणस्थावच्छेदक-पदार्थः (क)। आद्योपादानात् समवायेन रूपत्वावच्छिन्नस्य समवायेनाभावात् कालिकतया रूपत्वावच्छिन्नस्य समवायेनाभावो भिन्न इति। तद्घटात्यन्ताभाव-तद्घटान्योन्याभावयोः प्रतियोगि-विशेषणरूपावच्छेदकभेदाभावेऽपि प्रतियोगितावच्छेदकसम्बन्ध-भेदादेव भेद इत्याह "क्वचित्तादात्म्ये"ति। "पूर्व्वे"ति, ध्वंसे पूर्व्वकालीन-तद्घटत्वादेः प्रागभावे परकालीन-तद्घटत्वादेः। "तथात्वात्" प्रतियोगितावच्छेदकत्वात्। अन्यतरत्वादि-तदुभय-साधारणमवच्छेदकत्वं न दुर्व्वचमत आह "पूर्व्वे"ति, तद्घटत्वस्य ध्वंस-प्रागभावयोः प्रतियोगितावच्छेदकत्वेऽपि अनुयोगिताविशेष-रूपध्वंसत्व-प्रागभावत्व-विषयकत्वादेव विलक्षण-प्रतीत्युपपत्तौ पूर्व्व-कालीनत्वादेः प्रतियोगितावच्छेदकत्वाकल्पनादिति भावः।

---

दीधितिः।

किञ्चावच्छेदक-भेदस्याभाव-भेद-नियामकत्वं ? न तज्जनकत्वं अत्यन्ताभावादि-स्वरूपस्य तस्याजन्यत्वात्।

---

(क) ननु नत्तद्व्यक्तित्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकत्वं विनिगमना-विरहेण तत्तद्व्यक्ति-यावतामेव धर्म्माणामवगाहते तत्र प्रतियोगितावच्छेदक-भेदोऽभावभेदव्यभिचारीति नैवं तदभाव प्रतियोगितावच्छेदकता-भेदस्याभाव-भेद-नियामकत्वे तात् पर्य्यादिति।

नापि तद्व्याप्यत्वं वैयधिकरण्यात् । अतएव न तद्व्यापकत्वमपि, अभेदेप्यविरोधाच्च ।

---

दीधिति-प्रकाशः ।

ननु ध्वंसस्य प्रतियोग्यधिकरण-पूर्व्वकालावृत्तित्वं प्रागभावस्य च प्रतियोग्यधिकरण-परकालावृत्तित्वं नियमतः प्रतीयत इति सम्बन्धविधया पूर्व्वापरकालयोरप्यवच्छेदकत्वं कल्प्यत (क) इत्यत आह "किञ्चे"ति प्रश्नं, "तस्य" अभावभेदस्य स्वरूपभेदस्य (१) तत् (२) स्वरूपानतिरेकादिति भावः । "तद्व्याप्यत्व"मिति, यत्र प्रतियोगितावच्छेदकयोर्भेदस्तत्र तदवच्छिन्नाभावयोर्भेद इत्येवं रीत्येत्यर्थः । "वैयधिकरण्या"दिति, अवच्छेदक-स्वरूप-भेदस्यावच्छेदक-निष्ठतया अभाव-स्वरूप-भेदस्य चाभाव-निष्ठतया वैयधिकरण्यादित्यर्थः । "अतएव" वैयधिकरण्यादेव । दूषणान्तरमाह "अभेदेपी"ति, व्याप्यस्याभावभेदस्यासत्वेऽपि व्यापकस्य प्रतियोगितावच्छेदक-भेदस्य सत्त्वमविरुद्धं, तथाच रूपत्व-तद्रूपत्वयोर्भेदेऽपि नाभाव-भेद-सिद्धिरिति भावः ।

---

(१) तत्तत्स्वरूपभेदस्येति ग ।

(२) तत्तदिति ग ।

---

(क) यदभावे प्रतियोग्यधिकरणतत्कालावृत्तित्वं नियमतः प्रतीयते च यावः सम्बन्ध-विधया तदभावस्य प्रतियोगितावच्छेदक इति-नियममभिप्रेत्येदं । एवञ्च प्रतियोगिनि पूर्व्वकालीनत्व-परकालीनत्वयोः संसर्ग-विधया भाने तत्तन्-निवेशतया ध्वंस-प्रागभावयोरपि पूर्व्वापर कालावृत्तित्वं, प्रतीयते तथाच प्रतियोगितावच्छेदकसम्बन्धभेदादेव ध्वंस प्रागभावयोर्भेद इति भावः ।

## दीधितिः ।

न च तदितर-धर्म्मावच्छिन्न-प्रतियोगिताकत्वं तद-वच्छिन्न-प्रतियोगिताकान्यत्वस्य व्याप्यं, मानाभावात् ।

---

## दीधिति-प्रकाशः ।

वैयधिकरण्यादिकं परित्यज्य दूषयति "नचे"त्यादिना (१) । तथा च रूपत्वावच्छिन्न-प्रतियोगिताकाभावस्तत्तद्रूपत्वा(२)वच्छिन्न-प्रतियोगिताकाभावादतिरिक्तस्तत्तद्रूपत्वातिरिक्त(३)धर्म्मावच्छिन्न-प्रतियोगिताकत्वात् घटाभाववत् (क) इत्यनुमानमिति भावः । यथाप्रयोजकत्वमाह "मानाभावा"दिति ।

---

(१) नचेतीति ख ।

(२) तद्रूपत्वेति ख ।

(३) तद्रूपत्वेतर इति ख ।

---

(क) तद्रूपत्वाविषयक- प्रतीतिविषय-धर्म्मावच्छिन्न-प्रतियोगिताकाभावत्वा-दिकं चेद्धेतुरन्यथा रूपत्वे तद्रूपत्वभेदाभावेन स्वरूपासिद्धिप्रसङ्गात् विशिष्टज्ञानानति-रेकात् । एवं तद्रूपत्वावच्छिन्न-प्रतियोगिताकाभावान्योन्याभावस्य न साध्यता ऽभावाधिकरणकाभावानतिरिक्ततया तद्रूपत्वावच्छिन्नाभावस्यापि रूपत्वावच्छिन्ना-भावतया चातिप्रसङ्गादिमतेऽपि रूपत्वावच्छिन्नाभावे तद्रूपत्वावच्छिन्नाभाव-भेदा-सत्त्वाद्बाधः, नापि तद्रूपत्वावच्छिन्नप्रतियोगिकाभावाविषयकप्रतीतिविषयत्वं साध्यं रूपत्वावच्छिन्नाभाव-तद्रूपत्वावच्छिन्नाभावयोरैक्ये विभिन्नप्रतीतिविषयत्वाभावात्, किन्तु तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वनिरूपकत्वान्योन्याभावः साध्यः, तथाच रूपत्वावच्छिन्नप्रतियोगिताकत्वनिरूपत्वं तद्रूपत्वावच्छिन्नप्रतियोगिताकत्वनिरू-पकत्वभिन्नं तद्रूपत्वाविषयकप्रतीतिविषयधर्म्मावच्छिन्नप्रतियोगिताकत्वनिरूपक-त्वत्वादित्यनुमाने तात्पर्य्यम् । एवञ्च तादृशनिरूपकताभेदएव ज्ञाताज्ञाता-पभेदपदार्थः अतिरिक्तत्वाभावान्याभावपदादिना बोधार्थः, मन्मतेऽपि विशेषाभाव-

दीधितिः ।

अत एव च समनियत-सुख-दुःखादि-तत्तत्संख्या-परिमाण-व्यक्त्यादि-नानाधर्म्मावच्छिन्नोऽप्यभिन्न एवाभावः, भेद-सिद्धिस्तु भाववदभावस्यापि विरुद्ध-धर्म्माध्यासादेव ।

दीधिति-प्रकाशः ।

"अतएव" एताहृश-व्याप्तौ मानाभावादेव । "समनियते"ति, तत्तत्सुखादि-व्यक्ति लाभाय । तत्तत्सुखादिकाले तत्तद्दुःखत्वावच्छिन्नाभावस्य (तत्तद्दुःखादिकाले तत्तत्सुखत्वावच्छिन्नाभावस्य च)(१) सत्त्वात् तयोरैक्यमत "तत्तत्संख्यापरिमाणे"ति । "आदि-पदात् रूप-रसादि-परिग्रहः । "नानाधर्म्मावच्छिन्नः" नानाधर्म्मावच्छिन्न-प्रतियोगिताकः । किन्तर्ह्यभावभेदकमत आह "भेद-सिद्धिस्त्वि"ति । "भाववत्" भावस्येव (क) । "विरुद्धे"ति, तद्देश-वृत्तित्व-तदभावौ तत्कालावच्छिन्न तद्देशवृत्तित्व-तदभावौ वा विरुद्धौ तदध्यासेनाभावानां भेद-सिद्धिरिति भावः ।

दीधितिः ।

अतएव गगनादीनामवृत्तीनां समनियतानां वा

(१) ( ) चिह्नितपाठोनास्ति च ।

सामान्याभावयोरैक्यादिति । अनतिरिक्तवृत्तिमतो च विरुद्धधर्मयोरध्यासात् तत्-सिद्धिरिति ।

(क) धर्मीवत्तावाहृति-प्रमाण इति भावः ।

धर्म्माणामेक एवात्यन्ताभावः, युगपदुत्पन्न-विनष्टानां समान-देशानामसति बाधके एक एव ध्वंसः प्रागभावो वेति। व्यधिकरण-धर्म्मावच्छिन्न-प्रतियोगिताकोऽपि चेदभावः प्रामाणिकस्तदा तस्यैकस्यैव प्रतियोगिताः सर्व्वैरेव व्यधिकरणैर्धर्म्मैः सर्व्वैश्च समानासमानाधिकरणैः सम्बन्धैरवच्छिद्यन्तां, आकाशाभाव एव वा तथास्तामिति।

---

दीधिति-प्रकाशः।

"समनियताना"मिति, समनियत-देश-कालानां(क) समनियतावच्छेदकानाञ्चेत्यर्थः (ख)। "अत्यन्ताभाव"इति। इदञ्चात्र बोध्यं, रूपत्वावच्छिन्नाभाववत् तत्परिमाणत्वावच्छिन्नाभावोऽपि नैकस्तत्-परिमाणवत्त्वविशिष्ट-तत्परिमाणत्वावच्छिन्नाभावकूटादेव तत्परिमाणं नास्तीति बुद्ध्युपपत्तेः, एवं तत्संख्यात्वावच्छिन्नाभावोऽप्यभाव-कूट एवेति, मूलावच्छिन्न-शरीर-तरु-संयोगादीनां युगपदुत्पन्नाना-मपि नैकः प्रागभावः, युगपद्विनष्टानामपि नैको ध्वंस इत्यतो

---

(क) देशतः कालतश्च समव्याप्यानामित्यर्थः। अत्र देशतः समनैयत्यमात्रोक्तौ असमनियतकाल-समनियत-देशानां, कालतः समनैयत्य-मात्रोक्तौ चासमनियतदेश-समनियत-कालानामभावस्यैक्यापत्तिरित्युभयतः समनैयत्यमभिहितमिति भावः।

(ख) समनियतावच्छेदकानामित्यस्य विभिन्नमवच्छेदकं येषां तद्भिन्नाना-मित्यर्थः, तेन मूलाग्रावच्छिन्नसंयोगयोरभावस्य नैक्यापत्तिर्न वा व्याप्यवृत्तिसम-नियतानामभावैक्यानुपपत्तिरिति भावः।

"असती"ति, तत्र परस्परानवच्छेदकावच्छेदेन प्रत्यय(१) प्रसङ्गो बाधक इति भावः ( इति केचित् तन्न समानपदेन समानावच्छेदकत्व-विवक्षणात् । किन्तु एकाग्नि-संयोग-जन्य-समान काल-देशानां रूप-रस-गन्धादीनां नैकः प्रागभाव इत्यतो "ऽसतो"ति । अत्रापि समवाय्यसमवायि-कारणानामभेदे कार्य्यभेदापत्तिरेव बाधिकेति-भावः ) (२) । "समानासमानाधिकरणै"रिति, इदञ्च व्यधिकरण-धर्म्मावच्छिन्नाभावस्यापि प्रतीति-बलात् प्रतियोगितावच्छेदक-सम्बन्धाङ्गीकारेण, अन्यथा समानाधिकरण-सम्बन्धावच्छिन्नाभावस्य व्यतिरेकितया केवलान्वयि-व्यधिकरण-धर्म्मावच्छिन्नाभावेन समनैयत्यानुपपत्तेरिति । "आकाशाभाव एवे"ति यद्यपि आकाशाभावस्यापि व्यधिकरण-सम्बन्धावच्छिन्नत्वात् असमानाधिकरणैः सम्बन्धै(३)रित्यनेन गतार्थता तथापि अतिरिक्ताभाव-कल्पना भिया चेद्व्यधिकरण-धर्म्मावच्छिन्नाभावानभ्युपगमस्तदा क्लृप्तस्याकाशाभावस्यैव व्यधिकरण धर्म्म(४)-सम्बन्धावच्छिन्नप्रतियोगिताकत्व-कल्पने बाधकाभाव इत्याशयेनेदमिति ।

दीधितिः ।

**नैवम् एवं हि तत्तद्देश-कालाद्यवच्छिन्नानवच्छिन्न-तत्तदधिकरण-वृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन(५)**

(१) प्रसङ्गोऽत्यन्त तादृश-प्रत्यय इति च ।

(२) ( ) एतच्चिह्नितः पाठो नास्ति ग ।

(३) सम्बन्धैरिति नास्ति ग ।

(४) धर्म्म इति नास्ति च ।

(५) तदवच्छेदेनेति भवानन्द-सम्मतः पाठः ।

वा एकस्यैवाभावस्य घट-पट-गोत्वाश्वत्वादि-प्रतियोगि-
ताकत्व-सम्भवेन तत्तद्भेदो(१)ऽपि विलुप्येत। तत्तत्प्र-
तियोगिकत्वं तत्तत्स्वभावो, न च (२) तत्राधिकरण-
वृत्तित्वस्यान्तर्भावोऽवच्छेदकत्वञ्चेति समानम्।

दीधिति-प्रकाशः।

"तत्तद्देश"इति, मूलावच्छिन्नं वृक्षादि-वृत्तित्वं किञ्चिदनवच्छि-
न्नञ्च गुणादिवृत्तित्वं कपिसंयोगाद्यभावत्वस्यावच्छेदकम्, एवम्
उत्पत्तिकालाद्यवच्छिन्नं घटादि-वृत्तित्वं किञ्चिदनवच्छिन्नञ्च वाय्वा-
दि-वृत्तित्वं रूपाद्यभावत्वस्यावच्छेदकम्, एवं किञ्चिदनवच्छिन्नं
घटादि-वृत्तित्वं समवायेन गोत्वाभावत्वस्यावच्छेदकं, कालिक-
तया गोत्वाभावत्वस्य तत्तो-भिन्न-देशावच्छिन्न-काल-वृत्तित्वमवच्छे-
दकं, समवायेनाकाशाद्यभावत्वस्य न किञ्चिदवच्छेदकं व्याप्य-
वृत्तित्वादिति विशिष्टस्य तत्त्वे पूर्व्वोक्तो दोषो(क)ऽत"स्तदवच्छे-
दने"ति। "घटपटे"ति अव्याप्य वृत्तित्वं, "गोत्वा"दीति व्याप्य-
वृत्तित्वञ्चाभिप्रेत्य। "तद्भेद" घटाभाव-पटाभावादि-भेदः। "तत्तत्-
स्वभावः" तत्तदभाव स्वरूपः। "न तत्रे"ति, अधिकरण-वृत्तित्व-
स्याभावानात्मकत्वेन तदनन्तर्भूतत्वादभाव-स्वरूपस्य सार्व्वत्रिकत्वेन
तदनवच्छेदकत्वाच्चेति। "समान"मिति, रूपत्वावच्छिन्न-प्रति-

(१) तद्भेद इति भवानन्दसम्मतः पाठः।
(२) चकारो न भवानन्दसम्मतः।

(क) भावाभावसाधारण्यदोष इत्यर्थः।

योगिताकत्वस्यापि तत्तद्रूपाभाव-स्वरूपत्वात् तत्रापि यावद्विशेषाभावाधिकरण-वृत्तित्वादेरनवच्छेदकत्वादिति ।

दीधितिः ।

अत एव सामान्यावच्छिन्न-प्रतियोगिताकत्वं व्यासज्यवृत्तीत्यपि प्रत्युक्तम् । अव्यासज्यवृत्तेस्तत्स्वभावस्य तत्त्वानुपपत्तेरतिरिक्त-कल्पने च किमपराद्धमतिरिक्ताभावेन ।

दीधिति-प्रकाशः ।

"अतएव" वक्ष्यमाणदोषादेव "व्यासज्य-वृत्ती"ति, तथा च घटवति पट-शून्ये घट-पटोभयवदिति बुद्धेरिव यत् किञ्चिद्रूपाभाववति रूपवति रूपं नास्तीति बुद्धेरप्यभाव(क) इति भावः।"अतएवे"-त्युक्तमर्थं विवृणोति "अव्यासज्यवृत्ते"रिति, तादृश-प्रतियोगितातिरिक्तैवेति चेत्तत्राह "अतिरिक्ते"ति ।

दीधितिः ।

किञ्च व्यधिकरणयोर्घट-पटयोर्द्वित्व-प्रतीतिवत् व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रिय-सन्निकर्षे सामान्यावच्छिन्न-प्रतियोगिताकत्व-प्रत्ययोऽपि स्यात् । अपि च रूपान्तरेण सम्बन्ध-विधया वा व्यासज्यवृत्तिधर्मस्य भाने न यावदाश्रय-सन्निकर्षापेक्षा, माना-

(क) व्यासज्यवृत्ति-धर्म-प्रत्यक्षे यावदाश्रय-सन्निकर्षस्य हेतुत्वादिति भावः ।

भावात्, एवञ्चैकाभाव-सन्निकर्षेऽपि सामान्याभाव-बुद्धि-प्रसङ्गः। यादृशि च तस्य ज्ञाने यावदाश्रयाणां सन्निकर्षोऽपेक्ष्यते तत्र तेषां तद्भेदस्य च ज्ञानमपि तदज्ञाने तदभेद-ज्ञाने च तदग्रहात् आश्रय-भेद-भ्रमेण तद्भ्रम-दर्शनाच्च। न चात्र यावद्विशेषाभावानां प्रथममुपस्थितिः सम्भवति, तत्प्रतियोगिनां विशेषतोऽनुपस्थितेरिति दिक्।

दीधिति-प्रकाशः।

व्यासज्यवृत्तित्वे दोषान्तरमाह "किञ्चे"ति। "युगप"दिति,(क) मिलित-घटद्वये यावद्रूपाभावानां युगपदिन्द्रिय-सन्निकर्ष-सम्भवादिति भावः। ननु निरधिकरणाभाव-लौकिक प्रतीतिर्नास्त्येव (ख) अत(१)इन्द्रिय-सम्बद्ध-विशेषणताया एव तथा हेतुत्वात्र तादृश-धीरत आह "अपि चे"ति, "रूपान्तरेण" गुणत्वादिना। ननु व्यासज्य-वृत्ति-धर्म्मे लौकिक-प्रत्यक्ष एव यावदाश्रय-सन्निकर्षापेक्षा, तद-भाव-दशायां गुणत्वादिना तल्लौकिक-प्रत्यक्षं न भवत्येवेत्यत आह "सम्बन्ध-विधये"ति, यावदाश्रयासन्निकर्षेऽपि सम्बन्ध-विधया व्यासज्यवृत्ति-धर्म्मस्य लौकिक-प्रत्यक्षं भवतीत्यभिप्रायः। "एव-

(१) अत इति नास्ति ख।

(क) युगपदिन्द्रिय-सन्निकर्षमुपपादयति "मिलिते"त्यादिना।

(ख) अनुभवानुरोधेन साधिकरणकाभाव-विषयतायाः सन्निकर्षजन्यताव-च्छेदकत्वोपगमादित्यभिप्रायः।

क्षे"ति व्यासज्यवृत्तितावच्छेदकरूपेण व्यासज्य-वृत्ति-धर्म-प्रकारक-लौकिक-प्रत्यक्ष एव यावदाश्रय-सन्निकर्षस्य हेतुत्वादिति (२) रूपं नास्तीति बुद्धौ च रूपत्वावच्छिन्न प्रतियोगिताकत्वस्य सम्बन्ध-विधया भानादेकैकाभाव-सन्निकर्षेऽपि तथा धीः स्यादित्यर्थः । ननु यावदाश्रयासन्निकर्षे सम्बन्ध विधया तद्भानं न भवत्येव, अतएव दण्ड-पुरुष-सन्निकर्ष दशायामेव दण्डीति संयोग-सम्बन्धांशे लौकिक-प्रत्ययस्तथाच व्यासज्यवृत्ति-प्रकारकत्वं न कार्य्यतावच्छेदके निवेश्यम् अत आह "यादृश" इति । "तत्र" तादृश-ज्ञाने । "तेषां" यावदाश्रयाणां "तद्भेदस्य" यावदाश्रयाणां परस्पर-भेदस्य । यद्यपि तद्भेद-ज्ञाने तत् ज्ञानस्या(१)वश्यकत्वात् तत्-ज्ञानस्य (२) स्वातन्त्र्येण हेतुत्वे मानाभावस्तथापि यावदाश्रय-लौकि-कप्रत्यक्षाभिप्रायेणोक्तम् (३) । तत्तदुपनीत-भाने सत्यपि तल्लौकिक-प्रत्यक्ष-प्रतिबन्धक-दोषादि-सत्त्वे यावदाश्रय-सन्निकर्ष-तद्भेद-ज्ञानादि-सत्त्वे व्यासज्यवृत्ति-धर्म्माग्रहादिति तद्विशेष्यक-ज्ञानाभिप्रायेणेदमित्यपि कश्चित् । "तदज्ञाने" तल्लौकिक-प्रत्यक्षाभावे । "तदभेद ज्ञाने" तद्भेद-ज्ञानाभावे । "तदग्रहात्" व्यासज्य-वृत्तिधर्म्माग्रहात् । व्यतिरेकमुक्त्वाऽन्वयमाह "आश्रयभेदे"ति एकस्मिन्नेव वृक्षे भेद-भ्रमेण द्वित्व-(४)भ्रम-दर्शनादित्यर्थः । एतावता प्रकृते किमायातमित्यत आह (५) "न चात्रे"ति "अत्र"

(१) इत्तीति नास्ति ग ।
(२) तज्ज्ञानस्येति ग ।
(३) तज्ज्ञानस्येति ग ।
(४) अभिप्रायेणेदं इति ग ।
(५) द्वित्वभ्रम तदिति च ।
(६) निबद्धेति च ।

वाय्वादौ। "विशेषत" इति अभावत्वादिना अहस्य परस्पर-भेद-ज्ञानानुपयोगित्वेनाकिञ्चित्करत्वात्, तत्तद्रूपाभावत्वादिना ग्रहस्य प्रकृतोपयोगिनस्तत्तद्रूपत्वाद्यज्ञानेऽसम्भवात्, तथाच वाय्वादौ रूपं नास्तीति लौकिक-प्रतीतिर्न स्यादिति भावः।

ननु यावदाश्रय-भेद-ज्ञानादीनां व्यासज्यवृत्ति-प्रत्यक्षत्वाव-च्छिन्नं प्रति नैक रूपेण हेतुता, द्वित्व-त्रित्व-संयोगादि-साधारणस्य व्यासज्यवृत्तित्वस्यैकस्यानुगतानतिप्रसक्तस्य यावदाश्रय-भेद-ज्ञान-त्वस्य चाभावात्; किन्तु द्वित्व-प्रत्यक्षे तद्वित्व-प्रत्यक्षे वा तत्तदा-श्रय-भेद-ज्ञानत्वादिना हेतुत्वं, प्रकृते चाश्रय-भेद-ज्ञानाभावेऽपि रूपं नास्तीति प्रतीति-सत्त्वात् तथा हेतुत्वमेव न कल्प्यत इत्यत आह "दिगि"ति। दिगर्थस्तु रूपं नास्तीति प्रतीति-विषयता एकस्यैवा-भावस्य कल्प्यते न त्वनेकस्य, एवं प्रतिबन्धकाभाव-कारणतायामपि अभाव-कूट-कारणत्वापेक्षया एकस्यैव मणित्वाद्यवच्छिन्न-प्रतियो-गिताकाभावस्य हेतुत्वे लाघवमिति दिक्।

दीधितिः।

केचित्तु अनन्त-विशेषाभावानां सामान्यावच्छिन्न-प्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पना-मपेक्ष्य लाघवात् सामान्यावच्छिन्न-प्रतियोगिताकत्वे-नैक एवाभावः कल्प्यते, कल्पनीय-शरीरस्योभयत्र तुल्यत्वेऽपि एतदपेक्ष्य तस्य गुरुत्वात्। विनिगमना-भावेऽपि च सामान्याभाव-सिद्धिरप्रत्यूहैव, धर्म्म-कल्प-

नातो धर्म्मि-कल्पनाया गुरुत्वं कल्पनीयानेकत्व-प्रयुक्तम्। न चातिरिक्ताभावस्य तत्र च सामान्याव-च्छिन्न-प्रतियोगिताकत्वस्यानन्तवाय्वाद्यधिकरण-वृत्ति-त्वस्य च कल्पनामपेक्ष्य क्लृप्तानन्त-वाय्वाद्यधिकरण-वृत्तित्वानां यावद्विशेषाभावानामेव सामान्यावच्छिन्न-प्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनैव लघीयसीति वाच्यम् एवं सत्यभावमात्रासिद्धि-प्रसङ्गा-दित्याहुः।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां
दीधितौ अनुमान-खण्डे सामान्या-
भाव-प्रकरणं समाप्तम्।

---

दीधिति-प्रकाशः।

"तद्व्यासज्यवृत्तित्वस्य" तादृशप्रतियोगिताकत्व-व्यासज्यवृत्ति-त्वस्य। इदञ्च व्यासज्यवृत्तित्वं (क) तत्प्रतियोगिताकत्वादतिरिक्त-मित्यभिप्रायेण। ननु मम तादृश-प्रतियोगिताकत्वं तद्व्यासज्य-वृत्तित्वञ्चेति द्वयं कल्प्यं, भवतामपि सामान्यावच्छिन्न-प्रतियोगि-ताकत्वम् अतिरिक्तोऽभावश्चेति द्वयं कल्प्यं, तत्कथं तत्कल्पनापि-पेक्षया लाघवमत आह, "कल्पनीये"ति। "गुरुत्वात्" इति,

---

(क) पर्य्याप्तिविशेषरूपं व्यासज्यवृत्तित्वमिति भावः।

अनन्ताभावेषु तदुभयं कल्पनीयमिति गौरवं पूर्व्वत्रेति भावः। ननु प्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वं प्रतियोगिताकत्व-स्वरूपं ततोऽधिकं न कल्प्यं तथाच भवतामिव तादृश प्रतियोगिताकत्व-मभावस्येत्युभयं कल्प्यमिति गौरवमत आह "विनिगमने"ति। त्वया व्यासज्य-वृत्तित्वस्यातिरिक्तस्याकल्पने मयापि प्रतियोगि-तातिरिक्ता न कल्पनीया, तथा च क्लृप्तेष्वनन्ताभावेषु एका प्रति-योगिता, तत्र सामान्यावच्छिन्नत्वं कल्प्यं, यथा भवतां तथास्माक-मपि, क्लृप्तानामनन्तानां प्रतियोगितानां सामान्य-धर्म्मावच्छिन्नत्वम् अतिरिक्ताभावस्येत्युभयत्र तुल्यत्वेऽपि विनिगमना-विरहादतिरिक्ता-भाव-सिद्धिरिति। ननु धर्म्मि-कल्पनातो धर्म्म-कल्पनायां लघुत्वात् प्रतियोगिताकत्वस्य धर्म्मत्वमेव तत्कल्पने विनिगमकमत आह "धर्म्मे"ति। यत्र धर्म्मि-कल्पने धर्म्म-धर्म्मिणोरुभयोरपि कल्प्यत्वं धर्म्म-कल्पने चैकस्यैव कल्पनं तत्रैव तन्न्यायावतारो न तु धर्म्मत्वेनैव लाघवमिति तदर्थ इति भावः। "लघीयसी"ति। भवतां कल्प-नीयं त्रयं, मम तु द्वयम्, अनन्ताधिकरण-वृत्तित्वस्य विशेषाभावेषु क्लृप्तत्वादित्यर्थः। "एवं सती"ति घटाभावस्तावदेकः कल्प्यः, तस्यानन्ताधिकरण-वृत्तित्वञ्च कल्प्यं, तदपेक्षया क्लृप्तानामेवाधि-करणानां तथा प्रतीति-नियामकत्वं लघु इत्यभाव एव न सिध्येदित्यर्थः।

वस्तुतो (क) रूपं नास्तीति धी-नियामकतयाऽतिरिक्तेऽभावे

---

(क) प्रतियोग्येरनुत्तरत्वादाह वस्तुत इत्यादि।

सिद्धे तत्सामन्ताधिकरण-सम्बन्धः कल्पनीय इति फल-मुख-गौरवं न दोषायेति भावः ।

इति श्रीमद्-भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमान-खण्डे सामान्याभाव प्रकरण-
व्याख्या समाप्ता ।

---

## विशेष-व्याप्ति-प्रकरणम् ।

अथ विशेष व्याप्ति-प्रकरणे तत्त्व-चिन्तामणिः ।

यद्वा प्रतियोगि-व्यधिकरण-स्वसमानाधिकरणा-त्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् ।

---

अथ विशेष व्याप्ति-प्रकरणे दीधितिः ।

"यद्वे"त्यादि । अथाव नानाव्यक्ति-रूपादि-साध्य-कैक-व्यक्ति-पृथिवीत्वादावव्याप्तिः । न च तत्र (१) रूपवत्त्वादिकमेव साध्यं, तच्च परम्परा-सम्बन्धेन रूप-त्वादिकमेव तेन च सम्बन्धेन न तदभावः पृथिव्यादा-विति वाच्यं रूपादेरसाध्यतापत्तेः । द्रव्यान्यत्वादि-विशिष्ट-सत्ताद्यभावस्य द्रव्यादि-वृत्तित्वात् सत्तादि-साध्यक-द्रव्यत्वादावव्याप्तिश्च, अन्यथा विशिष्टतया-सत्तादेः साध्यत्वे व्यभिचारिणि जातिमत्त्वादावति-प्रसङ्गात्, व्युत्पादयिष्यते च विशिष्टाभावस्य विशेष्य-प्रतियोगिकत्वं ; द्वित्वाद्यवच्छिन्नाभावस्य तत्र सत्त्वाच्च ।

---

अथ विशेषव्याप्ति-प्रकरणे दीधिति-प्रकाशः ।

"नानाव्यक्ती"ति रूपवान् पृथिवीत्वादित्यादावित्यर्थः । साध्यस्यैकत्वे विशिष्टाभावाद्यनङ्गीकारे नाव्याप्ति, हेतोरपि नाना-

---

(१) न चात्रेति क्वचित् पाठः ।

व्यक्तित्वे यत्तदधिकरणे या साध्यव्यक्तिस्तयोरेव व्याप्तिरिति मिश्र दिशा वक्तुं शक्यमिति तत्परिहाराय(क) विशेषणद्वयम्(ख) ।

उपाध्यायमतमाशङ्कते "न च तत्रे"ति (१) । रूपवत्त्वमपि रूपव्यक्ति-भेदादनेकम् अत आह "तच्चे"ति । "परम्परासम्बन्धेन" स्वाश्रय-समवायेन । "रूपादे"रिति, तथाच रूपवती पृथिवी-त्यनुमितिर्न स्यात्, स्याच्च रूपं पृथिवीत्यनुमितिरिति भावः । ननु यत्र रूपस्य तादृश(२)व्यापकताभ्रमस्तत्रैव रूपवती पृथिवी-त्यनुमितिरन्यत्र तु रूपं पृथिवीत्याकारिकैवेत्यत आह "द्रव्या-व्यत्वे"ति (ग) । "द्रव्यत्वादावव्याप्ते"रिति । यद्यप्यसम्भव एव वक्तु-मुचितः सर्व्वत्रैव विशिष्टाभाव-द्वित्वाद्यवच्छिन्नाभाव (घ) सत्त्वात् तथापि द्वित्वावच्छिन्न-प्रतियोगिताया व्यासज्य-वृत्तित्वाङ्गीकारे एतद्रूपवान् एतद्रसादित्यादौ प्रतियोगि व्यधिकरण-हेतु-समाना-धिकरणाभाव-प्रतियोगिता-पर्य्याप्त्यनधिकरणत्वं साध्ये सम्भवतीति नासम्भवः सम्भवतीति तयोक्तमिति । नन्ववच्छेदकाघटित-सम्बन्धे

(१) चालनेति च ।

(२) रूपस्येमेति च

(क) एकव्यक्तिकाव्याप्यानेकव्यक्तिहेतुकपरिहारायेत्यर्थः ।

(ख) नानाव्यक्तिकं साध्ये, एकव्यक्तिकं हेताविति भावः । अतएवात्र विशिष्टाभावादिकमादायावच्छेदकावच्छिन्न-सत्त्वे अव्याप्तिदानमपहस्तितमिति निरस्तमिति बोध्यं ।

(ग) पूर्ववदादिद्रव्यत्वावच्छिन्नाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् दीधितौ तत्-परित्यागः ।

(घ) एतद्रूपवानेतद्रसादित्यादौ विशिष्टाभावस्य प्रतियोगिव्यधिकरणता-सम्भवादाह "द्वित्वाद्यवच्छिन्नाभावे"ति । उभयाभावस्य प्रतियोगिव्यधिकरणत्वस्य साध्यतावच्छेदक-सम्बन्धेनाप्रसिद्धेः हेतु-द्वि-रीत्या बोध्यम् ।

प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यं न निवेश्यं किन्तु शुद्ध-प्रतियोगि-वैयधिकरण्यं तथाच विशिष्ट सत्ताभावस्य प्रति-योगि-समानाधिकरणतया प्रतियोग्यसमानाधिकरण-पदेनैव तद्-वारणमत आह "अन्यथे"ति। "अतिप्रसङ्गा"दिति, तथाच तद्वारणाय प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यमवश्यं वा-च्यमिति भावः। "अन्यथा" विशिष्टाभावस्य-विशेष्याप्रतियोगि-कत्वे (क) इति तु क्वचित्। ननु विशिष्टाभावस्य-विशेष्य-विशेषण-सम्बन्ध एव प्रतियोगी न तु विशेष्यं, तत्र विशिष्टसत्तायाः साध्यत्वे सद्धेतुत्वमेव, तादृशसम्बन्धस्य साध्यत्वे परं व्यभिचारित्वमत आह "व्युत्पादयिष्यत" इति। दण्डी पुरुषो नास्तीति प्रतीतौ दण्ड-विशिष्ट-पुरुषस्यैवप्रतियोगित्वावगाहनान्न तु तादृश-संयोग-स्येति भावः। ननु विशिष्टमतिरिक्तमेवेति नोक्तदोष इत्यत आह "हित्वादीति"। "तत्र" हेतुमति। प्रतियोगिता तु न व्यासज्यवृत्तिरिति भावः। तथाचासम्भव इति ध्येयम्।

---

दीधितिः।

अथाप्रतियोगित्वं प्रतियोगित्वाभावः, स च येन रूपेण, तद्रूपावच्छिन्न-व्याप्यत्वं हेतौ, अस्ति चायं रूपा-दौ, रूपत्वादिना न पृथिव्यादि-निष्ठाभाव-प्रतियोगित्व-मिति प्रत्ययादिति चेन्न तादृश प्रतीत्या हि रूपत्वादौ

---

(क) विशिष्टाभावस्य विशेष्य-विशेषण-सम्बन्धाभाव-रूपत्वादित्यभिप्रायः।

प्रतियोगिताया अवच्छेदकत्वाभावो गृह्यते, न तु तद्-भावावच्छेदकत्वं, सर्व्वत्रैव रूपे पृथिवी-निष्ठाभाव-प्रति-योगित्वं न तु कुत्रापि(१)रूपे तदभाव इत्यबाधित-प्रत्ययात्। अन्यथा यो यो धर्म्मो यस्य यस्य नावच्छेद-कस्तत्तदवच्छेदेन तत्तदभावोऽप्युक्त-रीत्या सिध्येत्। प्रमेय-धूमत्वेन न वह्निमन्निष्ठाभाव-प्रतियोगित्वमिति प्रत्ययात्तदवच्छेदेन तादृश-प्रतियोगित्वाभावस्यापि सुव-चत्वाच्च। अथ प्रमेय धूमत्वं न गौरवेण सामानाधिक-रण्य-प्रतियोगितावच्छेदकं विवक्षितञ्चात्र तथैति चेत् असमानाधिकरण-धूमक-व्यक्ति-वृत्तितया वह्नित्वमपि न तदवच्छेदकं, कम्बुग्रीवादिमत्वादिना च घटादेर-साध्यतापत्तिरिति बहु-व्याकोपश्च। अत एव प्रमेय-धूमत्वं गौरवेन प्रतियोगिताया इव तच्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः।

---

दीधिति-प्रकाश:।

(प्रगल्भ-मतमाशङ्क्य निषेधति "अथे"ति) (२) "येन रूपेणे"ति तथा च तादृश-प्रतियोगित्वाभावावच्छेदकं यत् साध्यतावच्छेदकं

---

(१) क्वापीति क्वचित् पाठः, स एव भवानन्द-सम्मतः।

(२) ( ) चिह्नित-पाठोनास्ति च।

तदवच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति भावः। "अयं" रूप-त्वेन तादृश-प्रतियोगित्वाभावः। "तदभावावच्छेदकत्वं" प्रतियोगि-त्वाभावावच्छेदकत्वं। "सर्व्वैवे"ति रूपत्वस्यानतिरिक्तवृत्तित्व-रूपावच्छेदत्व—स्फोरणाय, "न तु व्याप्नोति" रूपत्व-सामानाधिक-रण्येन तादृश-प्रतियोगित्वाभावसत्त्व व्यवच्छेदाय, तथाच रूपत्वाव-च्छेदेन तादृश-प्रतियोगि-त्वप्रत्ययस्य विरोधिनः सत्त्वे तदवच्छेदेन प्रतियोगित्वाभाव विषयी-करणासम्भवात् रूपत्वादिना न पृथिवी-निष्ठाभाव-प्रतियोगित्वमिति-प्रत्ययस्य तृतीयोल्लिखितस्य पृथिवी-निष्ठाभाव-प्रतियोगितावच्छेदकत्वस्याभावो (१) रूपत्वे विषय इति भावः। ननु रूपत्वाद्यवच्छेदेन तादृश-प्रतियोगित्वाद्यभाव-ज्ञाने रूपत्वे स्वरूपसम्बन्धरूप तादृश-प्रतियोगितावच्छेदकत्व-ज्ञान-मेव विरोधि, न तु अनतिरिक्त-वृत्तित्वरूपावच्छेदकत्व-ज्ञानमतो-ऽतिरिक्त-प्रतीतिर्वाधिकेत्यत आह "अन्यथे"ति तेन रूपेण प्रतियोगि-त्वाभाव-विषयीकरणे। "योग" इति, तथा च गुणाद्यनवच्छेदक-प्रमेयत्वाद्यवच्छेदेन गुणाद्यभावोऽपि सिध्येदित्यर्थः। अत्रेष्टापत्तौ दोषमाह "प्रमेयधूमत्वेनेति" तथा च प्रमेयधूमवान् वह्नेरित्यत्राव्या-तिव्याप्तिरिति भावः।

"अथेति"। "तथा" सामानाधिकरण्य-प्रतियोगितावच्छे-दकं, तथा च तादृश-प्रतियोगित्वाभावावच्छेदको यो धर्मस्तद्रूपाव-च्छिन्न-प्रतियोगिताक-सामानाधिकरण्यं व्याप्तिरिति भावः। इदम-

(१) रूपत्वाभाव इति च।

वच्छेदकत्व (क) मनतिरिक्तवृत्तित्वनियतमन्यूनवृत्तित्वनियतं (ख) वा। आद्ये "असमानाधिकरणे"ति, असमानाधिकरणो धूमो यस्यायोगोलकीयवह्नेस्तद्वृत्ति येत्यर्थः। तथा च वह्नित्वस्यातिरिक्तवृत्तितया सामानाधिकरण्य-प्रतियोगितानवच्छेदकत्वाद्वह्निमान् धूमादित्यादावव्याप्तिरिति भावः। द्वितीये "कम्बुग्रीवेति" कम्बुग्रीवादिमत्त्वस्य प्रमेयधूमत्वादेरिवानवच्छेदकत्वादित्यर्थः (ग)। "अतएव" कम्बुग्रीवादिमत्त्वादिना घटादेरसाध्यतापातादेव, (तथा च (घ) तादृश-प्रतियोगित्वाभावावच्छेदकं यद्रूप विशिष्ट-सम्बन्धि-निष्ठाभाव-प्रतियोगितानवच्छेदकं ) (१) तदवच्छिन्न-सामानाधिकरण्यमित्युक्तौ च प्रमेयधूमवान् वह्नेरित्यादौ अतिव्याप्तिरिति भावः (ङ)।

दीधितिः ।

अत्र वदन्ति, अप्रतियोगित्वं प्रतियोगितानवच्छेदक-

(१) एतच्चिह्नितस्थले तथाच तादृश-प्रतियोगित्वाभावावच्छेदकं यत् तद्रूप-विशिष्ट-सम्बन्धिनिष्ठाभाव-प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकमिति च पुस्तके पाठः ।

(क) सामानाधिकरण्य-प्रतियोगितावच्छेदकत्व मित्यर्थः ।

(ख) अन्यूनवृत्तित्व-नियतनियतस्य साध्य-समान-रूपमित्यर्थः ।

(ग) सामानाधिकरण्य-प्रतियोगितानवच्छेदकत्वादित्यर्थः ।

(घ) ननु वह्न्यभावाधिकरण-प्रतियोगित्वा भावावच्छेदकत्वस्य निवेशात् न कम्बु-ग्रीवादिमत्त्वादिना घटादेरसाध्यतापत्ति-रित्यत आह तथाचेत्यादि ।

(ङ) तद्रूपवत्त्वेन प्रमेय-धूमत्वादेरुपादान-सम्भवात् । हेतुव्यापकतावच्छेदकी-भूतत्वादेरेव तादृश-प्रतियोगित्वाभावावच्छेदकत्वेन तथात्वस्य उभय-समान-सम्भ-वात् । वह्निधराधूमवान् वह्नेरित्यादेः परिचय इति भावः ।

धर्म्मवत्त्वम् । नचैवं पूर्व्वस्मादभेदः, तत्र साध्य-जातीय समानाधिकरण-साधन-जातीयत्वस्य, अत्र च साध्य-साधन-सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्य्यात् । घट-कयोस्तादृश-प्रतियोगितावच्छेदक-तत्त्वान्योन्याभावात्य-न्ताभावयोर्भेदेन भेद इत्यपि कश्चित् ।

---

दीधिति-प्रकाशः ।

"एवं" प्रतियोगितानवच्छेदकत्व--घटित--लक्षण--करणे । "तत्र साध्यजातीये"ति तथा च पूर्व्वलक्षणे व्यधिकरण-वह्नि-धूम-योरपि व्याप्तिरित्युक्तं, प्रकृते तु समानाधिकरण-तत्तद्वह्निधूमयो-रेव व्याप्तिरित्युच्यत इति भेदः ।

"प्रतियोगितेति", प्रतियोगितावच्छेदकान्योन्याभाव--प्रति-योगितावच्छेदकत्वात्यन्ताभावयोरित्यर्थः । "अन्यनिष्ठे"त्यादि-ग्र-न्थासन्दर्भः कश्चिदित्यनेन सूचितः (क) ।

---

तत्त्वचिन्तामणिः ।

यत्-समानाधिकरणान्योन्याभाव-प्रतियोगि यद्यन्न भवति तेन समं तस्य सामानाधिकरण्यं वा, स्व-समा-नाधिकरणान्योन्याभावाप्रतियोगि-यद्वत्कत्वं, वा ।

---

(क) अन्यनिष्ठेत्यादिग्रन्थेन समानाधिकरणयोरेव व्याप्तिरभिधानादुक्तरीत्या व्याप्तिभेद-समर्थनस्य नचित्रदर्शितमतत्वादिति भावः ।

दीधितिः।

अत्यन्ताभाव-गर्भवत् सामान्य-विशेष-भेदेन अन्योन्याभाव-गर्भमपि व्याप्ति-द्वयमाह "यत्समानाधिकरणे" त्यादि-लक्षण-द्वयेन। प्रथमे एकस्य साध्याधिकरणांशस्याधिक्यात् द्वितीय-लक्षणम्। अत्र यद्यपि नाना व्यक्ति-साध्यक-स्थले तत्तत्साध्यवतस्तत्तत्-साध्यवत्त्वस्य च साधन-समानाधिकरणान्योन्याभाव-प्रतियोगित्वातदवच्छेदकत्वाच्चाव्याप्तिस्तथापि यद्रूपावच्छिन्नवत्त्वं तादृशान्योन्याभाव-प्रतियोगितानवच्छेदकं तद्रूपावच्छिन्न-सामानाधिकरण्यमित्यत्र तात्पर्य्यम्। वह्न्यादौ तत्-संयोगादौ तद्वदादौ वा साध्ये सर्व्वत्र साक्षात्परम्परया वा अनुगमकं वह्नित्वादिकमेव साध्यतावच्छेदकं, तदवच्छिन्नवत्त्वस्य च न तादृशान्योन्याभाव-प्रतियोगितावच्छेदकत्वमिति। यत् यद्रूपावच्छिन्नं यादृश-रूपावच्छिन्नमनवच्छेदकमिति वा यथायथं वक्तव्यम्। शब्दैक्यस्यानुपादेयत्वात्।

---

दीधिति-प्रकाशः।

"सामान्यविशेषे"ति सामान्यं साध्य-जातीय-समानाधिकरण-साधन-जातीयत्वं, विशेषः साध्य-साधन-सामानाधिकरण्यम्।

"आधिक्यादि"ति, अन्योन्याभावाप्रतियोगियत्साध्याधिकरणं तद्वृत्ति-साध्य-सामानाधिकरण्यमित्यर्थे एकस्याधिकरणांशस्याधिक्यात्, यद्वत्त्वमित्यत्र तु अन्योन्याभावाप्रतियोगिसाध्याधिकरणं यत् तद्वृत्तित्वमित्यर्थे तदप्रवेशाल्लाघवमिति। "नानाव्यक्ता"ति (क) नानाधिकरण-वृत्ति-नानाव्यक्ति-साध्यक-स्थले इत्यर्थः। साध्यस्यैक-व्यक्ति-वृत्तित्वे एको न द्वाविति प्रतीतेरन्योन्याभावाविषयकत्वे नाव्याप्तिः सम्भवति (१) साध्यस्यैक-व्यक्तित्वे च यत्साध्यवत्त्वं तादृशान्योन्याभाव-प्रतियोगितानवच्छेदकं इत्युक्तेऽपि निस्तारः स्यादित्यतः साध्य-तद्वतोर्नानात्वं दर्शितं (२)। "तत्तत्साध्यवत्त्वस्ये"ति, तत्तद्वह्निमत्त्वस्य वह्न्यादौ साध्ये (३) तादृशान्योन्याभाव-प्रतियोगितावच्छेदकत्वादित्यर्थः। ननु वह्निमान् धूमादित्यादौ वह्नित्वस्य साध्यतावच्छेदकत्वेन यद्रूपावच्छिन्नवत्त्वमनवच्छेदकमिति लक्षण-समर्थनेऽपि वह्नि-संयोगादौ साध्ये वह्नि-संयोगत्वस्य वह्नि-घटित-मूर्त्तिकत्वेन नानात्वात् कथं लक्षण-गमनमत आह "वह्न्यादा"विति। "साक्षात्परम्परया वे"ति, वह्नौ साक्षात्, अन्ययोः परम्परया स्वाश्रय प्रतियोगिकत्व-रूपया वह्नित्वमनुगमकमित्यर्थः। नन्वेवमपि वह्निमानित्येवानुमितिः स्यान्न तु

---

(१) विषयकत्वेनाव्याप्तेरसम्भव इति ग।

(२) उपदर्शितमिति ग।

(३) वह्न्यादौ साध्ये इति नास्ति ग।

---

(क) नानाव्यक्तिषु साध्यानि यस्येति विग्रहाभिप्रायेणाह "नानाधिकरणे"-त्यादि।

वह्नि-संयोगवानित्याकारिकेत्यतस्तत्र विशिष्यैव लक्षणमाह "यदि" त्यादिना। वह्नित्वादौ साध्ये यदनवच्छेदकं, वह्न्यादौ साध्ये यद्रूपावच्छिन्नमनवच्छेदकं, वह्नि-संयोगादौ साध्ये यादृश-रूपावच्छिन्नमिति। एवं वह्नि-संयोगवदादौ यादृशरूपवदवच्छिन्न (१) मित्यादि वाच्यमिति। इदञ्च प्रगल्भमतानुसारेण तत्तद्वह्नेस्तत्तद्वह्नित्वेन प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वेन तत्र (२) तदभावाभ्युपगमात्, स्वमते तु वह्न्यादौ साध्ये तादृश-प्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकमिति, वह्नि-संयोगादौ तादृश-प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकमित्यादिवक्तव्य मिति बोध्यम्। "शब्दैक्ये"ति, अर्थस्य (३) नानाविधत्वे एक-शब्देनाभिधानस्याकिञ्चित्करत्वादित्यर्थः।

तत्त्वचिन्तामणिः।

अन्य-वृत्ति-वह्नि-तद्वतोरन्यवृत्ति-धूमवन्निष्ठात्यन्ताभावान्योन्याभाव-प्रतियोगित्वात् व्यधिकरण-वह्नि-धूमयोर्न व्याप्तिः, किन्तु तत्तद्धूमस्य समानाधिकरण-तत्तद्वह्निना। न चैवं धूममात्रे न व्याप्तिरिति वाच्यं सर्व्वधूम-व्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात्, धूम-सम्बन्धि-वह्निस्तद्व्याप्य एव। युगपदुत्पन्नविनष्टयोश्च व्याप्तिरेव (क)।

(१) तादृशरूपावच्छिन्नावच्छिन्न इति ग।

(२) तत्रेति नास्ति ग।

(३) अभिधेयस्येति ग।

(क) जन्य-जनक-भावापन्नयोरकारणकार्ययोरेव वा व्याप्तिरिति नियमात् धूम-

कर्म्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः। यद्वा प्रतियोगि-वैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्य-न्ताभाव-विशेषणं, कर्म्मणि च संयोगाभावस्य प्रतियोगि-वैयधिकरण्यावच्छेदकावच्छिन्नत्वमेव।

दीधितिः।

"अन्ये"त्यादि, यद्यप्युक्त-रीत्या सर्व्वत्र तादृश-प्रति-योगितानवच्छेदकत्व—पर्य्यन्तानुधावनस्यावश्यकत्वेना--किञ्चित्करमेव तादृशाभाव-प्रतियोगित्वं तथापि विशिष्ट-सामानाधिकरण्य-रूपाया व्याप्तेर्व्यधिकरणासम्भवित्व-मात्रे तात्पर्य्यम्।"व्याप्तिरेवे"त्यस्य कालिकीत्यादिः।

दीधिति-प्रकाशः।

विशेषलक्षणाभिप्रायेण मूलं योजयति "तथापी"ति। तथा च (१) "अन्यनिष्ठे"त्यादि-मूलं व्यधिकरण-वह्नि-धूमयोः सामा-नाधिकरण्यस्यैव (२) प्रतिक्षेपकं, न तु व्यापकता-दलस्येति भावः। विभिन्न-कालोत्पत्ति-विनाशयो(३)रपि दैशिक-व्याप्ति-सत्त्वात् दै-

(१) तथाचेति नास्ति ग।

(२) सामानाधिकरण्यांशस्यैवेति ग।

(३) उत्पत्तिविनाशकयो रिति घ।

यदुत्पत्तिविनाश-कालके अतिव्याप्तिरिति शङ्का-निरासायाह मूले "युगपदि"त्यादि, तथाच तादृश नियमे मानाभावेन तत्र व्याप्तिरस्त्येवेति नातिव्याप्तिरिति भावः।

शिक-व्याप्तौ युगपदुत्पन्नेत्यादिकमनुपयुक्तं(क) अतः पूरयति"कालि-कीत्यादि"रिति ।

तत्त्वचिन्तामणिः ।

न चान्योन्याभावस्याव्याप्यवृत्तित्वं, अभेदस्याबाधित-प्रत्यभिज्ञानात् ।

दीधितिः ।

अन्योन्याभाव-गर्भ-लक्षणस्याव्याप्यवृत्ति-साध्यक-सद्धेतावव्याप्तिं निरस्यति "नचेति"। "अभेदस्ये"ति । तथा च मूले महीरुहो विहङ्गम-संयोगी नेति प्रतीतेरनुभूयमान-विशिष्ट-भेदोल्लेखिन्या अपि शिखी विनष्ट इति प्रतीतिवद्विशेषणाभाव-विषयतामात्रं कल्प्यते, बाधक-बलात् । यत्र च विशिष्ट-भेदे न बाधकं तत्र तथा प्रतीति-बलात् तत् सिद्धिरप्रत्यूहैवेति नाति-प्रसङ्गः ।

दीधिति-प्रकाशः ।

"लक्षणस्ये"ति(ख)सामान्यत एक-वचनम् ।"अनुभूयमाने"ति । उल्लेखो विषयित्वं, तथा चानुभूयमानं विशिष्ट-भेद-विषयित्वं यस्या

(क) दैशिकव्याप्तौ युगपदुत्पत्ति विनाशयोरनुपयोगादिति भावः ।

(ख) द्वयोर्लक्षणयोरन्योन्याभाव गर्भतया लक्षणयोरेक-वचनानुपपत्तेराह "सामान्यत, इति, द्वित्वाविवक्षणादिति भावः ।

इत्यर्थः। यद्वा (१) उल्लेखः(क) शब्दाभिलापः, तथा चानुभूयमानो विशिष्ट-भेद-वाचक-शब्दाभिलापो यस्याः प्रतीतेरित्यर्थः (२) तथा चात्यन्ताभाव-विषयक-प्रतीतावन्योन्याभाव-विषयित्व-भ्रमस्थाइग-शब्दाभिलापो वा, न तु सा प्रतीतिर्भेदावगाहिनी, अभेद-निश्चय-सत्त्वे भेद-ज्ञानस्यासम्भवादिति भावः। "शिखो"ति, शिखा-विनष्टा पुरुषो न नष्ट इति बाधक-सत्त्वात् तत्र विशिष्ट-नाशो न विषय इति भावः। "बाधकबला"दिति अभेद-प्रत्यभिज्ञान-रूप-बाधक-बलादित्यर्थः। नन्वेवं गुणादावपि संयोगि-भेदो न सिध्येदत-आह "यत्र चे"ति। "नातिप्रसङ्गः" संयोगी सत्त्वादित्यादा-विति शेषः।

दीधितिः।

अत्र वदन्ति। "अभेदस्य" भेदाभावस्य ज्ञानं न बाधकं, भेदवत्तत्प्रतियोगितावच्छेदकस्य संयोगा-त्मनस्तदभावस्याव्याप्यवृत्तित्वेन तदुपपत्तेः। यथा हि प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगि-ज्ञाने तदत्य-न्ताभावस्याग्रहादभाव-व्यवहाराच्च स एव तदभाव इति कल्प्यते, तथा प्रतियोगितावच्छेदक-धर्म्म-ग्रहे तद्व-दन्योन्याभावस्याग्रहादभाव-व्यवहाराच्च स एव तस्या-

(१) यद्वेति नास्ति ग। (२) इति भावः इति ग।

(क) उल्लेख-शब्दस्य शब्दाभिलापे प्रसिद्धतया विवक्षितार्थकत्वाभावात् इत्यतः कल्पान्तरमाह उल्लेख इति।

भाव इति निश्चीयते, आधिक्येऽपि चाव्याप्यवृत्तित्वात् । अत एव न मूलावच्छेदेन कपिसंयोगि-भेदाभाव-ज्ञानं तथा(१) असम्भवादसिद्धेश्च । नापि कपिसंयोगि-भेदस्य वृत्त्यावृत्तित्व-ज्ञानमसिद्धेः, तद्वृत्तित्वस्यैव ग्रहात् । नापि कपिसंयोगि-भिन्न-भेद-ज्ञानं, कपिसंयोगि-भेदवत्तद्भेद-स्याप्यव्याप्यवृत्तित्वेनाविरोधात् । नापि मूलावच्छेदेन तज्-ज्ञानमसिद्धेः । तद्धर्म्मावच्छिन्न-भेदस्य तद्धर्म्मभाव-पर्य्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोग-स्य मूल-वृत्तित्वे विरोधाच्च । न हि घट-भिन्न-भेदो घट-त्वादतिरिच्यते, आवश्यक-क्लृप्त-घटत्वेनैवोपपत्तौ अति-रिक्त-कल्पनायां मानाभावात्, अन्यथा सर्व्वत्राभावस्या-भावोऽतिरिक्त एव कल्प्येत ।

---

दीधिति-प्रकाशः ।

"भेदवत्" भेदस्यैव । "तदभावस्य" भेदाभावस्य । संयोगस्य तदभावत्वोपपत्तये "तत्प्रतियोगितावच्छेदकस्ये"ति, अव्याप्यवृत्ति-त्वोपपत्तये "संयोगात्मन" इति । "तदुपपत्तेः" भेद-प्रतीति-दशा-यामभेद-प्रतीत्युपपत्तेः । अत्यन्ताभाव-प्रतियोगि-दृष्टान्तेन भेद-प्रतियोगितावच्छेदकस्य तदभावत्वं व्यवस्थापयति "यथा ही"-

---

(१) न तथेति क्वचिन्नास्ति पाठः, तादृश पाठे अत एवेत्यनन्तरं नकारो नास्ति ।

त्यादिना। ननु तज्-ज्ञान-प्रतिबन्धक-ग्रह-विषयस्यैव तदभावत्वे प्रतियोगि-व्याप्यस्यात्यन्ताभावत्वापत्तिरत आह "अभाव-व्यवहाराच्चे"ति(क)। ननु लाघवा(ख)दभावत्व-प्रतीतेः प्रमात्वानुरोधाच्च संयोगातिरिक्त एव संयोगि-भेदाभावस्तत्राह "आधिक्येऽपी"ति। "अव्याप्य-वृत्तित्वा"दिति, अग्रे वृक्षः कपि-संयोग्यभिन्न इत्यादि-प्रतीत्या अग्रावच्छेदेनैव कपि-संयोगि-भेदाभाव-ग्रहादिति भावः। "अतएव" कपि-संयोगिभेदाभावस्याव्याप्यवृत्तित्वादेव। "न तथा" न बाधकम्। तद्भेदाभावस्य (१) संयोगात्मकत्व-पक्षे "अस-म्भवा"दिति, आधिक्ये "असिद्धे"रिति। (यद्वा ज्ञानस्वरूपस्या-सम्भवमुक्त्वा विषयस्याप्यसिद्धिमाह "असिद्धे"रिति। मूले वृक्षो न कपि-संयोगि-भिन्न इति प्रत्ययस्य संयोग-विषयत्वेऽसम्भवादिक-मुक्त्वा प्रतिबन्धकान्यविषयत्वेऽपि दोषमाह "नापी"त्यादिना) (२)। "ज्ञान"मिति "तथे"त्यनुषज्यते, एवमग्रेऽपि। "तद्वृत्तित्वस्य" वृक्ष-वृत्तित्वस्य। "तद्वद्भेदस्य" कपि-संयोगि-भेदवद्भेदस्य। असिद्धि-मुक्त्वाऽसम्भवं दर्शयति "तद्धर्म्मे"ति। "तद्धर्म्ममात्र-पर्य्यवसित-तया" तद्धर्म्मात्मकतया। तदेव (ग) दृष्टान्तेन द्रढयति "नही"ति,

---

(१) तद्भेदाभावस्येति नास्ति ग।

(२) ( ) एतच्चिह्नितः पाठो नास्ति ख।

---

(क) तथाच यज्ज्ञानं यदभावाभावव्यवहारं जनयति तस्य तदभावाभावरूपत्वं, यथा घटज्ञाने सति घटाभावाभावव्यवहारो भवति, व्यवहारत्वावच्छिन्नं प्रति व्यवहर्त्तव्य-ज्ञानस्य हेतुत्वादिति भावः।

(ख) अनन्त-संयोगेषु संयोगिभेदाभावत्व-कल्पना-गौरवमपेक्ष्य लाघवादित्यर्थः।

(ग) तद्धर्म्मवद्भेदस्य तद्धर्म्मस्वरूपत्वमेवेत्यर्थः।

अभावत्व-प्रतीतेः प्रमात्वानुरोधेनातिरिक्तत्व-स्वीकारे त्वाह "अन्यथे"ति।

दीधितिः।

अत एव अत्यन्ताभाव-प्रतियोगिनोः अन्योन्याभाव-प्रतियोगितावच्छेदकयोः सामान्यत एव क्लृप्तो विरोधः। तच्च कपिसंयोगवत्यपि वृक्षे मूले न कपिसंयोग इति प्रतीतेरन्यथानुपपत्त्या तावदाद्ययोः स सङ्कोच्यतां (१), न ह्येषा प्रतीतिः कपिसंयोगि-भेद-विषयत्वेनोपपादयितुं शक्या, नियमतः संयोगवत्त्वेन प्रतियोगिनोऽनुपस्थितेः,प्रतियोगि-कोटौ तदनुल्लेखाच्च। मूले न कपिसंयोगीति प्रतीतेस्तु शिखी विनष्ट इतिवत्समान-विशेष्यकाभावमात्र-विषयत्वेनोपपन्नत्वान्नान्तिमयोरपीति परास्तम्।

दीधिति-प्रकाशः।

"अतएव" वक्ष्यमाण-युक्तेरेव, "परास्त"मित्यग्रेतनेनान्वयः। "सामान्यत" इति, अत्यन्ताभावत्व-प्रतियोगितावच्छेदकावच्छिन्नत्वादिना,अन्योन्याभावत्व-प्रतियोगितावच्छेदकत्वादिना चेत्यर्थः। "विरोधः" परस्परासामानाधिकरण्यम्। "स" विरोधः। अन्यथा-

(१) सङ्कोच्यते इति क्वचित् पाठः।

नुपपत्तिं(क) दर्शयति "नहौ"ति । "नियमत" इति,प्रत्यक्षेण संयो-
गोपस्थितौ संयोगवत्त्वेन प्रतियोगिन उपस्थिति-सम्भवेऽपि(ख) आर-
णात्मक-तदुपस्थितौ तदसम्भवादिति भावः। यत्राप्युपस्थितिस्तत्रापि
संयोगि-भेदो न विषय इत्याह "प्रतियोगि-कोटा"विति । "तदनु-
ल्लेखात्" संयोगिनोऽनुल्लेखात्(ग)।"मूल" इति, न कपि-संयोगीति
प्रतीतेः संयोगात्यन्ताभाव-विषयत्वे तु प्रतियोगि-कोटौ विशेषण-
मुद्रया संयोगस्योल्लेखोऽस्त्यवेति भावः। "अभावमात्रे"ति, मात्र-
पदेन विशिष्ट-भेद-विषयित्व-व्यवच्छेदः। प्रतियोगिनः कथं विशे-
षण-मुद्रया उल्लेख इत्यत्र दृष्टान्तः "शिखी विनष्ट इतिव"दिति।
"अन्तिमयोः" अन्योन्याभाव-प्रतियोगितावच्छेदकयोः विरोधी न
सङ्गच्छतामिति पूर्व्वेणान्वयः (१)।

## दीधितिः ।

अन्योन्याभावान्तरस्य प्रतियोगितावच्छेदकान्तर-
समानाधिकरणतया स्व--स्व--प्रतियोगितावच्छेदका-
सामानाधिकरण्य-पर्य्यवसायिनो विरोधस्य स्वत्व-घटि-
तत्वेन विशेष(२) एव विश्रामात्। अत्यन्तभाव-प्रतियो-

(१) सङ्गच्छत इत्यनुषज्यते इति च ।
(२) विशेषत इति हस्तलिखित-पुस्तके पाठः ।

(क) अन्य-विषयकतयोपपादनासम्भवं ।
(ख) वह्निपर्य्याप्तिघटित-सामग्री-सम्भवादिति भावः ।
(ग) अभावांशे साक्षात् परम्परया वा संयोगवतः प्रकारत्वेनानुभवेनाप्यत्वा-
दित्यर्थः ।

गिनो-रिवान्योन्याभाव-प्रतियोगितावच्छेदकयोरबाधित-सामानाधिकरण्यानुभवेन प्रतिक्षिप्ततया तथाविध-विरोध-कल्पनाया (१) अनवकाशाच्च।

दीधिति-प्रकाशः।

"अन्योन्ये"ति, घटान्योन्याभावस्य पटत्व-समानाधिकरणतयेत्यर्थः। ("विशेष एवे"ति, घटभेद-घटत्वादीनां विरोधस्य क्लृप्तत्वेऽपि संयोगि-तद्भेदयोस्तथात्वे मानाभावात्तदव्याप्यवृत्तित्वे बाधकाभावः) (२)। ननु संयोगि-भेदस्य गुणादावेव संयोगासामानाधिकरण्य-दर्शनेन विशिष्येव विरोधः प्रकृते (३) कल्प्यतामत आह "अत्यन्ते"ति "तथाविध-कल्पनायाः" संयोगि-भेदस्य संयोगासामानाधिकरण्य-कल्पनायाः।

दीधितिः।

किञ्च शिखी विनष्ट इति प्रतीतेर्विशिष्ट-ध्वंसोल्लेखिन्या विशेष्ये तद्बाधादास्तां विशेषण-ध्वंस-विषयता, न संयोगीति प्रतीतेर्विशिष्ट-भेदमवगाहमानायाः कथं विशेषण-संसर्गाभाव-विषयत्वेनोपपत्तिः, न खलु सहस्रेणापि बाधकैरिदं रजतमिति-प्रतीतौ रङ्गत्वावलम्बनं

(१) तथाविधकल्पनाया इति क्वचित् पाठः।

(२) एतच्चिह्नितः पाठोनास्ति ख।

(३) प्रकृत इति नास्ति ग।

व्यवस्थापयितुं शक्यते। न च विशेषण-भेद एव तस्या विषयः, अग्रेऽपि न कपिसंयोगीति प्रतीत्यापत्तेः। युज्यते चान्योन्याभावोऽव्याप्यवृत्तिः, कथमन्यथा पक्वता-दशायां घटादावयं न श्यामो दण्डादि-विनाश-समये चैत्रादौ नायं तद्दण्डवानित्यादयो व्यवहाराः। न च तत्र विशेषण-संसर्गाभाव एव प्रतीयते, अनुयोगिनि सप्तमीं विना तदनुपपत्तेः। न खलु भूतलं न घट इत्यादीनि वाक्यानि कदाचिदपि घट-संसर्गाभावं बोधयन्ति, तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात्।

---

दीधिति-प्रकाशः।

ननु न संयोगीति-प्रतीतिः संयोगाभाव(१)विषयत्वेनोपपन्ना(२) नैतादृश-कल्पना-बाधिकेत्यत आह(३)"किञ्चे"ति। "तद्बाधात्" ध्वंस-प्रतियोगित्व-बाधात्। "विशेषणध्वंसविषयते"ति, तत्र ध्वंसत्व-प्रकारक-प्रतीतेः "सविशेषणे ही"त्यादि-न्यायेन विशेषण-ध्वंसाव-गाहित्व-सम्भव इति भावः। "न संयोगी"त्यादि,(४) विशिष्ट-भेदे"ति (५) अत्र तु भेदत्व-प्रकारक-प्रतीतेः कथमत्यन्ताभाव-

---

(१) संयोगात्यन्ताभाव इति ख। (३) आहेति नास्ति ग।
(२) विषयत्वेनैवोपपन्नेति ग। (४) न संयोगीत्यादीति नास्ति ग।
(५) विशिष्टभेदमिति ग।

विषयत्वेनोपपत्तिरिति भावः । दण्डादि-नाश-काले दण्डादि-प्रागभाव-कालेऽपि (१) नायं दण्डीति प्रतीतेर्ध्वंसादि-विषयत्व-कथनाय "संसर्गाभावे"ति । "न खल्वि"ति, यतत्प्रकारके तत्प्रकारकत्वस्यानुव्यवसायेन विषयी-करणे अनुव्यवसायस्य तत्प्रकारकत्वांशे भ्रान्तत्वापत्तेरिदं रजतमिति-प्रतीते रजतत्व-प्रकारकत्वस्यानुव्यवसायेन विषयी-करणादिति भावः । न संयोगीति प्रतीतिः संयोग-भेद-विषयत्वेनोपपत्तिमाशङ्क्य निषेधति "न चे"ति । प्रत्यक्ष-प्रतीतौ सामग्री-वशात्(२) संसर्गाभाव-विषयकता (३) प्रसज्येतेत्यतः प्रतीति-नियत-विषयकं शब्दमप्युपष्टम्भकमाह "युज्यते चे"ति । ननु पक्वता दशायाम् अयं न श्याम इति व्यवहारो न भवत्येव, किन्तु इदानीं (४) न श्याम इति, तत्र चेदानीं यः श्यामत्वावच्छिन्न-प्रतियोगिताक-भेदो विषय इत्यतो "दण्डादौ"ति । "तद्दण्डवानि"ति, अत्र चेदानीं तद्दण्डवतोऽसिद्धा तद्भेद-विषयत्वेनोपपत्त्यभावादिति भावः । "व्यवहारो"ऽभिलापः । "तदनुपपत्तेः" संसर्गाभाव-प्रतीत्यनुपपत्तेः । तदेव व्यतिरेकेण द्रढ़यति "न खल्वि"ति । "तथात्वे" अनुयोगिनि सप्तमीं विनापि संसर्गाभाव-बोधकत्वे । "घटो न घट" इति, घटे घट-संसर्गाभाव-सत्त्वादिति भावः । तथा च पुरुषे न दण्ड इत्यादौ नञ्-पद-जन्य-पुरुष-पदार्थ-निष्ठ-संसर्गाभाव-

---

(१) दण्डादिनाश-प्रागभावकालेऽपीति ग ।　　(३) विषयतेति ग ।
(२) वशादिति ग ।　　(४) इदानीमयमिति ग ।

बोधे पुरुषोपस्थापक पदोत्तर-सप्तमी-पद-ज्ञानं हेतुः सूप्त इति तदभावान्नायं दण्डीत्यादौ न दण्ड-संसर्गाभाव-धीरिति भावः ।

दीधितिः ।

अपि च विशिष्ट-वाचक-दण्डादि-पदेभ्यो धर्म्म्युपसर्जनतयोपस्थितस्य दण्डादेः कथं प्रतियोगित्वेनाभावेऽन्वयः, इतर-विशेषणत्वेनोपस्थितस्य निराकाङ्क्षतयान्यत्र विशेषणत्वेनान्वयायोगात् । न चात्र विशिष्टोपस्थापकं पदं विशेषणमात्र-परं, तथापि चैत्रो न दण्डो घटो न श्यामं रूपम् इत्यादावपि दण्डादि-संसर्गाभाव-प्रतीत्यापत्तेर्दुर्व्वारत्वात् ।

दीधिति-प्रकाशः ।

ननु भवतु इतर-विशेषणत्वेनानुपस्थित-दण्ड-संसर्गाभाव-बोधे तथा हेतुत्वम्, इतर-विशेषणत्वेनोपस्थित-दण्डस्य नञा पुरुषानुयोगिक-संसर्गाभाव-बोधे च पुरुषोपस्थापक-पद-समान-विभक्तिक-पदार्थ-विशेषणतया दण्ड-पद-जन्योपस्थितिः कारणम् । अत एव पुरुषो न दण्ड इत्यादौ न दण्ड-संसर्गाभाव-बोधः, भवति तु पुरुषो न दण्डीत्यादावित्यत्र वेराह "अपि चे"ति । "धर्म्मी"ति मतुबर्थ-सम्बन्धिनि विशेषणतयोपस्थितस्येत्यर्थः । पर्व्वतो वह्निमान् धूमादित्यादौ इतर-विशेषणत्वेनोपस्थितस्य वह्नेरपि एकवाक्यताधीन-बोधे मतुबर्थ-विशेषणत्वेन हेतुर्थ-विशेषत्वेन चान्वया-

"द्रव्यत्वे"ति, "विशेषणत्वेने"ति च विशेषण-मात्र-परमिति, तथा च मतुपो न स्वार्थे तात्पर्य्यमिति भावः । "तथापी"ति, दण्डि-पदस्य दण्ड-परतायां दण्डिपद-दण्डपदयोर्न विशेष इतीतर-विशेषणत्वेनानुपस्थितस्यापि नञानुयोगिनि सप्तमीं विना तथा बोधे चैत्रो न दण्डीत्यत्रेव चैत्रो न दण्ड इत्यत्रापि तथा स्यादिति भावः । चैत्रो न दण्डी घटो न श्याम इत्यादौ दण्ड-पद-श्याम-पद-समभिव्याहृत-नञ एव तादृश-बोध-सामर्थ्यं क्लृप्तमिति तत्पद-द्वय-घटितमेवोदाहृतवान् ।

---

दीधितिः ।

एतेन नञोऽभाववत्प्राचणिकतया विनैव सप्तमीमन्वय-बोध-समर्थनं प्रत्युक्तम् । एवञ्च चैत्रो न पचतीत्यादौ आख्यातार्थकृतया लक्षणया वोपस्थितस्य कर्त्तुरेव भेदो भासते इत्यस्तु, वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थस्य कृति-सम्बन्धादेरभावान्वय-बोधे नञा सप्तमी नापेक्ष्यते, अपेक्ष्यते च प्रातिपदिकार्थेति निपुणतरमुपपादयिष्यामः । नञो वैधर्म्यपरतया न श्याम इत्यादेः श्यामादि-विधर्मेत्यर्थः, वैधर्म्यञ्च रक्तत्वादिकमेव, यदाहुराचार्य्याः श्यामाद्रक्तो विधर्मा न तु पृथगित्यपि वदन्तीति क्लृप्तं पल्लवितेन ।

दीधिति-प्रकाशः।

"एतेन" चैत्रो न दण्ड इत्यादि-शब्दात्तथापादनेन(१)। "अभा-ववत्त्वावगाहिके"ति, तथा च यत्राभावमात्रं नञर्थस्तत्रैवानुयोगिनि सप्तम्यपेक्षा, नञर्थस्याभाववतस्तादात्म्येनानुयोग्यन्वये (२) तु तदन-पेक्षेत्याशयः। "एवञ्चे"ति सर्व्वत्रैव संसर्गाभाव-बोधे सप्तम्य-पेक्षायामित्यर्थः। "शक्त्ये"ति वैयाकरण-मते। "निपुणतर"मिति, नञ्-व्यतिरेकेण यत्र येन सम्बन्धेन (३) भावान्वये अनुयोगिनि सप्तम्यपेक्ष्यते यथा भूतले घट इत्यादौ तत्रैव तत्सम्बन्धावच्छिन्ना-भावान्वये (४) सप्तम्यपेक्षा यथा भूतले न घट इत्यादौ, चैत्रः पचतीत्यादौ तु विनापि सप्तमीं कृत्यादेराश्रयत्व-सम्बन्धेनान्वया-नञा न सापेक्ष्यत (५) इति नञ्वादे प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमावित्यनेन दर्शनीयत्वादिति भावः। न श्याम इत्यादौ सिद्धान्तिनां संवादमाह "नञ" इत्यादि "वदन्ती"-त्यन्तेन। तद्धर्म्मावच्छिन्न-वैधर्म्म्यं तद्धर्म्मावच्छिन्नवृत्तित्वादि-लक्षणं(६) प्रकृते न श्याम इत्यादौ नञर्थो वृत्तिभिन्नत्व, श्यामपदादौ च श्यामत्वस्य विशेषणत्वे तात्पर्य्यं, तथा-चायमिदानीं न श्याम-इत्यस्य श्यामत्व-विशिष्ट-वृत्ति-भिन्नवानयमिदानीमित्यर्थः। रक्तत्व-दशायां घटस्य न श्यामत्व-विशिष्टत्वमिति न बाधः। वैधर्म्म्यं रक्तत्वादि कमित्यत्र (७) संवादमाह "यदाहु"रिति।

---

(१) तथा प्रतीत्यापादनेनेति च। (३) येन सम्बन्धेनेति नास्ति च।
(२) अनुयोगिन्यन्वये इति च। (४) तत्रैवाभावान्वये इति च।
(५) अन्वयात्तत्रापि वा नापेक्ष्यते इति न।
(६) लक्षणमिति नास्ति न। (७) रक्तत्वादीत्यत्रेति न।

तत्त्वचिन्तामणिः ।

व्याप्यव्यापक-भावाज्ञानेऽपि वस्तुसतस्तथात्वेना-ज्ञायमानस्य सम्बन्धत्वेनैव भातस्य षष्ठ्यर्थत्वम् । न चैवमनुगमो दोषाय, कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात् । अथ धूमवति वह्नि-कूटौ न स्तः, धूमवान् वह्निमद्-कूटौ न भवतीति प्रतीतेर्व्यासज्यवृत्ति-प्रति-योगिताकौ (१) वह्नि-वह्निमतोरत्यन्तान्योन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे इति चेन्न तादृ-शाभावानभ्युपगमात्, अभ्युपगमे वा तत्र तदुभयं प्रतियोगि न वह्नि-वह्निमन्तौ ।

दीधितिः ।

"सम्बन्धत्वेने"ति, निरूपित-तत्त्वमेतत् । "कस्ये"ति, इत्यस्यानानुगताया अपि व्याप्तेर्ज्ञानं यथानुमिति-हेतुस्तथा वक्ष्यते । "एते" अत्यन्तान्योन्याभावगर्भे(२) । "तादृशे"ति, ननु किं द्वित्वादिकं प्रतियोगितावच्छे-दकमेव न भवति, किं वा भवत्येव परन्तु (३) क्लृप्तानामेव स्व-समानाधिकरण-तत्तद्धर्मावच्छिन्न-प्रति-

(१) प्रतियोगिकाविति सोसाइटी-मुद्रित-पुस्तके पाठः ।

(२) अन्योन्याभावात्यन्ताभावगर्भे इति-सोसाइटी-मुद्रित-पुस्तके पाठः ।

(३) परन्त्विति नास्ति हस्तलिखित-पुस्तके ।

योगिताकानामभावानां लाघवादित्यभिप्रायः ? नाद्यः एकैकाभाव-प्रतीतितो द्वौ न स्त इति प्रतीतेर्विलक्षणत्वात्, शब्दादिना द्वौ नस्त इति निश्चयेऽप्येकैकाभाव-संशयात्, विषयानुगमं विनानुगताकार-प्रत्ययायोगाच्च। न चाभावस्य द्वित्वाधिकरण-प्रतियोगिताकत्व (१) मात्रं, द्वित्व-समानाधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकत्वं वा, द्वयं नास्तीति प्रतीतेर्विषयः, तादृशद्वित्वाधिकरण-व्यक्तिविशेष-विरहिणि तथाविधोभयशालिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात्। द्वित्व-सामानाधिकरण्याभानेऽपि प्रतीतेरनुनताकारत्वाच्च।

दीधिति-प्रकाशः।

सम्बन्धत्वस्य नियम-घटितत्वादाह "निरूपितत्त्व"मिति (२) संयोगत्वादिनैव तत्प्रवेश इति भावः। "वक्ष्यत"इति, तल्लिङ्गक-तत्साध्यकानुमितित्वं कार्य्यतावच्छेदकम्, अनुमिति सामान्ये तु अभाव-ज्ञानत्वादिना हेतुत्वमिति भावः। चतुर्णामिव (क) लक्षणानामाद्ये-पाद्विवचनं न घटत इति तदुपपादयति "अत्यन्ते"ति, तथा च अत्यन्ताभाव-गर्भत्वेन अन्योन्याभाव-गर्भत्वेन द्वयोर्द्वयोरैक्याद्विवचनमिति

(१) प्रतियोगिकत्वमिति-सोसाइटी मुद्रित पुस्तके पाठः।
(२) निरूपितेतीति च।

(क) अत्यन्ताभावघटितं द्वयं अन्योन्याभावघटितञ्च द्वयमिति भावः।

भावः । "स्वसमानाधिकरणे"ति, द्वित्व-समानाधिकरण-घटत्व-पटत्वादीत्यर्थः । "एकैकाभाव-प्रतीतित" इति घटो नास्तीत्यादि-प्रतीतित इत्यर्थः । "द्वौ न स्तः" घट-पटौ न स्तः । ननु घट-पटौ न स्त इत्यत्र (१) द्वित्वस्याधिकस्य भानादेव वैलक्षण्यमत आह "शब्दादिने"ति, प्रत्यक्षेण तादृश-निश्चय-काले एकैकाभावस्यापीन्द्रिय-सन्निकर्षादि-सत्त्वेन निश्चयात् तथा संशयोऽसिद्ध एवेत्यतः "शब्दादिने"त्युक्तम् । घट-पटौ न स्त इति शाब्दबोधे घटत्वादेः(क) प्रतियोगितावच्छेदकत्वानवगाहनात् संशयो नानुपपन्न(ख) इत्यतो "विषयानुगम"मिति, क्वचित् घट-प्रतियोगिकाभावत्वं क्वचित् पटप्रतियोगिकाभावत्वं विषय इत्यननुगम इत्यर्थः । "द्वित्वाधिकरणे"ति, अभावे द्वित्वाश्रय प्रतियोगिकत्वं द्वित्वाश्रये च घटत्व-पटत्वे तादृश प्रतीतौ प्रकार इत्यर्थः । घट-पटौ न स्त इति शाब्दबोधे प्रतियोगितावच्छेदकत्वावगाहित्वस्यानुभविकत्वादाह "द्वित्व-समानाधिकरणे"ति, "इयं" घट-पटोभयम् । "तादृशे"ति, द्वित्वाधिकरण-यत्किञ्चिद्घटपटोभयवति घट-पटौ न स्त इत्यप्रत्ययादित्यर्थः । द्वितीये द्वित्व-समानाधिकरण-तद्घटत्व-पटत्वाद्यवच्छिन्न-प्रतियोगिताकाभावस्य तत्र सत्त्वादिति । द्वितीये दूषणान्तरमाह "द्वित्व-सामानाधिकरण्ये"ति ।

(१) ननु घटपटोभय इत्यत्रेति नास्ति ख ।

(क) द्वित्वस्यैव घटत्वादेरप्युपलक्षणतयैव भानमिति भावः ।

(ख) तद्धर्मावच्छिन्नप्रतियोगिताकाभावनिश्चयस्यैव तत्संशयविरोधित्वादिति भावः ।

दीधितिः ।

अत एव न तादृश-प्रतीतेर्घटत्व-पटत्वाद्यन्यतराव-च्छिन्न-प्रतियोगिताकाभाव-विषयत्वं, अन्यतरत्वानुल्लेखे-ऽपि घट-पटौ न स्त इत्यनुगत-प्रत्ययाच्च । न च पर-म्परा-सम्बन्धेन तादृश-द्वित्व-सामान्याभाव एव द्वौ न स्त इति प्रतीतेर्विषयः, द्वित्वाधिकरणयोरेव प्रतियो-गित्वोल्लेखात्, द्वित्वादेर्घटादि-वृत्तित्वानुपस्थितावपि अन्ततः शब्देनापि घट-पटौ न स्त इत्यादि-प्रत्ययाच्च । अत एवैकविशिष्टापराभावोऽपि न तदालम्बनं, विरुद्ध-योरपि जलत्व-पृथिवीत्वयोर्द्वित्वेनाभाव-प्रत्यय इत्युक्त-त्वाच्च ।

---

दीधिति-प्रकाशः ।

"अतएव" वक्ष्यमाण-दूषणादेव । "अन्यतरत्वे"ति, अपिना अन्यतरत्व-घटकत्वेन घटत्वत्वादेरप्यनुल्लेख(क) उक्तः । यत्तु अतिप्र-सक्तधर्ममात्रेण (ख) उपस्थिते (ग) अवच्छेदकत्वाग्रहोऽपि बोध्यते (घ) इति तन्न व्यापकतावच्छेदक-रूपावच्छिन्न प्रतियोगिताकाभाव इत्यादौ व्यभिचारादिति(ङ) । "परम्परे"ति द्वित्व-पर्य्याप्त्यधिकरण-

---

(क) संसर्गविधयापि विषयत्वाभाव इत्यर्थः ।

(ख) अन्यतरत्वादिनेति शेषः ।

(ग) घटत्वादावपीति शेषः ।

(घ) अपिनेति शेषः ।

(ङ) वह्निमान् इति भिन्नव्यापकतावच्छेदकत्वेनानवच्छेदकत्वग्रहादिति भावः ।

घटपटादि-संयोगादि-सम्बन्धेनेत्यर्थः । "तादृश द्वित्वे"ति घटपटो-भयवृत्ति-द्वित्वेत्यर्थः (क) । प्रतियोगितावच्छेदककोटि प्रविष्टतयैव द्वित्वाधिकरणयोरुल्लेख इत्याशयेनाह "द्वित्वादे"रिति (ख), प्रत्यक्षे कदाचित् घटपटवृत्तित्वेन द्वित्वोपस्थितिः (१) सम्भवतीत्यतः "शब्देनापी"ति । "अतएव" एकविशिष्टापरस्यानुपस्थितावपि शब्दादिना तथा प्रत्ययादेव । दोषान्तरमाह "विरुद्धयोरपी"ति, इदञ्च विरुद्धता-नियामक-सम्बन्धेन विशिष्टस्याप्रसिद्धि-सूचनाय । तत्र जलत्व-विशिष्टस्य पृथिवीत्वस्याप्रसिद्धे रित्यर्थः ।

दीधितिः ।

नान्यः, तथात्वेपि साध्यतद्वतोस्तादृश-प्रतियोगि-त्वानपायात् । अन्तरेणाभावान्तरमेकैक-घटवति जाय-मानाया यत्-किञ्चिद्घट-द्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्यत्वादित्यत आह "अभ्युपगमे वे"ति । उभयत्वमेव प्रतियोगिता-वच्छेदकं, न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः, अगृह्यमाणावच्छेदकत्वांशेऽपि लक्षणे तथैव विवक्षित-मिति भावः ।

(१) द्वित्वप्रत्यक्षोत्पत्तिरिति ख ।

(क) तथाच द्विवचनं तादृशद्वित्ववाचकं प्रकृते तु तात्पर्यग्राहकमिति भावः ।

(ख) तथाच घटादिद्वित्वानुपस्थितौ तादृशवचनं न सम्भवतीति भावः ।

दीधिति-प्रकाशः ।

"तथात्वेऽपि" द्वित्वादेः कुण्डाभाव-प्रतियोगितावच्छेदकत्वेऽपि । "साध्ये"ति, साध्ये साधनवन्निष्ठाभाव-प्रतियोगित्वस्य साध्यवति च साधनवन्निष्ठान्योन्याभाव-प्रतियोगित्वस्य चानपायादित्यर्थः(क) । ननु कुण्डाद्यभाव(१)प्रतियोगिताया कुण्डादि-निष्ठाया द्वित्वमतिप्रसक्तमपि प्रतीति-बलादवच्छेदकं न तु तत्प्रतियोगिता बदरादावपि कल्प्यत इत्यत आह "अन्तरेणे"ति । "एकैके"ति तेन (२) घटत्वावच्छिन्नाभाव-विषयत्व-निरासः । "यत्-किञ्चिद्घट-द्वयवती"त्यनेन तत्तद्घटत्वावच्छिन्नाभाव-विषयत्व-निरासः । "अशक्यत्वा"दिति तद्घटवति तद्घटान्यघटत्वावच्छिन्नाभावेन घटान्तरवति तदन्य(ख)घटव्यक्त्यभावेनेत्येवं क्रमेण तादृश-प्रतीतिरुपपादनेऽप्यनुगत-प्रतीतिरुपपादयितुं न शक्यत इत्यर्थः । घटपटौ न स्त इत्यत्र तु घटत्व-पटत्वान्यतरावच्छिन्न-प्रतियोगिताकाभावत्वमनुगतानतिप्रसक्तं विषय इत्यापाततो (ग) वक्तुं शक्यम् अत्र तदपि न सम्भवतीति क्लृप्तमिदमुक्तम् । वस्तुतस्तु तत्राप्यन्यतरत्वानुगमेऽपीत्यादिना दूषणमुक्तमेवेति भावः ।

अत्रेदं बोध्यम् । घटपटौ न स्त इत्यत्र द्वित्वसामान्यं न प्रति-

(१) कुण्डाभाव इति ग । (२) एकैकेत्यनेनेति ग ।

(क) बदरादि-साधारणद्वित्वस्यातिप्रसक्तत्वे अवच्छेदकत्वासम्भवेन तदवच्छिन्न कुण्डाद्यभाव-प्रतियोगिताया बदरादावसत्त्वं चोक्तार्थत्वादिति भावः ।

(ख) तत्पदेन घटान्तरवतीत्यत्र तद्घटान्तरं निर्दिष्टं तस्य परामर्शः ।

(ग) वस्तुतस्त्वित्यादिना वक्ष्यमाणदूषणादाह आपातत इति ।

योगितावच्छेदकं, यत्-किञ्चिद्द्वयवति घट-पटौ न स्त इति प्रत्ययात् । नापि द्वित्व-विशेषः (क), तत्तद्द्वित्वानामननुगमात् (ख) तत्तद्द्वित्वत्वेनानुपस्थितेः (ग) (१) न घटपट-वृत्ति-द्वित्वं, द्वित्वस्य घटादि-वृत्तित्वानुपस्थितावपि तथा प्रत्ययात् । ( नापि घटत्वं पटत्वं वा, एकैक-घटपटवति तथा प्रत्ययात् ) (२) । न घटत्वं द्वित्वञ्च (३) घटादिमत्यपि तथा प्रत्ययात् (घ) । किन्तु द्वित्वं तद्धर्म्मितावच्छेदकीभूतं (ङ) घटत्वं पटत्वञ्च तथा, प्रतियोगितावच्छेदकत्वञ्च (च) व्यासज्यवृत्ति, प्रतियोगितावच्छेदकावच्छिन्नञ्च (छ) घटपटोभयमिति (ज) न कोऽपि दोषः (झ) । घटौ न स्त इत्यत्र

(१) अनुपस्थितेश्चेति ग ।

(२) ( ) एतच्चिह्नितः पाठो नास्ति घ पुस्तके ।

(३) द्वित्वञ्चेति नास्ति घ ।

---

(क) घट-पट-निष्ठ-द्वित्वमित्यर्थः ।

(ख) तत्तत्कालीन तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानामानन्त्यादिति भावः ।

(ग) तत्तद्द्वित्वत्वेनावच्छेदकत्वे नाननुगम इत्यत आह "तत्त"दित्यादि ।

(घ) घटपटौ न स्त इत्याकारक-यथार्थप्रत्ययादित्यर्थः ।

(ङ) द्वित्वाश्रयांशे विशेषणीभूतमित्यर्थः ।

(च) तथात्वावच्छेदकत्वे केवल-घटादिमति तादृश-प्रतीतिर्न स्यादत आह "प्रतियोगितावच्छेदकत्वञ्चे"त्यादि ।

(छ) तादृश-समुदायस्य विशिष्ट-घटत्व-पटत्व-रूप-धर्म्म-द्वय-घटिततया तदवच्छिन्नाप्रसिद्धिरत आह "प्रतियोगितावच्छेदकावच्छिन्नञ्चे"ति ।

(ज) द्वित्वविशेषणतया अवच्छेदकता-पर्य्याप्त्यधिकरणं नदिति, एवञ्च घटत्व-पटत्वयोर्विशिष्टत्वेऽपि द्वित्वधर्म्मि-विशेषणतया तयोरुभय पर्य्याप्तिकत्वेन द्वित्वधर्म्मिणो घटत्वपटत्वावच्छिन्नत्वादिति भावः ।

(झ) एतेन तत्र प्रतियोगित्वाधिकरणे अवच्छेदकता-पर्य्याप्त्यधिकरणत्वाद्दो-

च्छिन्नं पर्य्याप्ति-सम्बन्धेन घटत्वञ्च तद्धर्म्मितावच्छेदकत्वेनावच्छेदकं, धर्म्मितावच्छेदकत्वन्तु अन्यून-वृत्तित्वेन तेन एक-घटवत्यपि पटमादाय द्वित्ववद्घट-सत्त्वेऽपि घटौ न स्त इति प्रतीतेर्नानुपपत्ति-रित्येवमन्यत्रापि यथानुभवमूह्यम् ।

ननूभयस्य प्रतियोगित्वेऽपि प्रत्येकस्य प्रतियोगित्वात् कथं समाधानमत आह "उभयत्वमेवे"ति । नन्ववच्छेदकाघटित-लक्षणे तद्दोष-तादवस्थ्यमत आह "अन्यूयमाणे"ति अन्यूयमाणोऽव-च्छेदकत्वांशो यत्र लक्षणे तत्रेत्यर्थः ।

---

तत्त्वचिन्तामणिः ।

अथ वा अनौपाधिकत्वं व्याप्तिः । तच्च यावत्-स्व-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकाव-च्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभाव-समानाधिकरणं यत् तेन समं सामानाधिकरण्यम् । न ह्येवं सोपाधिः । तत्र साधन-समानाधिकरणात्यन्ताभाव-प्रतियोगिन आर्द्रेन्धनवत्त्वादेरुपाधेर्योऽत्यन्ताभावस्तेन समं साध्यस्य धूमादेः सामानाधिकरण्याभावात्, उपाधिः साध्य-

---

र्थंधिकरणधर्म्मीर्यच्छन्नाभावाङ्गीकारपक्षे कथं प्रतियोगितावच्छेदकत्वमिति विचा-रणीय मित्यपि केचित्पिहूपणोद्भावनं परास्तं । केचित्तु प्रतियोगितावच्छेदकावच्छि-न्नत्वानुयोगित्वस्थलेऽपि प्रतियोगितावच्छेदकतावच्छेदकतावच्छेदकताक-विषयतावच्छि-न्ना पुष्टेऽपि घटपटोभयवद्भिन्नावाचारिकाया विरोधित्वमपीक्षामिति न कोऽपि दोष इत्याहुः ।

व्यापकत्वात् । एतदेव यावत्-स्वव्यभिचारि-व्यभिचारि-साध्य-सामानाधिकरण्यमनौपाधिकत्वं गीयते ।

---

दीधितिः ।

"तच्चे"ति । स्वं साधनत्वाभिमतम् । तथा च साधन-समानाधिकरणात्यन्ताभाव--प्रतियोगितावच्छेदका यावन्तो धर्म्मा यद्धर्म्मावच्छिन्न-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकास्तद्धर्म्मावलीढ़--सामानाधिकरण्यमित्यर्थः । एतेन सर्व्वत्र तादृशैर्यावद्भिरवच्छिन्नस्य तादृशावच्छिन्न-यावत्-प्रतियोगिकस्य चातिप्रसक्तात् यावत्त्वाद्यवच्छिन्न-प्रतियोगिताकादतिरिक्तस्याभावस्याप्रसिद्धिः, तादृशावच्छिन्न-प्रतियोगिताकानां यावदभावानामधिकरणस्य प्रायशस्तथा, रूपादि-साध्यक-पृथिवीत्वादावव्याप्तिश्च, क्वापि रूपादि-व्यक्तौ तादृश-यावदभाव-सामानाधिकरण्यासम्भवादिति प्रत्युक्तम् ।

---

दीधिति-प्रकाशः ।

"तथा च साधने"ति । अत्र च प्रतियोगित्वयोरैक-सम्बन्धावच्छिन्नत्वं (क) विशेषणताविशेषावच्छिन्नत्वं वा वक्तव्यम् । तेन धूमवान् वह्नेरित्यादौ वह्नि-समानाधिकरणाभाव-प्रतियोगितावच्छेद-

---

(क) साधनादाव विशेषणतेत्यादि ।

कत्वा(१)-योगोलक-भेदत्वादेर्विषयित्वादि--सम्बन्धान्तरावच्छिन्न-धूमवन्निष्ठाभाव-प्रतियोगितावच्छेदकत्वेऽपि न क्षतिः।

न च विषयितयायोगोलकभेदत्वत्वज्ञानस्याभावीय-विशेषणतया योऽभावस्तस्य धूम-समानाधिकरणत्वादेक-सम्बन्धावच्छिन्नत्वञ्च प्रतियोगितयोर्विवक्षणेऽपि (२) न निस्तार इति वाच्यं तादृश-ज्ञानस्याभावीय-विशेषणता-रूप-व्यधिकरण--सम्बन्धावच्छिन्नाभावेऽयोगोलक-भेदत्वस्य गुरुतया तद्घटक-लघु-यत्किञ्चित्पदार्थस्यैव (क) विषयितया प्रतियोगितावच्छेदकत्वात्। गुरुधर्मस्यावच्छेदकत्वे प्रतियोगितावच्छेदकतयोरपि (३) एकसम्बन्धावच्छिन्नत्वं वा विवक्षणीयमिति (४) ध्येयम्।

"यद्धर्मावच्छिन्ने"ति यत्साध्यतावच्छेदकावच्छिन्नेत्यर्थः। तेन गुणकर्मान्यत्वविशिष्ट-सत्तावान् जातेरित्यादौ जाति-समानाधिकरणाभाव-प्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेः सत्ता-समानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वेऽपि न क्षतिः। यथाश्रुतेऽनुपपत्तिं दर्शयति "एतेने"ति। यावत्त्वम् अवच्छेदके तदवच्छिन्ने अभावे वा विशेषणं, तत्र क्रमेण दूषणमाह "सर्व्वत्रे"त्यादि"अप्रसिद्धि"रित्यग्रिमेणान्वितम् (५)। "अतिप्रसञ्जका"दिति, वह्नि-

---

(१) अवच्छेदका इति ग। (२) विशेषणेऽपीति न पुस्तके।

(३) अवच्छेदकतापि इति न पुस्तके।

(४) एकेन सम्बन्धेन विवक्षणीयेति इति न पुस्तके।

(५) अन्वेतीति न पुस्तके।

---

(क) भेदत्वादेरित्यर्थः।

समानाधिकरणाभाव-( प्रतियोगितावच्छेदकावच्छिन्नानां यावत्त्वावच्छिन्नाभावो ) (१) धूमाधिकरणेऽपीत्यतिव्याप्त्या यावत्त्वाद्यनवच्छिन्न-प्रतियोगिताकत्वं विशेषणं देयं (२) तथा चाप्रसिद्धिर्यावत्त्वाद्यनवच्छिन्न-प्रतियोगिताकस्य यावतामभावस्याप्रसिद्धेरित्यर्थः । आदिना यावत्त्वोभयत्वादि-परिग्रहः । "तथा" चाप्रसिद्धिः । द्रव्यं पृथिवीत्वादित्यादौ तादृशानां घटत्व पटत्वाद्यभावानाम् एकाधिकरणाप्रसिद्धेरित्यर्थः । एतद्रूपवानेतद्रसादित्यादौ चाभावस्य भावभिन्नत्व-विवक्षणे वक्ष्यमाण-दिशा प्रसिद्धिसम्भवादुक्तं "प्रायश" इति । यावतां तादृशाभावानां प्रत्येक-निरूपित-सामानाधिकरण्य-विवक्षणेऽप्रसिद्धिर्नास्तीत्यत आह "रूपादौ"ति । "क्वापी"ति घटरूपे तादृश-यावन्मध्य-निविष्टस्य घटत्वाभावस्य पटरूपे च पटत्वाभावस्यासामानाधिकरण्यादिति भावः (३) । वह्निमान् धूमादित्यादौ तत्तद्धूम-तत्तद्वह्न्योर्व्याप्तिरित्युक्तौ प्रतीकार-सम्भवात्तदोक्तम् ।

---

दीधितिः ।

सर्व्वत्र सोपाधावेक-व्यक्तिकस्य सम्भवतोऽप्युपाधे-

---

(१) ( ) एतच्चिह्नितस्थले प्रतियोगितावच्छेदकावच्छिन्ना यावन्तः प्रतियोगिकयावत्त्वावच्छिन्नाभाव इति ग पुस्तके ।

(२) देयमिति नास्ति ग पुस्तके ।

(३) यावत्त्व सामानाधिकरण्याभावादित्यर्थं इति ग पुस्तके ।

धर्म्मान्तर-विशिष्टत्वादिना अभावो भवत्येव साध्य-समानाधिकरण इत्यतोऽवच्छेदकानुसरणम् (क)।

दीधिति-प्रकाशः।

ननु साधनसमानाधिकरणाभाव-प्रतियोगिनो यावन्तो यद्धर्म्मावच्छिन्न-समानाधिकरणाभाव-प्रतियोगिन इत्येवोच्यतां कृत-मवच्छेदक-गर्भतया, धूमवान् वह्नेरित्यादौ च तादृशार्द्रेन्धनादीनां चालनी-न्यायेन धूमवन्निष्ठाभाव-प्रतियोगित्वेऽपि अयोगोलक भेदस्य धूमवत्यभावाभावादत आह "सर्व्वत्रे"ति। "एकव्यक्तिकस्य" व्यभिचार-निरूपकाधिकरणान्यत्वादेः, "धर्म्मान्तरे"ति तत्तदधि-करणवृत्तित्व-पूर्व्वक्षणवृत्तित्वादीत्यर्थः। विशिष्टस्यातिरिक्तत्वे त्वाह "आदी"ति आदिना द्वित्व-त्रित्वादि-परिग्रहः।

दीधितिः।

साधनसमानाधिकरणात्यन्ताभाव-प्रतियोगिताव-च्छेदकावच्छिन्न-प्रतियोगिताका यावन्तोऽभावा यद्धर्म्मा-

(क) अथैवमपि हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकाः साध्य-समानाधिकरणाभावप्रतियोगितावच्छेदिका इत्येव लभ्यम् किन्तु भवतामवच्छेदकानुसरणेनेति चेन्न तथा सति विशिष्टसत्तानिष्ठप्रतियोगिताया साध्यसमानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वाभावेन सत्तावान् जातेरित्यादावव्याप्तेरिति। ननु हेतु-समानाधिकरणाभावप्रतियोगितासु यावतीषु तत्साध्यसमानाधिकरणाभाव-प्रति-योगितात्वं तत्साध्यसमानाधिकरण्यं व्याप्तिरित्युक्तौ अर्थमेवावच्छेदकानुसरणमिति चेन्न अयोगोलकवृत्ते एतादृशव्यापकताया आनुपूर्व्येण वैयर्थ्याभावात्। तन्नहीनेनै-तादृशसम्बन्धानुसरणोक्तत्वाद्दिति ध्येयम्।

वच्छिन्न-समानाधिकरणात्तद्धर्मावलीढ़-सामानाधिकरण्यमित्यर्थः ।

दीधिति-प्रकाशः ।

(क) मूलाक्षरानुसारेणाह "साधने"त्यादि । (ख) इत्यञ्च मूले "तत्प्रतियोगिकात्यन्ताभाव-समानाधिकरण"मित्यस्य तत्प्रतियोगिकात्यन्ताभावः समानाधिकरणो यस्य साध्यस्येति बहुव्रीहिर्बोध्यः । रूपवान् पृथिवीत्वादित्यत्र यावत्सु तादृशाभावेषु रूपत्वावच्छिन्न-सामानाधिकरण्यं वर्त्तत एवेति नाव्याप्तिरिति भावः ।

दीधितिः ।

अभावमात्र भावभिन्नो ग्राह्यस्तेन इदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्व-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदक-रूपसामान्याभावत्वावच्छिन्न-प्रतियोगिताकाभावानां सकल-रूपाणां जलत्व-सामानाधिकरण्य-विरहेऽपि नाव्याप्तिः । घटध्वंसो ध्वंसत्वादित्यादौ च घटध्वंसत्वादेस्तत्प्रकारक-प्रमाविशेष्यत्वादेर्वा (१) भावाभावद्वितयातिरिक्तोऽभावस्तादृशो न

(१) विषयत्वादेर्वेति हस्तलिखित-पुस्तके ।

(क) साधने यथाश्रुत मूलग्रन्थ-विशेष्यविशेषणभाव-परित्यागादेतत्पक्षे च तद्-परित्यागादिति भावः ।

(ख) एतत्पक्षेपि यावदभावेषु साध्यसामानाधिकरण्यं कथं मूलग्रन्थगत आह "इत्यत्रे"ति ।

घटध्वंसत्वादि-समानाधिकरण इति नातिव्याप्तिरि-त्यपि वदन्ति ।

---

दीधिति-प्रकाशः ।

"तेने"त्यादि। वह्निमान् धूमात् पृथिवी गन्धात् (१) इत्यत्रो-त्पत्तिकालावच्छेदेन (२) (क) रूप-सामान्याभावस्य हेत्वधिकरणे सत्त्वात् प्रतियोगि-व्यधिकरणहेतुसमानाधिकरणाभाव-प्रतियोगि-तावच्छेदकत्वं न सम्भवतीति तदोक्तम् (ख)। समवेत सामान्या-भावस्याभाव:(ग) सत्त्वैव रूपवदन्यासमवेतत्वावच्छिन्नस्याभावाभावं रूपवन्मात्र-समवेतं जात्यादिकमादायाव्याप्त्यभिधाने तु प्रयास-गौरवमिति तदोक्तम्। भावभिन्नत्व-विवक्षणेऽपि रूपध्वंस-प्रागभाव-योरपि रूप-सामान्याभावाभावात्मकतया स एव दोष इत्यतो "धत्यन्ते"ति। न च तथापि हेतुवत्त्व-समानाधिकरणाभाव-प्रतियोगितावच्छेदकं जलान्यत्व--विशिष्ट--सत्तात्यन्ताभाव--तेजो--ऽन्यत्व-विशिष्ट-सत्तात्यन्ताभावान्यतरत्वावच्छिन्नाभावत्वं तदवच्छि-

---

(१) गन्धवत्त्वादिति न।   (२) उत्पत्तिकाले इति न।

---

(क) प्रकृतस्थले इत्यपि बोध्यं तेन पृथिवी गन्धादित्यत्र घटत्वाभावेऽपि रूप-सामान्याभावाभावस्य न प्रतियोगि-वैयधिकरण्यमिति भावः।

(ख) तथाच हेतुसमानाधिकरणाभावे प्रतियोगिव्यधिकरणत्वविशेषणेनापि अव्याप्तिविरोध-तादवस्थ्य इति तत्परित्याग इति भावः।

(ग) समवेतसामान्याभावस्योत्पत्तिकाले हेत्वधिकरणेऽसत्त्वेन तदभावमादाय गन्धादिहेतावव्याप्तेः सम्भवादाह "समवेते"त्यादि तथाच रूपादि-साध्याभावे साध्यसामानाधिकरण्याभावेनेति भावः।

त्वाभावस्य तेजोऽन्यत्व-विशिष्ट-सत्तात्यन्ताभावस्य जलत्व सामाना-
धिकरण्याभावादव्याप्तिरिति वाच्यं जलतेजोऽन्यतरान्यत्व-विशिष्ट-
सत्ताया एव तादृशान्यतरत्वावच्छिन्नाभावतया (१) जलतेजोऽन्य-
तरान्यत्व-विशिष्ट-सत्ताभावस्यैव तदवच्छिन्नाभावत्वात्, तस्य जल-
त्वसामानाधिकरण्यसत्त्वेनाव्याप्तेरनवकाशात् । तादृशान्यतरत्वाव-
च्छिन्नाभावस्याभाव रूपत्वेऽपि तदवच्छिन्नाभावत्वस्यैकविशेषोक्त-
विशिष्टाभावे कल्पयितुमुचितत्वात् । अत्र (क) च प्रथमात्यन्ताभावे
भाव-भिन्नत्व-विवक्षणेऽपि हेतुसमानाधिकरणात्यन्ताभाव-प्रतियो-
गितावच्छेदकं रूपध्वंसत्वं तत्तद्रूपध्वंसत्वं (ख) वा तदवच्छिन्न-प्रति-
योगिताकाभावस्य तद्रूपात्मकस्य पृथिवीरूपादेः जलत्व-सामाना-
धिकरण्याभावात् तथैवाव्याप्तिरतो द्वितीयात्यन्ताभावे (२) भाव-
भिन्नत्वस्यावश्यकत्वेन प्रथमात्यन्ताभावे तद्धेयं (३) । हेतुसमाना-
धिकरणघटा(४)त्यन्ताभावात्मक- भेद-प्रतियोगितावच्छेदक-पटा-
त्यन्ताभावत्वावच्छिन्नप्रतियोगिताकभेदात्मक-जलत्वात्यन्ताभावस्य
यावदन्तर्निविष्टस्य-जलत्वासमानाधिकरणतया तथैव दोष इत्यतः

(१) तादृशाभावतयैवेति ग ।
(२) तद्रूपादेर्वेति ग ।
(३) द्वितीयाभावे इति ग ।
(४) घटेति नास्ति ग ।

(क) प्रथमात्यन्ताभावे तद्भिन्नत्वेनानुमाऽव्याप्तिवारणसम्भवे तत्रैव तत् कुतो नोपात्तमत आह "अत्रे"त्यादि ।

(ख) ननु जले तादात्म्य सम्बन्धेन रूप-प्रागभाव-प्रतियोगितावच्छेदकत्वादाह "तत्तद्रूपध्वंसत्व"मिति ।

साधन-समानाधिकरणात्यन्ताभावत्व-निरूपक-प्रतियोगितावच्छेदकत्वलाभाय परं प्रथमात्यन्ताभावपदम् ।

न च नित्यज्ञानवान् नित्येच्छावत्त्वादित्यत्र साधनसमानाधिकरण-समवायावच्छिन्न-घटात्यन्ताभाव-प्रतियोगितावच्छेदकं घटत्वं विषयितया तदवच्छिन्नस्य ज्ञानादेः समवायेनाभावस्य नित्यज्ञानासमानाधिकरणत्वादव्याप्तिरिति वाच्यम् । प्रतियोगितावच्छेदकतयोरप्येक सम्बन्धावच्छिन्नत्वस्य विवक्षणीयत्वात्, तथा च साधनसमानाधिकरणाभावीय–यत्सम्बन्धावच्छिन्न–प्रतियोगिताया येन सम्बन्धेन यदवच्छेदकं तेन सम्बन्धेन तत्सम्बन्धावच्छिन्न-तदवच्छिन्न-प्रतियोगिताका यावन्तोऽभावा यद्धर्मावच्छिन्न-समानाधिकरणास्तद्धर्मावच्छिन्न-सामानाधिकरण्यमिति निष्कर्षः ।

केचित्तु "अभावत्वात्र भावभिन्न" इति भावेन प्रतियोगिना भिन्नो व्यावृत्त इत्यर्थः । तथा च साधन-समानाधिकरणाभावीयाभाव-व्यावृत्त(१)प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताका यावन्तोऽभावा इति वाच्यम्, उक्तान्यतरत्वावच्छिन्नाभावो भावश्चेत् तत्प्रतियोगिताको लाघवात् एक एवाभावः स च जलत्व-समानाधिकरण एवेति नाव्याप्तिः । अभावश्चेत् भाव-वृत्ति-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगित्वेनैव (२) तदभावो वारित इत्याहुः (३) ।

(१) अभावीय भाव इत्यपीति ख ग पुस्तकद्वये ।
(२) प्रतियोगिताकत्वेनैवेति ग ।
(३) इत्याहुरित्यत्र इत्यर्थ इति घ ।

नन्वभाव-प्रतियोगिताको(१)ऽभावमात्र-वृत्ति-(क)धर्म-प्रतियोगिको वाऽभावाधिकरणकोऽभावः प्राचां मतेऽधिकरणात्मक एव तथा च घटध्वंसो ध्वंसत्वादित्यादावतिव्याप्तिः, तत्र पटध्वंसे घटध्वंसत्वं नास्तीति प्रतीति-विषयस्य घटध्वंसत्वाभावात्मक-पटध्वंसस्य घटध्वंसत्वासामानाधिकरण्यात्यन्ताभावत्वाभावादेव वारणात् पटात्यन्ताभावस्य च घटध्वंसत्वाभावात्मकस्य घटध्वंसत्व-समानाधिकरणत्वात् । न चाभाववृत्तेर्घटध्वंसत्वाभावस्याधिकरणात्मकत्वेऽपि (ख) भाव-वृत्तेर्घटध्वंसत्वाभावस्यातिरिक्तत्वात् तस्य च घटध्वंसत्वासमानाधिकरणत्वान्नातिव्याप्तिरिति वाच्यं घटध्वंसत्वाभावत्वेन क्लृप्तैः पटात्यन्ताभावैर्भावेऽपि तादृश-प्रतीत्युपपत्तौ तत्रापि (ग) तस्यानतिरिक्तत्वात्, एवं घटध्वंस-भूतलान्यतरवृत्तित्वा(घ)वच्छिन्नाभावोऽप्यभाववृत्ति-प्रतियोगिताकतयाऽभावाधिकरणकतया चाधिकरणात्मक एवेति तमादाय नातिव्याप्ति-वारणमत आह "घटध्वंस" इति । प्रमाविषयत्वीय-विशेषणता-विशेषाभावस्य विवक्षणे घटध्वंसत्वाभावमादाय नातिव्याप्तिवारणमत आह "तत्प्रकारके"ति, "भावाभाववृत्ति"रित्युपलक्षणं, घटध्वंस-भिन्नं ध्वंसत्वादित्यादाव-

(१) प्रतियोगिक इति ख ग ।

(क) ध्वंसत्वाभावस्योपाधित्वे घटध्वंसत्वाभावस्य भावप्रतियोगिकत्वविरहात आह "अभावभाववृत्ती"ति ।

(ख) अधिकरणभेदेनाभावभेद इत्यभिप्रायेणाह भावेत्यादि ।

(ग) भावेऽपीत्यर्थः ।

(घ) अत्र वृत्तित्वं ध्वंसत्वीयविशेषणताख्यसंबंधेनान्यतरवृत्त्यन्वयेन, तेन [illegible]-[illegible]नान्यतरवृत्तित्वावच्छिन्नाभावानभिधानेऽपि न क्षतिः ।

भावमात्र-वृत्तिरपि घटध्वंस-भिन्नत्व-प्रकारक-प्रमा-विषयत्वाभावो-ऽतिरिक्तः स्वीकार्य्यः (क) एतदस्वरसेनैव (ख) वा "वदन्ती"ति।

केचित्तु जलान्यत्व-विशिष्ट-सत्ताभावादिना (ग) पूर्व्वोक्तदोषोद्धाराय स्वसमानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताकाभाववत्त्व-व्यापक-साध्यतावच्छेदकावच्छिन्न-साध्य-समानाधिकरण-वृत्तित्ववत्त्वं समुदित-लक्षणार्थः। ननु घटध्वंसो ध्वंसत्वादित्यत्र ध्वंसत्व-समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकं घटध्वंसत्वत्वं तदवच्छिन्न-प्रतियोगिताकाभाववत्त्वञ्च(घ) परम्परासम्बन्धं (१) घटत्वमनुगतं घटध्वंसत्वाभावाधिकरण-घटध्वंसत्वाभावात्मक-पटाभावादि-निष्ठम्, एवं घटध्वंसत्व-प्रकारक-प्रमा-विषयत्वाभाववत्त्वमपि अभावाधिकरणकाभाव-वृत्तितया नाधिकाभाव-वृत्ति, तस्य च घटध्वंसत्व समानाधिकरण-पटाभाव-वृत्तित्वाविवक्षा-रूप-सत्त्वेनातिप्रसङ्ग इत्यत आह "घटध्वंसत्व" इति व्याचक्षुः। तन्तुच्छम् अभावे भाव-भिन्नत्व-विवक्षण-वैयर्थ्यात्।

(१) परम्परासम्बन्धेनेति ख ग।

(क) अन्यथा घटध्वंसात्मकस्य तस्यात्यन्ताभावत्वाभावेनाव्याप्यस्य साध्यत्वाभावाधिकरणत्वेनातिव्याप्तेरिति भावः।

(ख) अभावमात्रवृत्त्यभावस्यातिरिक्तत्वेऽपि विशाम इत्यत आह "एतदस्वरसेनैवे"त्यादि, तद्भेदसाध्यकातिव्याप्तिदोषेणैवेत्यर्थः।

(ग) जलान्यत्वविशिष्टसत्ताभाव-तेजोऽन्यत्वविशिष्टसत्ताभावान्यतराभावाभावेत्यर्थः।

(घ) परम्परासम्बन्धेन साध्यप्रतियोगिकत्वविशिष्टध्वंसत्वाभाववत्ताद्यात्म्य-रूप इत्यर्थः।

दीधितिः ।

"यावदि"ति, (१) स्वं व्यभिचारि येषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्य-मित्यर्थः ।

---

दीधिति-प्रकाशः ।

तत्पुरुषपक्षे धूम-व्यभिचारि-द्रव्यत्व-वह्न्यादि-व्यभिचारित्वस्य वह्न्यादावभावादसङ्गति(क)रतो बहुव्रीहिं व्याचष्टे "स्व"मित्यादिना । यावत्स्वस्य चरम-व्यभिचारि-विशेषणत्वे एकव्यक्तिसाध्यके वह्निमान् (ख) धूमादित्यादौ च यावत्साध्याधिकरणाप्रसिद्ध्याऽव्याप्तिरतिव्याप्तिश्च सत्त्व-घटत्वोभयवान् सत्त्वादित्यादावतः "तेषां यावता"मिति । एवञ्च व्यभिचारि-पदेन यावत्पदस्य कर्म्मधारयानन्तरं षष्ठीतत्पुरुष इति भावः ।

---

तत्त्वचिन्तामणिः ।

यद्वा यावद्-यत्समानाधिकरणात्यन्ताभावाप्रतियोगि-प्रतियोगिकात्यन्ताभावासमानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वं, सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन समं

---

(१) ४८१ पृः मूले द्रष्टव्यम् ।

---

(क) अव्याप्तिरूपासङ्गतिरित्यर्थः ।

(ख) यावत्साध्यैकवत्त्वे तात्पर्य्यं वह्निमानित्यादि ।

हेतोः सामानाधिकरण्यम्, उपाधेः साधनाव्यापकत्वात् ।

दीधितिः ।

"यावदि" । यत्पदं साध्यत्वाभिमतपरम् । सोपाधि-वारणाय "यावदि"ति लुप्त-सप्तमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् । तथा च साध्य-व्यापकतावच्छेदकावच्छिन्न-प्रतियोगिताकात्यन्ताभावत्व--व्यापकत्व-सामानाधिकरण्य-सामान्याभाववत्त्वमर्थः । केवलान्वयिस्थले त्वाकाशादिरेव तथाविधोऽभावः प्रसिद्ध इति सम्प्रदायः ।

दीधिति-प्रकाशः ।

यत्पदस्य साधनपरत्वेऽतिव्याप्तिरतो व्याचष्टे "साध्यत्वे"ति । "लुप्तसप्तमीकस्ये"ति, तथा च तादृशाभावेऽसामानाधिकरण्यमिति विग्रहः । तेन केवलान्वयिनि तादृशाभावस्याकाशादे (१) सामानाधिकरण्याप्रसिद्धावपि न क्षतिः । "द्वितीयात्यन्ताभावस्य" द्वितीयात्यन्ताभावपदस्य, "विशेषणं" विशेषण-पदम् । प्रथमात्यन्ताभाव-विशेषणत्वे यावदत्यन्ताभाव-प्रतियोगिनोऽप्रसिद्ध्याऽसम्भवादिति । यावत्त्वस्य व्यापकत्वादन्यस्य दुर्वचत्वादाह "तथा-चे"ति । धूमवान् वह्नेरित्यादौ द्रव्यत्वात्यन्ताभावे वह्न्यादि-सामानाधिकरण्य--सामान्याभाववत्त्वादतिव्याप्तिरतो व्यापकत्व-

पर्य्यन्तानुधावनम् । तथैव रासभादि-निष्ठ-वह्नि-सामानाधिकरण्यात्यन्ताभावस्य निरुक्ताभावत्व-व्यापकत्वादतिव्याप्तिरतः "सामान्ये"ति । न च द्रव्यं गुणादित्यत्र साध्य-व्यापकतावच्छेदकं द्रव्यान्यत्व-विशिष्ट-सत्ताभावत्वं तदवच्छिन्न-प्रतियोगिताके सत्तारूपाभावे गुण-समानाधिकरण्य-सत्त्वादव्याप्तिरिति वाच्यं तादृशाभावत्वत्व-व्यापक-हेत्वधिकरणाधेयतावच्छेदकत्वाभाववत्त्वस्य विवक्षितत्वात् । वस्तुतस्त्वभावे प्रतियोगि-वैयधिकरण्यस्यानुपादेयत्वेन द्रव्यान्यत्व-विशिष्ट-सत्ताभावत्वं द्रव्यवृत्तिसत्तारूपाभाव-प्रतियोगितावच्छेदकतया न द्रव्यत्व-व्यापकतावच्छेदकमिति ध्येयम् ।

अत्र च साध्य-व्यापकता अभावीय-विशेषणता-विशेषेण ग्राह्या । सम्बन्ध-भेदेन व्यापकत्वस्य निवेशे तादृशाभावत्वस्यापि नानात्वादसङ्गत्यापत्तेः, न तु प्रमाविषयत्वीय-स्वरूप-सम्बन्धेन तथा सति केवलान्वयिनि तादृशाभावाप्रसिद्धिः (क) स्यादिति भावः ।

"तथाविधः" केवलान्वयि-साध्य-व्यापकतावच्छेदकीभूताकाशाभावत्वावच्छिन्न-प्रतियोगिताकः । आकाशाभावस्य स्व-मतेऽभावाभावात् "सम्प्रदाय" इति (ख) ।

दीधितिः ।

केचित्तु तादृश-यावदभाव-शून्यत्वं यदधिकरण-

---

(क) आकाशाभावादेर्केन सम्बन्धेनाव्यापकतया प्रमेयत्वादेरेव तथात्वेन तद्भावाप्रसिद्धिरिति भावः ।

(ख) अत्र साध्यव्यापकत्वे प्रतियोगिमत्त्वेषु केवलसामानाधिकरण्याभाव रूपत्वे न दोष इति इति केचन् ।

ताया व्यापकं तत्त्वमर्थं। न च तादृश-प्रतियोगितानवच्छेदकावन्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थ-लाभादेव सामञ्जस्येऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यं यावतां तादृशाभिन्नानादीनाम् ऐकाधिकरण्यस्याप्रसिद्धेः। न चावच्छेदकांशमपहायाप्रतियोग्येव यावत्त्वेन विशिष्यतां साध्य-व्यापकस्यापि रूपान्तरेण साध्य-समानाधिकरणात्यन्ताभाव-प्रतियोगित्वस्योपदर्शितत्वादित्याहुः।

(साध्य-समानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदके यावति यत्समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकत्वं नास्ति तत्त्वमर्थं इति तु नव्याः) (१)।

दीधिति-प्रकाशः।

"तादृशे"ति, साध्य-व्यापकतावच्छेदक-रूपावच्छिन्न-प्रतियोगिताका यावन्तोऽभावाः प्रत्येकं तच्छून्यत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थः। यावत्त्वावच्छिन्न-शून्यत्व विवक्षणे धूमवान् वह्नेरित्यादावतिव्याप्तिः, द्रव्यत्वाभाव-घटित-तादृश-यावदभाव-शून्यत्वस्य वह्न्यधिकरणता-व्यापकत्वादिति भावः। यथाश्रुतविवेश

(१) ( ) एतच्चिह्नितपाठो नास्ति हस्तलिखितपुस्तके। परन्तु सोसाइटीमुद्रितपुस्तक एव वर्त्तते।

वैयर्थ्याभावात् "अनन्तो"ति । "तादृशां" तादृशाभाव-प्रतियोगि-
तानवच्छेदकावच्छिन्नानाम्(१)। "अप्रसिद्धे"रिति तथा चासम्भवः ।
"अप्रतियोग्येव" साध्यवन्निष्ठाभावाप्रतियोग्येव । इन्धनादीनान्तु
तादृशाभाव-प्रतियोगित्वात्तन्निरासः । इत्यञ्च तादृशाभावाप्रति-
योगि-सत्ताद्येव तदधिकरणतायां धूमाधिकरणता-व्यापकत्वाभा-
सम्भवः । धूमवान् वह्नेरित्यादौ तु अयोगोलक-भेदस्यापि तादृशा-
भावाप्रतियोगित्वात् तदधिकरणतायां वह्न्यधिकरणत्वाव्यापक-
त्वान्नातिव्याप्तिरिति भावः । "रूपान्तरेण" इदन्त्व-किञ्चिदधिक-
रण-वृत्तित्व-विशिष्टत्वादिना । तथा च तादृशाभावाप्रतियोग्य-
प्रसिद्ध्या लक्षणासम्भव इति भावः । अत्र कल्पेऽपि केवलान्वयि-
न्याकाशादिरेव तादृशोऽभाव इति ध्येयम् ।

अत्र तादृश-प्रतियोगितानवच्छेदकं यावद् यद्व्यापकताव-
च्छेदकं तत्त्वमित्यत एव सामान्येऽभावद्वयोपादानमनतिप्रयो-
जनकमित्यस्वरसः केचिदित्यनेन सूचितः ।

तत्त्वचिन्तामणिः ।

यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य
सा व्याप्तिः । तथा हि धूमस्य वह्नि-सम्बन्धित्वे धूमत्व-
मवच्छेदकं धूममात्रस्य वह्नि-सम्बन्धित्वात् । वह्नेस्तु
धूम-सम्बन्धे न वह्नित्वमवच्छेदकं धूमासम्बन्धिनि
गतत्वात्, न ह्यतिप्रसक्तमवच्छेदकं संयोगादौ तथात्वा-

(१) अनवच्छेदकतापीति ग ।

दर्शनात्, किन्तु वह्नौ आर्द्रेन्धन-प्रभव-वह्नित्वं धूम-सम्बन्धितावच्छेदकं तादृशश्च व्याप्यमेव। अथ वा यत्-सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत् तस्य व्याप्यं, वह्नि-सामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते, सोपाधौ तूपाधिना।

इति श्रीमद्-गङ्गेशोपाध्याय-विरचिते तत्त्वचिन्तामणौ अनुमान-खण्डे विशेष-व्याप्ति-प्रकरणं समाप्तम्।

---

दीधितिः।

अवच्छिन्नं सामानाधिकरण्यं सामानाधिकरण्यावच्छेदक-रूपं वा व्याप्तिः, इत्यञ्च धूमत्व-द्रव्यत्वत्वादेर्व्याप्यतावच्छेदकत्वं दण्डत्वादेर्नियत-पूर्ववर्त्तितावच्छेदक-धर्म्मात्मक-कारणतावच्छेदकत्ववदभेदेऽप्युपस्थितानुपस्थित-भेदाद्वा समर्थनीयम्। तथाद्यमभिप्रेत्याह "यत्सम्बन्धिते"ति। "सा" सम्बन्धिता सामानाधिकरण्य-रूपा अनकतादि-व्यावृत्ता। अत्र च विशिष्ट-सत्त्वात्वाद्यवच्छिन्न-गुणादि-सामानाधिकरण्याधिकरण-

सत्त्वादेः वाग्मित्वादौ परामर्शाद्वाद्यनुमित्यापत्तेः, (१) साध्य–सामानाधिकरण्य–विशिष्ट-हेतुमत्ता–परामर्शस्तु पक्षे साध्य-निर्णयात् प्रागसम्भवीत्यनुशयेन द्वितीयम् । अथमालोको धूमो वेत्यादौ विशिष्य-सन्देहेऽपि सामान्यतोऽवच्छेदक-रूपवत्त्व-निर्णयः सम्भवत्येवेति हृदयम् ।

---

## दीधिति-प्रकाशः ।

लक्षणद्वयस्य (क) पौनरुक्त्यपरिहारायाह "अवच्छिन्न"मित्यादिना । "इत्यत्र" सामानाधिकरण्यावच्छेदक-धूमत्वादेर्व्याप्तित्वे च । संयोग-समवाय-भेदेनाह "धूमत्व-द्रव्यत्वत्वादे"रिति । नियतपूर्व्ववर्त्तित्वस्यारण्यस्थ-दण्डादावभावात् नियतपूर्व्ववर्त्तितावच्छेदक-दण्डत्वमेव कारणतेति भावः । ननु दृष्टान्तस्थलेऽप्यात्माश्रय(ख)-दोषात् कथमवच्छेदकत्वमतस्तत्तुल्यवत्समाधानमाह "उपहितेति । सामानाधिकरण्यावच्छेदकत्वोपहितं धूमत्वमवच्छेद्यधर्ममवच्छेदकमिति भावः(ग) । अधिकरणतायाः प्रवेशे तादात्म्येन व्याप्तसंग्रह इत्यतो "जनकत्वादौ"ति, आदिना प्रतियोगित्वादिसंग्रहः । तथा च सम्बन्धि-सम्बन्धित्वं निवेश्यं, न त्वधिकरणत्व-

---

(१) अनुमानापत्तिरिति पुस्तकान्तरे ।

---

(क) अवच्छिन्नेत्यादि-सामानाधिकरण्येत्यादि-ग्रन्थ-द्वयस्यार्थः ।

(ख) अवच्छेदकज्ञानस्यावच्छेद्यज्ञानापेक्षतया ज्ञप्तौ आत्माश्रय इति भावः ।

(ग) तथा च धूमविषयकसामानाधिकरण्य-विषयकं ज्ञानं विवक्षितमिति नात्माश्रय इति भावः ।

मिति भावः। "अत्र चे"ति गुणवत् गुणकर्म्मान्यत्वे सति सत्त्वा-दित्यादाविति भावः। विशिष्ट-सत्तात्वावच्छिन्नं यद्गुण-सामानाधिकरण्यं तदधिकरणीभूता या सत्ता तस्याः कर्म्मादावपि सत्त्वादिति भावः। "साध्ये"ति तथा च गुण-सामानाधिकरण्य-विशिष्टसत्ताधिकरण्यत्वं न कर्म्मादाविति नोक्त-दोष इति (१) भावः। "प्रागसम्भवो"ति, पर्व्वतो वह्निमान्नवेति संशय-दशायां वह्नि-सामानाधिकरण्य-विशिष्ट-द्रव्यत्ववान् पर्व्वत इत्यनिर्णयात्, प्रत्युतौचित्यावर्ज्जितस्य वह्नि-सामानाधिकरण्य-विशिष्ट-द्रव्यत्ववान्न वेति संशयस्यैव सम्भवात्। तद्धर्म्मिणि तद्धर्म्म-सामानाधिकरण्य-विशिष्ट-धर्म्मान्तरस्य प्रत्यक्ष-निर्णये तद्धर्म्मिणि तद्धर्म्म-निश्चय-सामग्र्यास्तन्निश्चयस्य (क) वा तद्धर्म्माभाव-ग्रहाभावस्य (ख) वा तद्धर्म्मा-भाव(ग)ग्राहक-सामग्र्यभावस्य वा हेतुत्वमनन्यगतिकतया (घ) कल्पनीयमिति भावः (२)। "अय"मिति, अयमालोको धूमो वेति सन्देहदशायां वह्नि-सामानाधिकरण्यावच्छेदक-धूमत्ववत्त्वान् पर्व्वत इत्यनिर्णयादिति भावः। "हृदय"मिति, (ङ) अवच्छेदकत्वं

(१) नोक्तदोष इतीति नास्ति ग।

(२) इत्याशय इति ग पुस्तके।

(क) लाघवादाह तद्विषयस्येति एवं सति तद्विषयोत्पत्तिकाले न तत्सामानाधिकरण्य-विशिष्टसत्तानिश्चयः, संशयविषयस्यैव तदुत्पत्त्यभ्युपगमादिति भावः।

(ख) निश्चयत्व-निवेशे गौरवादाह "तद्धर्म्माभावग्रहाभावस्ये"ति।

(ग) संशयोत्पत्तिकाले तादृशनिश्चयाग्रहाभावादाह "तद्धर्म्माभावे"ति।

(घ) "अनन्यगतिकतया" अनुभवानुरोधेनेत्यर्थः। तथाच विशेषदर्शनं विना बाध-संशय-कालीन-प्रत्यक्ष परामर्शादनुमितिर्न स्यादिति भावः।

(ङ) "हृदय"मित्यनेन सूचितमवतारयन्नाह "अवच्छेदकत्व"मित्यादि।

न स्वरूपसम्बन्ध-विशेषोऽपि दूषणत्वात्, किन्तु स्व-विशिष्टाधिकरणा-वृत्तित्वादि-रूपं, तच्च सत्वस्यैकस्याभावात् विशिष्ट-धूमत्वादे-रनिश्चये दुर्ग्रहमिति भावः।

---

दीधितिः।

अत्रावच्छेदकत्वं (१) नान्यूनवृत्तित्वं अन्यूनानति-रिक्तवृत्तित्वं वा, वह्न्यादौ साध्ये मेयत्वादावतिप्रसङ्गात् धूमत्वादावप्रसङ्गाच्च। किन्त्वनतिरिक्तवृत्तित्वं, तच्च यद्यपि न तदभाववदवृत्तित्वं, गुणवान् सत्त्वादित्यत्र सत्तात्वेऽतिप्रसङ्गात्। न च कर्म्मादिवृत्तित्वावच्छे-देन गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्त्त-मानत्वान्न तथा, तथा सति विशिष्टसत्तात्वे प्रागुप-दर्शित-दिशा च धूमत्वादावव्याप्ति-प्रसङ्गात्। तथापि अतिरिक्ते यद्धर्म्मविशिष्ट-हेत्वधिकरण-वृत्तित्वं न वर्त्तते तत्त्वं साध्यासमानाधिकरणावृत्ति-स्व-विशिष्टाधिकरण-वृत्तित्व-सामान्यकत्वं, स्वविशिष्टाधिकरणावृत्ति-यावत्-साध्यासमानाधिकरणकत्वमिति तु फलितार्थः। सत्ता-त्व-विशिष्ट-सत्ताधिकरण-कर्म्मादि-वृत्तित्वस्य साध्या-समानाधिकरणे कर्म्मत्वादौ सत्त्वान्नातिप्रसङ्गः।

---

(१) अत्र अवच्छेदकत्वमिति पूर्व्वपक्षिग्रन्थे।

कर्म्माद्यन्यत्व-विशिष्ट-सत्ताश्रयस्य न कर्म्मादिरिति नाप्रसङ्गः। एवञ्च मेयत्वादेरपि केवलान्वयि-सामानाधिकरण्यावच्छेदकत्वोपपत्तिः।

---

दीधिति-प्रकाशः।

आद्ये दोषमाह "मेयत्वादा"विति। उभयत्र तमाह "धूमत्वादा"विति। "तदभावे"ति साध्य-सामानाधिकरण्याभाववद्वृत्तित्वमित्यर्थः। "कर्म्मादी"ति सत्तायां कर्म्मणि गुण-सामानाधिकरण्यं नास्तीति प्रतीति बलादिति भावः। "न तथा" न तदभाववद्वृत्तित्वम्। "विशिष्टसत्तात्वे" गुणकर्म्मान्यत्व-विशिष्ट-सत्तात्वे, तस्यापि तादृश-गुण सामानाधिकरण्याभाववत्यां सत्तायां वृत्तेरिति भावः। विशिष्टस्यातिरिक्तत्व-मतेऽपि दूषणमाह "प्रागि"ति, "प्रागुपदर्शित-दिशा" सार्व्वभौम लक्षणोक्त-रीत्या। धूमावयवे (१) धूमे वह्निसामानाधिकरण्यं नास्तीति प्रतीत्या (२) धूमेऽपि वह्नि-सामानाधिकरण्याभाव-सत्त्वात् तद्वृत्तौ धूमत्वेऽव्याप्तिरिति भावः (३)। "अतिरिक्ते" साध्य-सामानाधिकरण्याभाववति, अतिरिक्तत्वावच्छेदेन (क) तादृश-वृत्तित्वाभावो बोध्यः, तेन धूमवान् वह्नेरित्यादौ कस्यचिदतिरिक्तस्य जलत्वादेर्व्वह्न्यधि-

(१) धूमावयवावच्छेदेनेति न पुस्तके।

(२) धूमे वह्निसामानाधिकरण्यं नास्तीति प्रतीत्येति नास्ति न पुस्तके।

(३) भाव इति नास्ति न पुस्तके।

---

(क) अतिरिक्तत्वव्यापक इत्यर्थः।

करण-वृत्तित्वाभावेऽपि न क्षतिः । सार्व्वभौम-मते सत्तायामपि गुण-सामानाधिकरण्याभाव सत्त्वात् तस्या द्रव्यत्वाधिकरण-वृत्तित्व-सत्त्वात् गुणवान् द्रव्यत्वादित्यादावव्याप्तिः । (क) व्याप्तेर्विशिष्टैक-रूपत्वाभावे व्याप्ति-प्रकारक-पक्ष-धर्मताज्ञानाजनकस्य विशिष्टपरा-मर्शस्याप्यनुपपत्तिरित्यत आह "साध्यासमानाधिकरणे"ति, साध्या-समानाधिकरणे न वर्त्तते स्वविशिष्टाधिकरण-वृत्तित्व सामान्यं यस्य स्वस्य तत्त्वम् अवच्छेदकत्वमित्यर्थः । "स्वम्" अवच्छेदकत्वेना-भिमतं धूमत्वादि । साध्य-समानाधिकरण-भिन्ने ह्रदत्वादौ धूम-त्व-विशिष्टाधिकरण-वृत्तित्व सामान्यस्यावृत्तित्वात् न धूमत्वादा-ववच्छेदकत्वमनुपपन्नम् । धूमवान् वह्नेरित्यादौ तु धूमासमाना-धिकरणेऽयोगोलकत्वादौ वह्नित्व-विशिष्टाधिकरण-वृत्तित्व-सामा-न्यस्य सत्त्वान्नातिप्रसङ्गः । तथापि द्रव्यत्वादि-निष्ठस्य वृत्तित्व-विशेषस्यायोगोलकत्वादावहत्तेर्वह्नित्वादावतिप्रसङ्ग इत्यत: "सामा-न्ये"ति । ननु संयोगेन वह्न्यसमानाधिकरणे ह्रदत्वादौ धूमाधि-करण-वृत्तित्वस्य संयोगरूपस्य कालिकादिसम्बन्धेन सत्त्वात्तत्तद्-वृत्तित्वानां (ख) तत्तत्सम्बन्धेन (ग) समवायादिना वृत्तित्वं वाच्यं (घ)

---

(क) अन्यतिरिक्तत्वं न साध्यसामानाधिकरण्याभाववत्त्वम्, अपि तु साध्य-समानाधिकरण-भिन्नत्वं तथा च गोत्वव्याप्तिभेदस्य आवश्यकत्वादत आह व्याप्ति-रित्यादि ।

(ख) संयोगादिरूपधूमाधिकरणवृत्तित्वानामित्यर्थः ।

(ग) [illegible] येन येन सम्बन्धेन यद् यद् साध्यसामानाधिकरण्यं तेन तेन सम्बन्धेन [illegible] निविष्टत्वात् साध्यसामानाधि-करण[illegible] इति ।

(घ) वृत्तित्वं वह्न्यसमानाधिकरणवृत्तित्वम् । "साध्य"मित्यस्य निवेश-प्रति-

तथा च संयोगेन वह्न्यसमानाधिकरणे आत्मादौ समवेतत्वस्या-प्रसिद्ध्या धूमवद्वृत्तित्वस्य तादृशजात्याद्यवृत्तित्वाभावादसम्भव इत्यत आह "स्वविशिष्टे"ति। "स्वं" अवच्छेदकत्वेनाभिमतं धूमत्वादि (क)। धूमवान् वह्नेरित्यादौ वह्नित्वादावतिव्याप्ति-वारणाय "यावदि"ति। गुणवत्सत्त्वादित्यत्रातिव्याप्तिं निरस्यति "सत्तात्वे"ति। स्वविशिष्टेत्यस्य फलमाह "कर्म्माद्यन्यत्वे"ति। "एवञ्च" छन्नावच्छेदकत्व-निर्वचने च। "मेयत्वादेरपी"ति, इदं वाच्यं मेयादित्यादौ मेयत्वस्य वाच्यत्व-सामानाधिकरण्याभाववति गगनादौ सत्त्वेऽपि वाच्यत्वासमानाधिकरणस्य गगनादेः सर्व्वस्य मेयत्व-विशिष्ट-मेयाधिकरणावृत्तित्वादेवावच्छेदकत्वमुपपन्नमित्यर्थः।

---

## दीधितिः।

यत्तु वृत्तिमत्त्वादिकमेव तत्र व्याप्तिस्तद्-ग्रहस्तु मेयत्वादिनेति तन्न व्याप्तिविरहि-वृत्तितया गृह्यमाणेन रूपेण व्याप्तिग्रहासम्भवात्, अन्यथा अतिप्रसङ्गात्। साध्यतावच्छेदक-सम्बन्धेन साध्याधिकरणे येन येन

---

योगितवेत्वादिलक्षणाच संयोगादिरूप-धूमाधिकरण-वृत्तित्वे वह्न्यसमानाधिकरण-समवेतत्वाद्यभावो बाध्य इति भावः।

(क) अन्यत्रापि लक्षणे येन येनेत्यादेरनर्थं निवेश्यतया सत्तावान् द्रव्यत्वादि-त्यत्राव्याप्तिवारणाय समवायसम्बन्धेन सत्ताधिकरणे संयोगेनाऽवृत्ति गगनादि, तत्र समवायसम्बन्धेन द्रव्यत्वाधिकरणवृत्ति-संयोग-सम्बन्धाप्रसिद्ध्या तेन वृत्तित्वाभावस्या-प्रसिद्धेरिति चेत् साध्यतावच्छेदक-सम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेना-वृत्तित्वं तत्तत्सम्बन्धावच्छिन्नाधेयतायां तत्प्रतियोगिकत्व-यद्धेत्वधिकरणानुयोगिकत्वो-भयाभावस्यापि विवक्षितत्वादिति भावः।

सम्बन्धेनावर्त्तमानत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वधि-
करणेऽपि तेन तेन तथात्वं बोध्यम्। नीलधूमत्वादे-
र्वारणीयत्वे तु स्व-समानाधिकरण-तादृश-धर्म्मान्तरा-
घटितत्वेन विशेषणीयम्। सामानाधिकरण्योपा-
दानात् धूम-प्रागभावत्वादि-संग्रहः। तदघटितत्वञ्च
तदविषयक-प्रतीति-विषयत्वम्।

---

दीधिति-प्रकाशः।

मैथिल-मतं दूषयति "यत्त्वि"ति। वृत्तिमत्प्रमेयत्वमित्यत्र
प्रमेयत्वस्य वैयर्थ्यात् वृत्तिमत्त्वमेव निष्कृष्य दर्शितं "मेयत्वा-
दिने"ति। तेन मेयादिति प्रयोगोपपत्तिः। ("अन्यथा" व्याप्ति-
विरहि-वृत्तित्वेन व्याप्यमात्रेणापि रूपेण व्याप्तिपक्षे) (१)। "अति-
प्रसङ्गात्" द्रव्यत्वादिनापि धूमादिनिष्ठ-वह्न्यादि-व्याप्ति-प्र-
सङ्गात्। सम्बन्धसामान्येन यद्वह्न्यधिकरणं तदवृत्तावाकाशादौ
हेतुतावच्छेदक-सम्बन्धेन हेत्वधिकरण-वृत्तित्वाभाव सत्त्वात् सम-
वायेन वह्नेः साध्यत्वे धूमादावतिव्याप्तिरतः "साध्यतावच्छेदक-
सम्बन्धेने"ति। द्रव्यं सत्त्वादित्यत्र साध्यतावच्छेदक-सम्बन्धेन साध्य-
वति काले सम्बन्धसामान्येनावृत्तावाकाशादौ हेत्वधिकरण-
वृत्तित्वाभाव-सत्त्वादतिव्याप्तिरित्यतो "येन येने"ति। वह्निमान्
धूमादित्यत्र वह्न्यसमानाधिकरण-धूमावयव-रूपादौ समवायेन
धूमाधिकरण-वृत्तित्वात् अव्याप्तेराह "हेतुतावच्छेदकसम्बन्धेने"ति।

---

(१) ( ) एतच्चिह्नितपाठो नास्ति न पुस्तके।

वस्तुतस्तु यत्र-तत्त्वयोरननुगमादावश्यकत्वाच्च विशेषणता-विशेषे-णैवावृत्तित्वं बोध्यम् । एवञ्च साध्यतावच्छेदकसम्बन्धेन साध्यवति विशेषणता-विशेषेण यत् अवृत्ति तत् हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेपि तेन सम्बन्धेनावृत्तीत्येव वक्तव्यमिति ।

"वारणीयत्वे त्वि"ति । वस्तुतस्तु तत्र व्याप्ति-सत्त्वात्तद्वारणे-ऽपि न क्षतिः । प्रयोजनाधिक्येनैव नियम इति भावः । "तादृ-शे"ति निरूपितावच्छेदकरूपेत्यर्थः । तेन द्रव्यं विशिष्ट-सत्त्वादित्यत्र असमानाधिकरण-सत्तात्व-घटितत्वेन (१) विशिष्ट-सत्तात्वस्य न क्षतिः । नीलधूमत्वे धूमत्वमेव तादृशो धर्मो घटक इति नाति-प्रसङ्गः । स्वस्यापि स्वघटित(२)त्वा"दन्तरे"ति । "धूमे"ति, धूम-त्वस्य धूम--प्रागभावत्वासमानाधिकरत्वाद्विशिष्टाभावस्तत्राप्यस्त्यत इति भावः । ननु तद्घटितत्वं तदविषयक-प्रतीत्यविषयत्वं तद-भावस्तदघटितत्वं, तथा च नञ्-द्वय-गर्भतायां सन्दर्भ-विरोध इत्यत आह "तदविषयके"ति । इत्यञ्च स्वाविषयक-प्रतीति-विषय-असमानाधिकरण-तादृशधर्माविषयक-प्रतीति-विषयत्वं पर्य्यवसि-तार्थः । तेन धूमत्वस्य नीलधूमत्वभिन्नत्वाभावेऽपि न क्षतिः ।

---

दीधितिः ।

स्वरूप-सम्बन्ध-विशेष एवावच्छेदकत्वं अत एव न अतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते, अन्य-थातिप्रसक्तोऽनति-प्रसक्तत्वस्याप्रसक्तत्वेन तन्निराकरणा-

---

(१) घटितत्वेऽपीति न पुस्तके । (२) घटकेति न पुस्तके ।

योगात्, विरुद्धयोर्भावाभावयोरधिकरणे एकस्यैकेन सम्बन्धेन वृत्तिर्विरुध्यते अतस्तत्रावच्छेदक-भेदापेक्षा। अत एव व्यभिचारिणि साध्य-तदभाव-सामानाधिकरण्ययोर्विरुद्धयोरुपपादनाय उपाधि-तदभावावच्छेदकावनुमन्यन्ते न्यायाचार्य्याः।

---

दीधिति-प्रकाशः।

मिश्र-मतमाह "स्वरूपसम्बन्धविशेष एवे"ति। "अन्यथा" अनतिप्रसक्तत्वस्यावच्छेदक-पदार्थत्वे। ननु गुणवत् सत्त्वादित्यत्र सत्तात्वस्य गुणसामानाधिकरण्यानतिरिक्तवृत्तित्वात् लघुत्वाच्च स्वरूपसम्बन्ध-रूपावच्छेदकत्वं स्यात् अत आह "विरुद्धयो"रिति। विरुद्धयोरपि गोत्वाश्वत्वयोरधिकरणे प्रमेयत्वादेर्वृत्तौ नावच्छेदक-भेदापेक्षेत्यत उक्तं "भावाभावयो"रिति। "एकस्य" एकधर्म्मावच्छिन्नस्य, तेन धूमवान् वह्नेरित्यादौ वह्नेर्नानात्वेऽपि न क्षतिः। "तत्र" विरुद्धभावाभावाधिकरणे। एकस्य एकेन सम्बन्धेन वृत्तौ अवच्छेदक-भेदावश्यकत्वे प्राचां सम्मतिमाह "अतएवे"ति। "उपाधी"ति, साध्यसामानाधिकरण्ये उपाधिः, (क) साध्याभाव-सामानाधिकरण्ये चोपाध्यभावोऽवच्छेदक इत्यर्थः।

---

दीधितिः।

सत्तात्वन्तु गुणाद्यभावस्येव गुणस्यापि न सामा-

---

(क) साध्यवत्त्वाप्रकारोपाधिरित्यर्थः।

नाधिकरण्यावच्छेदकं विरोधात्। अव्याप्यवृत्तेश्च कपि-संयोगादेरधिकरणे वृक्षादौ तदभावस्य, संयोगेन च वह्नेरधिकरणे महानसादौ समवायावच्छिन्न-प्रतियोगिताक-तदभावस्य सत्त्वेनाविरुद्धत्वात्। वह्निमति च संयोगेन वर्त्तमानस्य धूमादेर्वह्न्यभाववति स्वावयवे संयोगेनावर्त्तमानत्वाच्च तद्वृत्तित्व-धूमत्वादेर्न साध्य-सामानाधिकरण्यावच्छेदकत्व-विरोधः। व्यभिचार-धी-रप्येतद्व्याप्ति-बुद्धौ विरोधिन्येव, तद्धर्मविशिष्टस्य साध्या-नधिकरण-वृत्तित्व-ग्रहे तदवच्छेदेन साध्याधिकरण-वृत्तित्व-ग्रहायोगात्।

---

दीधिति-प्रकाशः।

ननु सत्तात्वस्य गुण-सामानाधिकरण्यमात्रावच्छेदकत्वेऽप्युक्त-विरोध-परिहारो भवत्वेव तथा चातिव्याप्तिरेवेत्यत आह "सत्ता-त्वञ्चे"ति, विनिगमना-विरहादुभयोरवच्छेदकत्वे विरोधादेकस्या-प्यवच्छेदकत्वमिति भावः। विरुद्धयोरित्यस्य फलमाह "अव्याप्य-वृत्ते"रित्यादिना। संयोगेन तदभावयोरेकावच्छेदेन विरोधो वर्त्तत एव, परन्तु प्रकृते तादृश-विरोधो न विवक्षितः। एक-धर्म्मिणि वृत्तित्वं ययोर्विरुद्धयोस्तादृशो विरोध एव विवक्षित इति तं दर्शयित्वा सम्बन्ध-भेदेनाविरोधं दर्शयति "संयोगेन च वह्ने"-रिति। "अविरुद्धत्वा"दिति, तथा च प्रतियोगितावच्छेदक-सम्ब-

न्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरण-वृत्तित्व-विशिष्टस्या-भावस्य प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोगितावच्छेदकाव-च्छिन्नस्य चाधिकरणे एकस्य एकेन सम्बन्धेन वृत्तिर्विरुद्धेत्यर्थः । तेन कपिसंयोगि सत्त्वादित्यादाववच्छेदक-भेदापेक्षेति द्रष्टव्यम् । एकेन सम्बन्धेनेत्यस्य फलमाह "वह्निमती"ति । "तद्वृत्तित्वधूम-त्वे"ति, कपिसंयोग्यतद्वृत्तित्वात् वह्निमान् धूमादित्यादाविति शेषः । "न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः" न विनिगमना-विरहेणोभयावच्छेदकत्व-विरोधेनैकस्याप्यनवच्छेदकत्वेन सामाना-धिकरण्यावच्छेदकत्वासम्भव इत्यर्थः । नन्वनुमितिविरोधि(क)व्यभि-चारज्ञानाविरोधितया नैतद्व्याप्तिज्ञानम् अनुमिति हेतुरित्यत (ख) आह "व्यभिचारे"ति । "तद्धर्म्म-विशिष्टस्ये"ति, साध्यतदभावयो-रिव तदुभय-सामानाधिकरण्ययोरप्येकावच्छेदेन स्वरूपतो विरो-धस्योक्तत्वादिति भावः । (ग)

दीधितिः ।

अस्तु वा एतन्मते हेतु-वृत्ति-धर्म्मस्य साध्य-सामा-नाधिकरण्यानवच्छेदकत्वमेव व्यभिचारः, तद्धीरेव साक्षाद्विरोधिनी, व्यभिचारधीस्तु परम्परयेति, नील-

---

(क) अनुमितिहेतुत्वादप्रयोजक इत्यर्थः ।

(ख) तथाच व्यभिचारस्य हेत्वाभासत्वानुपपत्तिरिति भावः ।

(ग) तत्सामानाधिकरण्येन व्यभिचारपक्षधर्मताज्ञानविषयकत्वादि विरोधित्व-मनुभवानुरोधेन कल्पनीयमिति भावः ।

धूमत्वादिकन्तु गौरवान्नावच्छेदकम्। एवञ्च लघु-घट-त्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः, न तु तत्सहचरित-कम्बुग्रीवादिमत्त्वादिकं, तेन च गुरुणापि रूपेण व्याप्ति-ग्रहे कथायां हेतोरुपन्यासे वाऽनुयोगः प्रकारान्तर-व्याप्तिवादिनामपि समानः।

---

दीधिति-प्रकाशः।

ननु शाखा-विशिष्टे (क) वृक्षे कपि-संयोगाभाव ग्रहेऽपि शाखाव-वच्छेदेन वृक्षे कपि-संयोगवत्त्व-ज्ञानवत् वह्नित्व विशिष्टे धूमान-धिकरण-वृत्तित्व ग्रहेऽपि वह्नित्वावच्छेदेन धूमाधिकरण-वृत्तित्व-ग्रहो नानुपपन्नः, हेतुतावच्छेदकावच्छेदेन साध्यानधिकरण वृत्ति-त्वन्तु न व्यभिचार इत्यत आह "अस्त्वे"ति। "परम्परये"ति एतादृश व्यभिचारोन्नायकतयेत्यर्थः। एतादृश-व्यभिचारानुन्नयन-दशायान्तु व्यभिचारान्तर-धी कालेऽपि अनुमितिरेतन्मते दृष्टैवेति भावः। व्यर्थ-विशेषण-स्थले व्याप्यत्वासिद्धिं दर्शयति "नीले"ति। तुल्ययुक्त्या(ख)ऽन्यत्राप्याह (ग) "एवञ्चे"ति स्वरूप-सम्बन्ध-विशेष-स्यावच्छेदकत्वात्मकत्वे चेत्यर्थः। "तत्सहचरितं" तत्समनियतम्। नन्वेवं (घ) गुरुरूपेण प्रकृतव्याप्ति-ग्रहस्यासम्भवात् तदवच्छिन्नहेतु-

---

(क) शाखासामानाधिकरण्येनेत्यर्थः।

(ख) सम्बन्धावच्छेदकताया लघुधर्म्मापेक्षया गौरवरूपगुरुत्वेत्यर्थः।

(ग) व्याप्यत्वासिद्धिमाहेत्यर्थः।

(घ) गुरुरूपेण व्याप्त्यभावे इत्यर्थः।

व्यानुमितिर्न स्यात्, (क) नील-धूमादित्यादि-प्रयोगे च प्रयोक्ता निग्रहीतः स्यात्, प्रकारान्तर-व्याप्त्यभिधाने तु नायं दोष (ख) इत्यत आह "तेने"त्यादिना। "प्रकारान्तरे"ति अत्यन्ताभावा-न्योन्याभावादिगर्भेत्यर्थः। तन्मतेऽपि नील-धूमत्वाद्यवच्छेदेन तत्तद्व्याप्यग्रहस्य "नीलधूमा"दिति प्रयोक्तुर्निग्रहस्य चाविशिष्ट-त्वादिति (ग) भावः।

केचित्तु "तेन चे"ति, "तेन" तत्समनियत-गुरुधर्मस्यावच्छेद-कत्वाभावेन। "अपि"र्भिन्नक्रमे, प्रकारान्तर व्याप्तिवादिनां तत्र तत्रा(घ)नुयोगोऽपि प्रकृत-व्याप्तिवादिनां समानः, गुरुरूपस्य स्वरू-पसम्बन्ध-विशेष-रूपावच्छेदकत्वास्वीकारादिति, एतद्व्याख्याने च "तेन चे"त्यस्य हेतुत्वं सङ्गतमिति व्याचक्षुः।

दीधितिः।

एवं द्रव्यं रूपात् रसादित्यादौ सकलगुण-साधारणस्य गुणत्वस्य द्रव्यत्वादि-साधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वा एकस्यावच्छेदकत्व-सम्भवे बहूनां रूपत्वादीनामपि (१) न तत्त्वम्। विरुद्ध-

(१) अपीति नास्ति क्वचिन्मुद्रितपुस्तके।

(क) परार्थानुमानाभिप्रायेणाह "नीले"त्यादि।

(ख) गुरुरूपेण व्याप्तिग्रहत्वादिति भावः।

(ग) गुरुरूपस्य प्रकृते गौरवेण व्याप्यताधिकरण्यानवच्छेदकत्ववत्, तन्मतेऽपि व्याप्यतावच्छेदकत्वेनानुयोगसम्भवादिति भावः।

(घ) व्याप्तिपक्षे तथात्वं हेतोरपव्याप्ति चेत्यर्थः।

धर्म्मद्वयाधिकरणयोश्च एकस्यैवैकेन सम्बन्धेन वृत्तौ कथं विरोधः, कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्ट-रूपादे प्रयोगः, तथा परामर्शाद्यानुमितिरिति तु (१) विभावनीयम् ।

---

दीधिति-प्रकाशः ।

शरीर-गौरव-कृतमनवच्छेदकत्वं व्युत्पाद्य व्यक्ति-बाहुल्य-कृतमनवच्छेदकत्वं व्युत्पादयति "एव"मिति । "द्रव्यत्वादौ"त्यादिना कर्म्मत्वादि-जाति-परिग्रहः । सत्ता-वारणाय "सत्व"न्तं, कर्म्मत्वादि-वारणाय "द्रव्यसमवेते"ति । न चात्र रूपासमवेतत्व-रसासमवेतत्वादीनां तावतां(२) विनिगमना-विरहेण हेतु-प्रवेशे गौरवात् रूपत्वादिकमेवावच्छेदकमुचितमिति वाच्यं विनिगमना-विरहेण रूपासमवेतत्व-रसासमवेतत्वादीनामवच्छेदकत्वे तद्घटकत्वेन रूपादीनां चतुर्विंशतेरप्यवच्छेदकत्वे तत्संग्राहक-गुणत्वस्यैव (३) हेतुत्व-प्रवेशेन गुणासमवेतत्वस्यैव हेतुत्व-प्रवेशौचित्यात् । अत एवा(क)काशादि(४) पदस्य शक्यतावच्छेदकतावच्छेदकं शब्दत्वमेव (ख) न तु कला-

---

(१) तु इति नास्ति मुद्रित पुस्तके ।

(२) तावतामिति च ।

(३) तत्संग्राहकस्यैव गुणत्वस्येति च ।

(४) काशेति नास्ति च ।

---

(क) संग्राहकतावच्छेद विनिगमकत्वादेवेत्यर्थः ।

(ख) सकलशब्दानां शक्यतावच्छेदकतया संग्राहकत्वादिति भावः ।

दीत्युक्तं गुणदीधितौ। (क) यद्वा वाकारोऽनास्थायां सर्व्वसाधारणं गुणत्वमेव पूर्व्वोक्तं सम्यक्। "तत्त्वम्" अवच्छेदकत्वम्। एतन्मतं दूषयति "विरुद्धधर्म्मद्वये"ति, तादृशव्याप्तौ मानाभावादिति (ख) भावः (१)। "कथं वे"ति, व्याप्यतावच्छेदकेन रूपेणैव हेतु-प्रयोगस्य न्याय्यत्वात् रूपत्वादेर्व्याप्यतानवच्छेदकत्वात् द्रव्यं रूपादि-त्यादि-प्रयोगे निग्रहः स्यादिति भावः। स्वार्थानुमानाभिप्रायेणाह "तथा परामर्शादि"ति।

दीधितिः।

अपरे तु यद्धर्म्मविशिष्टहेत्वधिकरणत्वं साध्याधि-करणताया अवच्छेदकं स धर्म्मो व्याप्तिः। अन्यस्तु धूमस्य धूमवतः धूमत्वं धूमवत्त्वं वह्नेस्तु वह्निमत्त्वमि-त्यादि-प्रकारेण व्याख्येयः। अत्र चावच्छेदकत्वं न स्वरूप-सम्बन्ध-विशेषः विरुद्ध-दिक्कालावच्छिन्न-वृत्तिकस्य

(१) यदि वा तादृशव्याप्तिरिष्यते संयोगस्यैव न संयोगाभावस्य सामानाधिकरण्यावच्छेदकं द्रव्यत्वं अतः संयोगाभाववान् द्रव्यादित्यत्राव्याप्तिरिति भेद-भिन्नविषयः पाठो वर्त्तते च पुस्तके।

(क) ननु सत्त्वस्य रूपसमवेतवृत्तितया तत्संयोगवत्त्वं सम्भवति, गुणासमवेतत्व-रूपासमवेतत्वादीनां अवच्छेदकाभावतया गुणासमवेतत्वेन रूपासमवेतत्वादीनां संग्रहो न सम्भवतीत्यत आह "यद्वे"ति।

(ख) तद्भावसामानाधिकरण्य-तद्भावासामानाधिकरण्ययोरेव विरोधेन तत्तद्-भाव-सामानाधिकरण्ययोर्विरोधे मानाभावात्। द्रव्यत्वावच्छेदेनैव गुण-तदभाव-सामानाधिकरण्यसम्भवात् द्रव्यादित्यादावपि व्याप्तिरव्याप्तिरेवेति भावः।

न्यूनदेश-काल-वृत्तिकादेश्चाधिकरणतायां तदसम्भवा-त्तुल्य-वृत्तिक-धर्म्म--द्वयाधिकरणत्वयोर्मिथोऽवच्छेद्याव-च्छेदकभावस्य च नियन्तुमशक्यत्वात्, नाप्यन्यून-वृत्तित्वं(१) न्यूनवृत्तिधर्म्मादे(२)रव्याप्त्यापत्तेः । किन्त्व-नतिरिक्त-वृत्तित्वं स्वान्यूनवृत्ति-तत्कत्वमिति यावत्, अतो न केवलान्वयिन्यव्याप्तिः। अत्र च यदन्यूनवृत्ति-साध्यं तत्त्वं स्व-व्यापक-साध्यसम्बन्धित्व-पर्य्यवसन्नमपेक्ष्य गौरवं परमवशिष्यते, तच्च ग्रन्थकार एवाग्रे विवेचयि-ष्यत इत्याहुः ।

---

दीधिति-प्रकाशः ।

द्रव्यं गुण-कर्म्मान्यत्वे सति (३) सत्त्वादि-त्यादि-संग्रहाय "यद्धर्म्म-विशिष्टे'ति, (क) हेत्वधिकरणताया (४) अवच्छेदकत्वमव्याख्याये

---

(१) वृत्तिकत्वमिति मुद्रितपुस्तके ।

(२) न्यूनवृत्तिकधर्म्मादेरिति मुद्रितपुस्तके ।

(३) गुणकर्म्मान्येति च ।

(४) हेत्वधिकरणताया इति नास्ति ख, च ।

---

(क) हेतुतावच्छेदकसम्बन्धावच्छिन्न-हेत्वधिकरणत्व-सामान्य हेत्विति । साध्याधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नाधिकरणत्वं, तेन समवायेन वह्नेः साध्यतायां धूमे, विशिष्टसत्तायाः साध्यत्वे जातौ च नातिव्याप्तिः ।

(क) बोधनं (१) "धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदक"मि-
त्यादिग्रन्थविरोधं प्रथमतः एव परिहरति "यत्त्वि"त्यादिना।
"विरुद्धदिक्काले"ति अग्रावच्छिन्न-कपि-संयोगे साध्ये मूलावच्छिन्न
संयोग-विशेषस्य विरुद्ध-दिगवच्छिन्न-वृत्ति(२) वृत्तिकस्य तद्-घटादौ
साध्ये तद्घटध्वंसस्य विरुद्धकालावच्छिन्नवृत्तिकस्य चाधिकरण-
तायां साध्याधिकरणत्वावच्छेदकत्वासम्भवात् (ख) इत्यर्थः। अविरुद्ध
दिक्कालवृत्तिकयोरप्यसम्भवमाह "न्यूने"ति। वह्निमान् धूमादि-
त्यादौ तादृश (३) धूमस्य वह्न्यपेक्षया न्यूनदेशकालवृत्तिकस्याधि-
करणतायां वह्न्यधिकरणत्वावच्छेदकत्वासम्भवादित्यर्थः(ग)।"तुल्य-
वृत्तौ"ति एतद्रूपवान् एतद्रसादित्यादौ परस्पराधिकरणतायां पर-
स्पराधिकरणतावच्छेदकत्वेऽन्योन्याश्रया(घ)न्नैकमप्यवच्छेदकमिति
भावः। (ङ) उत्पत्ति-ज्ञप्त्योरिव एतादृशान्योन्याश्रयेऽपि वस्तु-व्य-

(१) अव्याख्यायैवाग्रिम मूले इति अधिकः पाठः घ।

(२) वृत्ति इति नास्ति ख ग पुस्तकयोः।

(३) तादृशेति नास्ति घ।

(क) उत्तम्भितस्य पुरः स्फूर्त्तिकमित्यर्थः, एतच्चाग्रिम-ग्रन्थविरोधमनने-
नाभिहितम्।

(ख) अवच्छेद्याधिकरणासम्भवादिति भावः।

(ग) तथाच सद्धेतुत्वस्याप्यवच्छेदकत्वमन्यूनानतिप्रसक्तत्वमिवतमिति
भावः।

(घ) स्थितौ अन्योन्याश्रयादित्यर्थः।

(ङ) ननूत्पत्तिज्ञप्त्योरेवान्योन्याश्रयस्य दोषत्वमत आह "उत्पत्तौ"त्यादि।

वस्था-विरोध(क) इति ध्येयम् । साध्याधिकरणताशून्यावृत्तित्वरूपे-ऽनतिरिक्तवृत्तित्वे केवलान्वय्यव्याप्तिरतः "स्वान्यूने"ति, स्वम् अवच्छेदकत्वेनाभिमतं धूमाधिकरणत्वादि, अन्यूनवृत्तित्वं व्यापकत्वं, तत्पदं साध्याधिकरणतापरं, हेत्वधिकरणता-निष्ठावच्छेदकत्व-वारणाय बहुव्रीह्यनुसरणं, तथा च यद्धर्म्म-विशिष्ट-हेत्वधिकरणता स्वान्यूनवृत्ति-साध्याधिकरणताकेत्युक्ति-भङ्ग्या यद्धर्म्म-विशिष्ट-हेत्वधिकरणता-व्यापिका साध्याधिकरणता स धर्म्मो व्याप्तिरिति फलितार्थः । अत्र चाधिकारता द्वय-प्रवेशे गौरवं प्रकाशयति "अत्रे"ति । व्याप्तेर्विशिष्टैकरूपतां प्रकाशयन्नाह "स्वव्यापके"-ति । "अग्र" इति लाघवादन्योन्याभावगर्भैव व्याप्तिरित्यादा-वित्यर्थः ।

दीधितिः ।

"उपाधिने"ति (१) । विशेषणतामापन्नेनोपाध्य-नुप्रवेशेनेति यावत् । वज्रावार्द्रेन्धन-प्रभव-वह्नित्वेन रासभार्द्रेन्धनादौ च तथाविध-वह्नि-विशिष्टत्वेन धूम-सम्बन्धेऽवच्छिद्यमाने तथाविध वह्नेरप्यनुप्रवेशात्, रास-भत्वादिकन्तु निविशते न वेत्यन्यदेतत् ।

(१) ४८६ पृः मूलं द्रष्टव्यम् ।

(क) अन्वयव्यतिरेकाभ्यां स्थितौ अन्योन्याभावस्यापि वस्तु-व्यवस्था-प्रतिप न्नत्वादिति भावः ।

## दीधिति-प्रकाशः ।

नन्पाधेः साधनावृत्तितया (क) कथं तद्विष्ठ-साध्य-सामानाधिकरण्यावच्छेदकत्वमत आह । "विशेषणता"मिति (ख) । नन्ववच्छेदक(१)विशेषणतापन्नस्यापि तस्य नावच्छेदकत्वं, किन्तु वह्नावार्द्रेन्धन-प्रभव-(ग)वह्नित्वमवच्छेदकं, तच्च सामानाधिकरण्य-सम्बन्धेनार्द्रेन्धन-प्रभवत्व-विशिष्ट-वह्नित्वं, तत्र चार्द्रेन्धन प्रभव-वह्नेर्न विशेषणत्वं, किन्तु सामानाधिकरण्य-घटकतया सम्बन्धत्व-मेवेत्यत आह, "उपाध्यनुप्रवेशेने"ति, तथा च (घ) उपाध्यनु-प्रविष्ट-धर्म्मेणावच्छिद्यत इत्यर्थः । तदनुप्रविष्टत्वञ्च तदविषयक-प्रतीत्यविषयत्वम् (ङ) । अनुप्रवेशे वैलक्षण्यं दर्शयितुमाह "वह्ना"-

(१) अवच्छेदके इति ग ।

(क) साधने उपाधिसामानाधिकरण्यस्योपाधिविशिष्टवृत्ति नियामकत्वाभावात्तस्य सम्बन्धत्वाभावेन तेन सम्बन्धेनापि तादृशावच्छेदकत्वमुपाधौ न सम्भवतीत्याशयेनाह साधनावृत्तितयेत्यादि ।

(ख) तथा च विशेष्यतया अवच्छेदकस्य विशेषणीभूय उपाधिरवच्छेदक इत्यर्थः । आर्द्रेन्धनप्रभववह्नित्वमवच्छेदकं, तत्रार्द्रेन्धनप्रभववह्निरूपोपाधिः सामानाधिकरण्य घटकतया विशेषणमिति भावः ।

(ग) आर्द्रेन्धनवह्निविशिष्टवह्नित्वापेक्षया लाघवादिति भावः ।

(घ) उपाधेरनुप्रवेशो यत्रेति व्युत्पत्त्यभिप्रायेणाह उपाध्यनुप्रविष्टेत्यादि । तथा च "सोपाधावुपाधिने"तिमूलस्य सोपाधौ उपाधिर्घटकतया साध्यसामान्याधिकरण्यतावच्छेदको भवतीत्यर्थः पर्यवसित इति ध्येयः ।

(ङ) तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वमित्यर्थः, तेन प्रमेयत्वादिना प्रतीतिसम्भवात् नासम्भवः वस्तुतस्तदनवगाहितया वह्नित्वादेर्वारणाय नञ्-द्वय-गर्भतेति ध्येयम् ।

विति, प्रथमे सम्बन्धतया, इतरयोस्तु विशेषणतयानुप्रविष्टता (१)। आर्द्रेन्धनत्वस्योपाधि-घटकतया-निवेशेऽपि (क) विशेषणतया (२) निवेशाभावं (ख) दर्शयितुं (ग) तस्य (घ) पृथगुक्तिः (ङ)। "न वेति" वाक्यारोऽनास्थायां, रासभत्वादावार्द्रेन्धन-वह्नि-सामानाधिकरण्यस्य सामानाधिकरण्य-सम्बन्धेन विशेषणत्वे वैयर्थ्याभावात्। "अन्यदेत"दिति उपाध्यनुप्रवेशस्योभयथापि सत्त्वादिति भावः।

---

(१) अनुप्रवेश इति ग।
(२) विशेष्यतयेति घ।

---

(क) चरमानुप्रवेशोक्तेः फलमाह आर्द्रेन्धनत्वस्येत्यादि, आर्द्रेन्धनत्वस्य प्रथमे उपाध्यनुप्रविष्टधर्म्मघटकार्द्रेन्धन-प्रभवत्व-घटकतया निवेशेपीत्यर्थः।

(ख) तादृशावच्छेदकविशेषणतयोपाधेर्निवेशाभावमित्यर्थः।

(ग) व्यभिचारिमात्रे उपाधिविशेषणकधर्म्मस्यैव साध्यसामानाधिकरण्यावच्छेदकत्वमिति भ्रमनिरास एव दर्शन फलमिति भावः।

(घ) चरमानुप्रवेशस्येत्यर्थः।

(ङ) विशेष्यतयेति पाठे रासभादावित्यनेन सामञ्जस्ये रासभार्द्रेन्धनादावित्युक्तेः फलमाह "आर्द्रेन्धनत्वस्ये"ति धूमवानार्द्रेन्धनादित्यत्र साधनतावच्छेदकार्द्रेन्धनत्वस्येत्यर्थः। "उपाधिघटकतये"ति यथाश्रुतार्थकमेव। "विशेष्यतये"त्यत्र चरमस्येत्यादिः। "दर्शयितु"मिति आर्द्रेन्धन-प्रभववह्निमत्त्ववत् सर्व्वत्र किञ्चिद्विशेषण-विशिष्टसाधनतावच्छेदकस्यैव उपाध्यनुप्रविष्टो धर्म्म इति भ्रमनिरासाय तद्दर्शनस्यावश्यकत्वादिति। "तस्य" आर्द्रेन्धनत्वस्य। "पृथगुक्तिः" हेतुतावच्छेदकतया रासभत्वापेक्षया भिन्नत्वेनोक्तिः। उक्तः यद्वा इत्यादि न्यायेन पृथगुक्त्या तल्लाभादिति भावः। "विशेष्यतये"त्येव पाठः आर्द्रेन्धनत्वस्येत्यादि यथाश्रुतार्थकमेव, "तस्ये"त्यत्र विशेषणतयानुप्रवेशस्येत्यर्थ इति यथाश्रुतमेव बहवो वर्णयन्ति।

दीधितिः ।

अत चेदं स्नेहवत् निःस्नेहं वा स्पर्शादित्यत्र विनाप्युपाधि-प्रवेशं (१) शीतत्वेन शीतान्यत्वेन वा साध्यासामानाधिकरण्यतया साधन-व्यापकतया वा स्वयमनुपाधिना (२) केवलेन विशेषणीभूय वा (३) शीतान्यस्पर्शत्वेन चोपाधिना स्वत एव स्पर्शे साध्य-सम्बन्धोऽवच्छिद्यत इत्युपाधिनैवेति नियमे न न तात्पर्य्यं, परन्तु शुद्धस्य साधनतावच्छेदकस्यानवच्छे-दकतामात्रे ।

इति श्रीमद्-रघुनाथशिरोमणि-कृतायां दीधितौ अनुमानखण्डे विशेषव्याप्ति-प्रकरणं समाप्तम् ।

---

दीधिति-प्रकाशः ।

"सोपाधौ तु उपाधिने"ति मूलम् उपाधिनैवेति नियम-मुखेन साधनतावच्छेदकस्यानवच्छेदकत्व-प्रापकमिति यथाश्रुतं

---

(१) प्रवेशेनेति हस्तलिखित पुस्तके ।

(२) अनुपाधिनापेति हस्तलिखित पुस्तके ।

(३) वेति नास्ति हस्तलिखित पुस्तके ।

ग्रन्थ-तात्पर्य्यं निरस्यति "अत्र चे"त्यादिना। व्यभिचारिणि (१) येन साध्य-सामानाधिकरण्यमवच्छिद्यते तदवश्यमुपाध्यनुप्रविष्टं तदवश्यं (२) उपाधिरिति वा नियमं दूषयति "शीतत्वेने"ति। इदं स्नेहवान् स्पर्शादित्यत्र स्नेह-सामानाधिकरण्यावच्छेदकं शीतत्वं नोपाध्यनुप्रविष्टमिति व्यभिचारः। ननु "उपाधिने"ति तृतीयार्थो विशेषणत्वं तथा च तद्बलात् सामानाधिकरण्य-सम्बन्धेनाव-च्छेदक-विशेषणतया येनावच्छिद्यते तदवश्यमुपाधिरिति नियमात् शीतत्वे व्यभिचारस्तस्यावच्छेदक-विशेषणत्वेनानवच्छेदक-त्वादत आह "शीतान्यत्वेने"ति। इदं निःस्नेहं स्पर्शादित्यत्र शीतान्य-स्पर्शत्वमवच्छेदकं, तच्च सामानाधिकरण्य-सम्बन्धेन शीता-न्यत्व-विशिष्टं स्पर्शत्वं, तत्रापि (३) शीतान्यत्वं तादृशमवच्छेदक-मपि (४) नोपाधिरिति व्यभिचार इति भावः (५)। उक्त-धर्म्मयोः (क) स्वयमनुपाधित्वे यथाक्रमं हेतुद्वयं "साध्यासमाने"-त्यादि। केवलेन शीतत्वेन विशेषणीभूयशीतान्यत्वेनावच्छिद्यते इति अग्रेतनेनान्वयः (६)।

ननु तृतीया-बलादुपाधिना विशेषणतामापन्नेनैवावच्छिद्यत इति लब्धम्। तथाचोपाधेरवच्छेदकत्वम् अवच्छेदकविशेषणत-

---

(१) नियमेनेत्यधिकः पाठः ग।
(२) तदवश्यमिति नास्ति ग।
(३) अपीति नास्ति ग।
(४) तादृशमपीति घ।
(५) इत्यर्थ इति घ।
(६) अवच्छिद्यत इत्यन्वय इति घ।

---

(क) शीतत्व शीतान्यत्वयोरित्यर्थः।

यैव पर्य्यवसितं मतं (१) दूषयति "शीतान्य-स्पर्शत्वेनेति । (क) चकारस्त्वर्थे "स्वतः एव" न तु कस्यचिद् विशेषणतया, शीतान्यस्पर्शत्वस्य च पृथिवीस्पर्श-जलान्यतरत्वावच्छिन्न-साध्य-व्यापकतयोपाधित्वम् ।

यत्तु यत्रावच्छेदकस्य उपाधित्वं तत्रानुप्रविष्टत्वमिति नियमे व्यभिचारोद्भावनं शीतान्यस्पर्शत्वेनेति तदसत् स्वतोऽवच्छेदकत्वेऽपि शीतान्यस्पर्शत्व-विशिष्टत्वस्य सत्वादि-साधारणस्यावच्छेदकत्वे शीतान्यस्पर्शत्वस्यानुप्रविष्टत्वेन व्यभिचारासम्भवात् । यद्यपि प्रथमनियमस्यैव प्रकृतोपयोगित्वं द्वितीयादि-नियमानान्तु साधनतावच्छेदकस्यावच्छेदकत्वेऽपि सम्भवाशङ्कनीयत्वं तथापि प्रथमनियममात्र-सम्पादकतया एवकारे चाघिते तद्दललभ्या यावन्तो नियमा सम्भवन्ति तावन्त एव दूषिता इति । "शुद्धस्य" किञ्चिद्विशेषणाविशिष्टस्य ।

इति श्रीमद्-भवानन्दीये तत्त्वचिन्तामणि-दीधिति-
प्रकाशे अनुमानखण्डे विशेषव्याप्ति-
प्रकरण-व्याख्या समाप्ता ।

---

(१) मतमितिनास्ति ख ।

---

(क) स्वतन्त्रार्थकत्वासम्भवादाह "चकारस्त्वर्थे" इति ।

## अथातएव-चतुष्टय-प्रकरणं*

### तत्त्वचिन्तामणिः ।

अत एव साधनतावच्छेदक-भिन्नेन येन साधनाभिमते साध्य-सम्बन्धोऽवच्छिद्यते स एव तत्र साधने-विशेषणमुपाधिरिति वदन्ति ।

---

### अथातएवचतुष्टय-प्रकरणे—दीधितिः ।

यत एव सोपाधौ साधनतावच्छेदकातिरिक्तं नियतमवच्छेदकम् अत एव तद्विशेषणत्वोपाधिरिति वदन्तीत्याह "अतएवे"त्यादि । अत्रावच्छेदकत्वं सामानाधिकरण्येन, तत्त्वस्यान्यूनवृत्तित्वं व्यापकत्वमिति यावत् । तस्याधिकरणान्तर्भावेन, तेन साध्य-विशिष्ट-साधनतावच्छेदकावच्छिन्न-साधनवत्त्व-व्यापकाधिकरणताकत्वं पर्य्यवस्यति, निरुक्त-विशिष्ट-साधन-व्यापकत्वमिति तु निष्कर्षः । इत्यञ्च सत्त्वाद्येक-व्यक्तिक-हेतु-निष्ठ-द्रव्यत्वादि-सामानाधिकरण्य-व्यापक-सामानाधिकरण्य-प्रति-योगिनि घटत्वादौ नातिप्रसङ्गः । न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्व-विशिष्ट-सत्त्वाद्य-

---

* अतएव-चतुष्टयग्रन्थस्य विशेषव्याप्तिग्रन्थान्तर्गतत्वेऽपि बहुभिरेव टीकाकारैर्लिखितपुस्तके पृथगुल्लेख-दर्शनादत्र पृथङ्निर्देशः कृतः ।

व्यापके स्पर्शवत्त्वादावप्रसङ्गः । निःस्नेहं स्पर्शात् द्रव्यं सत्त्वादित्यादौ शीत-स्पर्शान्यत्व-रूपान्यत्वादेर्वारणाय "तत्रे"त्यादि । "तत्र" साध्य-विशिष्टे साधने "विशेषणं" साध्याभाव-विशिष्टात् साधनात् सामानाधिकरण्येन व्यावर्त्तकं, साध्याभाव-विशिष्ट-निरूक्त-(१) साधनवदवृत्तीति यावत् ।

---

अथातएव-चतुष्टय-प्रकरणे—दीधिति-प्रकाशः ।

"साधनते"ति । साधनतावच्छेदकातिरिक्तमवच्छेदकमावश्यकमित्यर्थः । "तद्विशेषः" साधनतावच्छेदकातिरिक्त-साध्य-सम्बन्धितावच्छेदक-विशेषः । अन्यथा सोपाधौ साध्य-सम्बन्धितावच्छेदकस्यासत्त्वे तद्विशेषस्योपाधित्वाभिधानमसङ्गतं स्यादिति भवत्युपष्टम्भकतेति भावः ।

ननूपाधेः साधनावृत्तितया कथं तन्निष्ठ-साध्य-सम्बन्धितावच्छेदकत्वमित्यत आह "सामानाधिकरण्येने"ति । तथा च सामानाधिकरण्य-सम्बन्धेन उपाधिरपि साधन-वृत्तिरिति नानुपपत्तिरिति भावः । अनतिप्रवृत्तित्व-रूपावच्छेदकत्वोक्तौ प्रत्यक्ष उद्भूतरूपा(२)दित्यत्र महत्त्वादेरुपाधित्वं न स्यादत आह "तत्त्वञ्चे"ति अवच्छेदकत्वञ्चेत्यर्थः ।

अन्यूनवृत्तित्वं न्यूनवृत्ति-भिन्नत्वं, न्यूनवृत्तित्वञ्च तत्समानाधि-

---

(१) निरुक्तेति नास्ति हस्तलिखित पुस्तके । (२) प्रत्यक्षस्तूद्भूतरूपादिति ।

करणाभाव-प्रतियोगित्वेसति तत्समानाधिकरणत्वम्। अत्र च विशेष्य-दलस्यानतिप्रयोजनकत्वादाह "व्यापकत्व"मिति। इत्थमपि(क) द्रव्यं सत्त्वादित्यत्र घटत्वादावतिव्याप्ति(ख)रत आह "तत्त्वाधिकरणे"ति। यद्यदधिकरणान्तर्भावेन (ग) साधने साध्यस्य समानाधिकरणत्वं (१) तत्तदधिकरणान्तर्भावेनोपाधेरपीत्येवं क्रमेणेत्यर्थः। सत्तायां द्रव्यत्व-सामानाधिकरण्यं घटेऽपि (घ) तत्र न घटत्व सामानाधिकरण्यमिति नातिव्याप्तिरिति (२)।

पर्य्यवसितार्थमाह "तेने"ति, साध्यविशिष्टं यत्साधनतावच्छेदकावच्छिन्न-साधनं तद्वत्त्व व्यापकेत्यर्थः। अधिकरणता इय-प्रवेशे गौरवादाह "निरुक्ते"ति साध्य-विशिष्टेत्यर्थः। साध्यविशिष्टत्वञ्च साध्यतावच्छेदकावच्छिन्न-साध्य विशिष्टत्वं, तेन गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ गुणान्यत्वे नाव्याप्तिः। "इत्थञ्च" तादृशव्यापकत्व-विवक्षणे च। साधनतावच्छेदकावच्छिन्नस्य फलमाह "नवे"ति। निःस्नेहं स्पर्शादित्यत्र शीतस्पर्शान्यत्वस्य साधन-व्यापकतया सर्व्व-मत एवानुपाधित्वं, रूपान्यत्वस्य तु साधनाव्यापकत्वेऽपि

(१) सामानाधिकरण्यमिति ग।
(२) इतीति नास्ति ग।

(क) व्यापकत्वोक्तावपीत्यर्थः।
(ख) द्रव्यं जन्यत्वेसति सत्त्वादित्यादौ स्पर्शवत्त्वेऽव्याप्त्यापत्त्या व्याप्तिरिति साधन-भिन्नत्वोपादानस्यावश्यकत्वादिति भावः।
(ग) यद्यदधिकरणावच्छेदेनेत्यर्थः।
(घ) घटत्वावच्छेदेनापीत्यर्थः।

द्रव्यत्वाभावविशिष्ट-सत्तावति स्पर्शादौ सत्त्वेन विरोधभञ्जक-
तया (क) एतन्मते एवानुपाधित्वमिति उभयमुपात्तम् ।

यद्वा यथाश्रुते विशेषणत्वं रचितुं(१) इदं (ख)। विशेषणत्वं हि
व्यावर्त्तकत्वं, तच्चाश्रयतया सामानाधिकरण्येन वा ? आद्ये "शीत-
स्पर्शान्यत्वे"ति, शीतस्पर्शान्यत्वस्याश्रयतया स्पर्शान्तर-व्यावर्त्तकत्वा-
दत एव मिश्रव्याख्यानमपि दूषितं, शीतस्पर्शान्यत्वविशिष्ट-
स्पर्शत्वरूपे विशिष्टे सम्बन्धितावच्छेदकेऽपि विशेष्यं साधनतावच्छे-
दकांशमपहाय विशेषणांशस्य शीतस्पर्शान्यत्वस्योपाधित्व प्रसङ्गात् ।
द्वितीये "रूपान्यत्वे"ति, रूपान्यत्वविशिष्ट-सत्ताया रूपवृत्तित्व-
विशिष्ट-सत्तातो व्यावृत्तत्वादित्यभिप्रायेणेदं, उक्तरीत्या यथाश्रुत-
विशेषणत्वस्यापि तत्र सत्त्वादाह "तच्चे"ति, शीतस्पर्शान्यत्वस्या-
प्याश्रयतया साध्याभावविशिष्ट साधनाद्व्यावर्त्तकत्वस्य सत्त्वात्त-
दतिव्याप्ति-वारणाय "सामानाधिकरण्येने"ति । तेन सम्बन्धेन
तद्व्यावर्त्तकं हि तेन सम्बन्धेन तदवृत्त्येव भवतीति साध्याभाव-
विशिष्ट-साधनासामानाधिकरण्यं लभ्यम, तथा च तावन्मात्रे-
णैव सामञ्जस्ये व्यावर्त्तकत्वं व्यर्थं अव्याप्तिकरञ्चेत्याशयेनाह
"साध्याभावविशिष्टनिष्ठे"ति, साध्याभावविशिष्टनिष्ठ-साधन-
व्यापकीभूताभाव-प्रतियोगितावच्छेदकत्वं साध्य-विशिष्ट-निष्ठ

(१) विवक्षितुमिति च ।

(क) परमते विरोधभञ्जकत्वेन सत्त्वादिति भावः ।

(ख) उभयोपादाननिमित्तं । तथा च यथाश्रुतार्थं विहाय सामानाधिकरण्येनेदं दर्शयितुमिदमभिहितमिति भावः ।

साधनव्यापकतावच्छेदक-विशेषणं इत्यर्थः, तेन जातिमान् मेय-त्वादित्यादौ साध्याभावविशिष्टसाधनाधिकरणे आत्मादौ उपाधि-ता-घटक-समवायेण वृत्तेरप्रसिद्धावपि सत्त्वादावुपाधौ नाव्याप्तिः। अत्रोपाधिता-घटकसम्बन्धेन तादृशप्रतियोगित्वं ग्राह्यं, तेन धूमवान् वह्नेरित्यादौ संयोगेन धूमव्यापक-वह्न्यादेः साधनवत्-स्वपक्ष-विपक्ष-निष्ठ-समवायसम्बन्धावच्छिन्नाभाव-प्रतियोगित्वेऽपि नातिव्याप्तिः।

दीधितिः।

एवञ्च द्रव्यं सत्त्वादित्यत्र सत्ताया अभेदेऽपि गुण-कर्म्मान्यत्वे नाव्याप्तिः। नापि द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ। इत्यञ्च साधनताव-च्छेदकस्यानवच्छेदकत्व-द्योतनाय परं तद्भिन्नत्वमुक्तम्। न तु विवक्षितमेव तत् वैयर्थ्यात्। इदं दधि जन्यं वा दध्न इत्यादौ दधित्वाद्यव्याप्तेश्च।

दीधिति-प्रकाशः।

यथाश्रुत-त्यागे बीजमाह "एवञ्चेति"। "अभेदेऽपी"ति, द्रव्यत्वा-भावविशिष्ट-सत्तातो द्रव्यत्वविशिष्ट-सत्ताया अभेदेन व्यावर्त्तक-त्वासम्भवादितिभावः। साधनतावच्छेदकविशिष्टार्थकस्य भिन्न-पदस्य व्यावृत्तिमाह "नापीति"। नन्वेतावतैव सामञ्जस्ये साधनतावच्छेदकभिन्नेनेत्यस्य वैयर्थ्यमत आह "इत्यञ्चेति"। "तत्"-

साधनतावच्छेदकभिन्नत्वम् । प्रतिकूलमप्याह "इदं दधी"ति, साध्यञ्च नोपाधिरिति-मतेऽप्याह "जन्य"मिति, सामानाधिकरण्य-सम्बन्धेन जन्यत्वविशिष्टं दधि यत्र तत्रावश्यं दधित्वं, जन्यत्वाभाव-विशिष्टं दधि यत्र दधिमति परमाणौ तत्रावश्यं दधित्वाभाव इति क्रमेण विरोध-भञ्जके दधित्वादौ साधनतावच्छेदक भिन्नत्वाभावा-दव्याप्तिरित्यर्थः ।

दीधितिः ।

यद्वा प्रकृत-साधनतावच्छेदकानवच्छेद्य-प्रकृत-साधन-निष्ठ-साध्य-सम्बन्धितावच्छेदकत्वं पूर्व्व-दलार्थः । अनवच्छेदकत्वञ्च तस्य साध्याभाव-विशिष्ट-साधन-वृत्तितया तद्विशिष्ट-साधनस्य साध्याभाववद्वृत्तित्वेन साध्याभाववतस्तद्विशिष्टसाधनवत्त्वेनेति यावत् ।

दीधिति-प्रकाशः ।

साधनतावच्छेदक-भिन्नेनेति सार्थक्यं(१)कर्त्तुमाह "यद्वे"ति पूर्व्वकल्पे विशेषणमित्यत एव सद्धेतु निरासः । अत्र कल्पे तु पूर्व्व-दलेन सद्धेतु-निरासः, तद्दलस्य सद्धेतु साधारणतया तद्व्याख्यानात् । अतोऽनवच्छेद्यान्त-दलेनैव तद्वारणमिति दर्शयितुं "प्रकृते"ति सद्धेतौ च साधनतावच्छेदकावच्छिन्नैव साध्य-सम्बन्धितेति तन्नि-रासः । "तस्य" साधनतावच्छेदकस्य ।

(१) सार्थक्यमिति ग ।

ननु द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणकर्म्मान्यत्वविशिष्ट सत्तात्वस्य द्रव्यत्वाभावविशिष्ट-सत्ता-वृत्तित्वेनानवच्छेदकतया तत्र गुणकर्म्मान्यत्वादावुपाधि लक्षणस्यातिव्याप्तिरत आह "तद्विशिष्टेति" प्रकृतसाधनतावच्छेदकविशिष्ट-साधनस्येत्यर्थः। विशिष्टस्यानतिरिक्तत्वात् स एव दोष इत्यतः "साध्याभाववत" इति। अत्र च विशिष्टनिरूपिताधिकरणता न गुणादाविति न दोषः।

इदमत्रावधेयम्। यथा संयोगस्य शुद्धपुरुष-प्रतियोगिकस्य भूतलादौ सत्त्वेऽपि पुरुषे च दण्डाभावदशायां न दण्डविशिष्ट-पुरुष-प्रति-योगिकत्वं, तथा शुद्धसत्ता-प्रतियोगिक-समवायस्य गुणादौ सत्त्वेऽपि न गुणकर्म्मान्यत्वविशिष्ट-सत्ता-प्रतियोगिकत्वं तेन गुणादौ समवायेन न विशिष्ट-सत्तावत्त्वमिति।

यत्तु गुणादौ(१) गुणकर्म्मान्यत्वस्य परम्परया भाने गुणकर्म्मान्यत्वं सत्ता च सम्बन्धः, तेन गुणकर्म्मान्यत्व-विशिष्ट-सत्ताश्रयत्व-सत्त्वेऽपि गुणादौ न तादृश-धीरिति तन्तुच्छं गुणकर्म्मान्यत्वविशिष्ट सत्तावानिति-प्रतीतौ गुण-कर्म्मान्यत्वस्य विशेष्य विशेषण-घटित-परम्परासम्बन्धेनाप्रकारत्वात्, अतएव गुणकर्म्मान्यत्व-विशिष्टसत्तायाश्च समवायेन साध्यत्वं तत्र तत्रोक्तं समवायेन तदभावस्य प्रतिपादनञ्च सङ्गच्छते, इतरथा सर्व्वं दुर्घटं स्यात्।

---

(१) गुणादाविति नास्ति ग।

दीधितिः ।

एतेन धूमवान् मेयवत इत्यादौ मेयानवच्छेद्य-साध्य-सम्बन्धाप्रसिद्धिः, गुणवत् गुण-कर्म्मान्यत्त्वे सति जाति-मत्त्वादित्यादौ जातित्व-घटक-नित्यत्वादेर्वैयर्थ्येन विशिष्टस्यानवच्छेदकतया गुणकर्म्मान्यत्वादेरुपाधितापत्तिश्चेति निरस्तम् ।

दीधिति-प्रकाशः ।

"एतेन" तादृशानवच्छेदकत्व-निर्व्वचनेन । ननु प्रमेयत्व-रूपेण मेयानवच्छेद्यत्वं आर्द्रेन्धनज-वह्नित्वावच्छिन्न-सम्बन्धितायां प्रसिद्धमत आह "गुणव"दिति । अत्र गुणकर्म्मान्यत्व विशिष्टत्वं हेतुतावच्छेदकं, समवायेन हेतुता बोध्या । "जातित्व-घटकनित्य-त्वादे"रित्युपलक्षणं तद्घटकस्य सर्व्वस्यैव निष्प्रयोजनत्वात्, परन्तु यत्किञ्चिद्विशेष्यानिर्द्देशे तादृशविशिष्टत्वस्य सत्यन्तसमभिव्याहारेण प्रतिपादनासम्भव इति । यद्यपि गुणकर्म्मान्यत्वविशिष्ट-जातित्वा-वच्छेद्यत्वाप्रसिद्ध्या न तत्रातिव्याप्तिस्तथापि प्रकृत-साध्य-सम्बन्धि-तानवच्छेदकत्वं साधनतावच्छेदके वाच्यम् । अत एव साध्य-विशिष्टस्यैवेत्यादिना तथैव दर्शयिष्यति ।

दीधितिः ।

अवच्छेदकत्वञ्च सामानाधिकरण्येन । तथा च साध्य-विशिष्टस्य साध्य-सम्बन्धितानवच्छेदक-साधनता-

वच्छेदकावच्छिन्न-साधनस्य व्यापकत्वमर्थः पर्य्यवस्यति। उपदर्शित-शीतस्पर्शान्यत्वादि-वारणाय "तत्रेत्यादि"। "तत्र" साधनतावच्छेदक-विशिष्टे साधने, "विशेषणं" साध्य-शून्याद्यावृत्त्यौपयिकं, यत्सामानाधिकरण्य-विशिष्ट-प्रकृत-साधनवत्त्वं साध्याभाववति न वर्त्तत इति यावत्, साध्याभाव-विशिष्ट-प्रकृत-साधनाधिकरण-सामान्यात् साध्य--विशिष्ट--प्रकृत--साधनाधिकरण-सामान्यस्य व्यावर्त्तकमिति तु समुदयार्थ-निष्कर्ष इत्याहुः (१)।

दीधिति-प्रकाशः।

प्रागुक्तानुपपत्तेराह "अवच्छेदकत्वञ्चे"ति, प्रकृतसाधनस्य वारद्वय-प्रवेशे गौरवं तदुपेक्ष्य निष्कृष्टार्थमाह "तथाचे"ति। "साध्य-विशिष्टस्ये"ति साध्यतावच्छेदकावच्छिन्न-साध्यविशिष्टस्ये-त्यर्थः। तेन गुणकर्म्मान्यत्व-विशिष्ट-सत्तावान् जातेरित्यादौ गुण-कर्म्मान्यत्वस्य च, शुद्धसाध्य-विशिष्ट-साधनाव्यापकत्वेऽपि नाव्याप्तिः। अत एव साध्य-सम्बन्धितानवच्छेदकत्वमित्यत्रापि साध्यतावच्छेदकावच्छिन्न-साध्य-सम्बन्धितानवच्छेदकत्वं वाच्यम्, अन्यथा जातित्वस्य सत्ता-सम्बन्धितावच्छेदकत्वेन तत्रैवाव्याप्तिः। इदं द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ सर्व्वत्वादावव्याप्ति-वार-

(१) व्यावर्त्तकमित्याहुरिति हस्तलिखित-पुस्तके।

णाय "साधनतावच्छेदकावच्छिन्नस्ये"ति (१)। "उपदर्शिते"ति, निःस्नेहं स्पर्शादित्यादाविति भावः। शीत-पदस्य गुणि-परत्व-भ्रम-वारणाय "स्पर्श"ति ( गुण-परत्वे तु तस्योपाधित्वमिति भावः ) (२)। स्पर्शान्यत्वे यथाश्रुतं मिश्र-व्याख्याते तत्र विशेषणत्वञ्च (३) न सम्भवतीति तदपि दूषयितुं "शीते"ति। शीत-स्पर्शान्य-स्पर्शत्वे सम्बन्धितावच्छेदके शीत-स्पर्शान्यत्वस्य तादृश-विशेषणत्वेनातिव्याप्तेरनुद्धारादिति भावः। आदिना द्रव्यं सत्त्वा-दित्यादौ रूपान्यत्वादि-परिग्रहः।

द्रव्यं सत्त्वादित्यादौ साध्य-शून्ये गुणादौ सत्तायाः सत्त्वेन गुण-कर्म्मान्यत्वादेर्व्यावर्त्तकत्वासम्भवादाह "यत्सामानाधिकरण्ये"ति, गुण-कर्म्मान्यत्व-विशिष्ट-सत्तायामपि साध्य-शून्य-गुणादि-वृत्तित्वा-भावादाह "साध्याभाव-विशिष्टे"ति, द्रव्यं गुणान्यत्वे सति सत्त्वा-दित्यत्र कर्म्मान्यत्वेऽव्याप्ति वारणाय "प्रकृते"ति साधनताव-च्छेदकावच्छिन्नेत्यर्थः। द्रव्यं सत्त्वादित्यादौ कर्म्मान्यत्वस्य साध्याभाव विशिष्ट-सत्तावत्-कर्म्म-व्यापकत्वादतिव्याप्तिरत आह "सामान्या"दिति, द्रव्यं अन्यत्वे सति सत्त्वादित्यादौ स्पर्शवत्त्वे-ऽव्याप्ति-वारणाय द्वितीयदले "प्रकृते"ति पूर्व्वोक्तार्थकम्। द्रव्यं सत्त्वादित्यत्र घटत्वादावतिव्याप्ति-वारणाय "सामान्यस्ये"ति, इत्यञ्च साध्याभाव-विशिष्ट-प्रकृत-साधनाधिकरण-सामान्य-भेद-

(१) साधनतावच्छेदकावच्छिन्नस्येतीत्येवं युक्तम्।

(२) ( ) एतच्चिह्नितः पाठोनास्ति ग।

(३) स्पर्शान्यत्वे यथाश्रुत-मिश्र व्याख्यातञ्च विशेषणत्वमिति ख।

व्याप्यतावच्छेदकं यत् साध्य-विशिष्ट-प्रकृत-साधन-व्यापकता-वच्छेदकं तत्त्वं फलितार्थः। न तु साध्याभाव-विशिष्ट प्रकृत-साधनाधिकरणत्व-व्यापकी--भूताभाव-प्रतियोगितावच्छेदकं यत्-साध्य-विशिष्ट-साधन-व्यापकतावच्छेदकं तत्त्वमित्यर्थः। तथा सति पूर्व्वकल्पाभेदः स्यादिति।

---

दीधितिः।

केचित्तु विशेषणं सामानाधिकरण्यं, तथा च सामा-नाधिकरण्य-प्रत्यासत्त्या येनावच्छिद्यते, अवच्छेदकी भूत-सामानाधिकरण्य-प्रतियोगीति यावत्। अवच्छेद-कत्वञ्चेदमन्यूनानतिरिक्तवृत्तित्वम् गुरोरप्युपाधि-सामा-नाधिकरण्यस्याक्षतमेव। यद्यपि प्रत्यक्ष उद्भूत-रूप-वत्त्वादित्यत्र महान् अनित्य-द्रव्यत्वादित्यत्र महत्त्वस्य अनित्य-द्रव्यसमवेतत्वस्य च वक्ष्यमाण-लक्षणाक्रान्तस्यो-पाधेः सामानाधिकरण्यं साध्य-सामानाधिकरण्य-न्यू-नातिरिक्तवृत्ति, तथापि हेतुनिष्ठ-साध्य-सामानाधिकर-ण्यस्य हेतु-निष्ठं यत्सामानाधिकरण्यमन्यूनानतिरिक्त-वृत्ति तत्त्वं विवक्षितम्।

---

दीधिति-प्रकाशः।

सार्व्वभौम-मतमवलम्ब्याह "केचित्त्वि"ति। सामानाधिकरण्य-

प्रत्यासत्त्याऽवच्छेदकत्वे विवक्षणीये सामानाधिकरण्यस्य शब्दार्थतां दर्शयितुम् आह "विशेषणं सामानाधिकरण्य"मिति । उपाधेर्हेतुवृत्तित्वेन कथं तन्निष्ठं सम्बन्धितावच्छेदकत्वमत आह "तत्रापे"ति । सामानाधिकरण्य सम्बन्धेन विशिष्ट-बुद्धौ मानाभावाच्च तस्य प्रत्यासत्तित्वम् अत आह "अवच्छेदकीभूते"ति । धूमवान् वह्नेरित्यादौ आर्द्रेन्धनज-वह्नित्वमेव स्वरूप-सम्बन्ध-रूपमवच्छेदकं लाघवाच्च तु तादृश सामानाधिकरण्यं गौरवादित्यतोऽन्यथाऽवच्छेदकत्वं निर्व्वक्ति "अवच्छेदकत्वञ्चे"-मिति । प्रत्यक्षो रूपादित्यत्र महत्त्वस्य न संग्राह्यत्वं प्रत्यक्षत्वा-भाव-विशिष्ट-रूपवति चक्षुरादौ महत्त्वस्य सत्त्वेन वक्ष्यमाण-लक्षणाभावादत "उद्भूते"ति । प्रत्यक्ष योग्यत्वञ्च साध्यं, तेन प्रत्यक्षा-विषयस्याप्युद्भूतरूपवतो महत्त्व-सत्त्वेऽपि न क्षतिः ।

अत्र प्रत्यक्षत्व-सामानाधिकरण्यं गुणत्वादौ तत्र न महत्त्व-सामानाधिकरण्यं महत्त्व-सामानाधिकरण्यं गगनत्वादौ न तत्र प्रत्यक्षत्वादि सामानाधिकरण्यं "तथापी"त्यादौ हेतुतावच्छेदकाव-च्छिन्न-हेतुर्वाच्य इति तद्व्याप्तिं दर्शयितुमुदाहरणान्तरमाह "महानि"ति वक्ष्यमाण-लक्षणाक्रान्त्यर्थं हेता"वनित्ये"ति. तेन महत्त्व-विशिष्ट-द्रव्यत्ववति गगनादौ अनित्य समवेतत्वस्यासत्त्वेऽपि न क्षतिः । अत्र महत्त्व-सामानाधिकरण्यं गगनत्वादौ तत्र नानित्य-समवेतत्व-सामानाधिकरण्यम् अनित्य-समवेतत्व-सामा-नाधिकरण्यं गुणत्वादौ तत्र न महत्त्व-सामानाधिकरण्य-मिति । "तथापी"त्यादि हेतु-पद-द्वयं हेतुतावच्छेदकावच्छिन्न-

हेतु(१)परं, तेन महानानित्यद्रव्यत्वादित्यत्र शुद्ध-द्रव्यत्वे गगना-वच्छेदेन महत्त्व सामानाधिकरण्यवति तदवच्छेदेनानित्य-समवेत-त्व-सामानाधिकरण्य विरहेऽपि नाप्रसङ्गः। न वा इदं द्रव्यं कर्म्मा-न्यत्वे सति सत्त्वादित्यादौ शुद्ध सत्तायां कर्म्माद्यवच्छेदेन द्रव्यत्व-सामानाधिकरण्याभाववत्यां तदवच्छेदेन गुणान्यत्व-सामानाधि-करण्य-सत्त्वेऽपि गुणान्यत्वेऽव्याप्तमिति (२)। अत्र चोभयत्रानति-रिक्त-वृत्तितावच्छेदक एव हेतु-निष्ठत्वंनिवेश्यम्, न त्वन्यून-वृत्तितावच्छेदकेऽपि वैयर्थ्यादिति ध्येयम्।

दीधितिः।

सत्त्व-निष्ठ-द्रव्यत्व-सामानाधिकरण्यस्य च तन्निष्ठ-कर्म्मान्यत्व-सामानाधिकरण्यमतिरिक्तवृत्ति, गुणे तद-भावावच्छेदकावच्छिन्न-वृत्तिकत्वात्। पृथिवीत्वादि-सामानाधिकरण्यन्तु न्यूनवृत्ति, जलादौ तदवच्छेद-कावच्छिन्न-वृत्त्यभाव-प्रतियोगित्वात्। साध्य-व्यापकानां सर्व्वेतावुपाधित्व-वारणाय साधनतावच्छेदक-भिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः।

दीधिति-प्रकाशः।

द्रव्यं सत्त्वादित्यत्र कर्म्मान्यत्वे पृथिवीत्वादौ चातिप्रसङ्गं (३) निरस्यति "सत्त्वनिष्ठे"त्यादिना, "तन्निष्ठे"ति सत्तानिष्ठेत्यर्थः।

(१) हेत्विति नास्ति ग। (२) अव्याप्तिरिति ग। (३) चातिव्याप्तिप्रसङ्गमिति ग।

"अतिरिक्त-वृत्ती"ति सत्तानिष्ठद्रव्यत्व-सामानाधिकरण्यस्याति-रिक्त-वृत्तीत्यर्थः (१) । एवमुत्तरत्रापि । "तदभावो" द्रव्यत्व-सामानाधिकरण्याभावो, "जलादा"विति, "तदवच्छेदकं" द्रव्यत्व-सामानाधिकरण्यावच्छेदकं, जलाद्यवच्छेदेन सत्तायां द्रव्यत्व-सामानाधिकरण्यस्य सत्त्वात् पृथिवीत्वादि-सामानाधिकरण्यस्य चासत्त्वादित्यर्थः । "साध्यव्यापकानां" वह्न्यादि-व्यापकानां द्रव्यत्वादीनाम् । "सद्धेतौ" धूमादौ, धूमनिष्ठ-द्रव्यत्वादि-सामानाधिकरण्यस्य साधनतावच्छेदक-भिन्नात्मकत्वेऽपि स एव दोष इत्यतः "तदनवच्छेद्ये"ति, इदञ्च साध्य-सामानाधिकरण्ये विशेषणं, तेन नातिप्रसङ्गः । अत्र कल्पे प्रागुक्तरीत्या सामानाधिकरण्यस्य नाव्याप्यवृत्तित्वमित्यस्वरसः ।

तत्त्वचिन्तामणिः ।

**अत एव च तत्र (१) साधनाव्यापकत्वे सति साधनावच्छिन्न-साध्य-व्यापकत्वं लक्षणं ध्रुवं, व्यभिचारिणि साधने एकत्र साध्य-तदभावयोर्विरोधेनावच्छेदक-भेदं विना तदुभय-सम्बन्धाभावादवश्यं साध्य-सम्बन्धितावच्छेदक-रूप (२) मस्ति, तदेव च साधनावच्छिन्न-साध्य-व्यापकं साधनाव्यापकं तत्रोपाधिः ।**

(१) च तत्रेति सोसाइटिमुद्रितपुस्तके वर्त्तते, परन्तु काशिमुद्रितपुस्तके नास्ति ।
(२) रूपमिति सोसाइटीमुद्रितपुस्तके नास्ति ।

(१) वृत्तीत्यन्वय इति म ।

दीधितिः।

ननु सर्व्वत्र सोपाधौ सर्व्वेणोपाधिना साध्य-सम्बन्धोऽवच्छिद्यत इति न नियमः, अयं प्रत्यक्षो-मूर्त्त-त्वादित्यादावुद्भूत रूपवत्त्वादेस्तदसम्भवादित्याह "अत-एव च तत्रे"ति यत एवोद्भूतरूपवत्त्वादेर्न तथात्व-सम्भवः। अत एव तत्र तादृश-नियम-वादि-मते इदं लक्षणमिति।

दीधिति-प्रकाशः।

ननु घटः प्रत्यक्षो मूर्त्तत्वादित्यादौ व्यभिचारोन्नायकतया उद्भूत-रूपवत्त्वादेरुपाधित्वं सर्व्व-सम्मतमेव, तस्य च निरुक्तावच्छे-दकत्वाभावात् "स एव तत्र विशेषणमुपाधि"रिति नियमः कथमिति शङ्कते "नन्वि"ति। यत्किञ्चित् सोपाधौ सर्व्वेणो-पाधिना साध्य-सम्बन्धोऽवच्छिद्यत इति नियमोऽस्त्येवेति यथा शब्दवान् कालाकाशान्यतरत्वादित्यादावतः "सर्व्वत्रे"ति। सर्व्वत्र सोपाधौ साध्य-समनियतस्योपाधेर्निरुक्तावच्छेदकत्व-सम्भ-वादाह "सर्व्वेणे"ति। "तदसम्भवात्" प्रत्यक्षत्वाभाव विशिष्टमूर्त्त-त्ववति परमाणौ उद्भूत-रूपवत्त्वस्य सत्त्वेन निरुक्तावच्छेदकत्वासम्भ-वात्। शुद्ध साध्य-व्यापके साधनस्य न तद्व्याप्यतावच्छेदकत्व-सम्भवो(१)ऽतएवा(२)द्रेन्धनादिकमुपेक्ष्य यथाश्रुत-वक्ष्यमाण-लक्षणा-

(१) साधनस्य तद्व्याप्यतावच्छेदकत्वासम्भव इति ग।

(२) एवेति नास्ति ग।

तिव्याप्तिं दर्शयितुं साधनावच्छिन्न-साध्य-व्यापकमेवोदाहृतवान् । "तथात्व-सम्भवो" निरुक्त-साध्य-सम्बन्धितावच्छेदकत्व-सम्भवः, "तत्र" "उपाधौ" "तादृश-नियम-वादि-मते" निरुक्त-साध्य-सम्बन्धितावच्छेदक-नियम-वादि-मते । "इदं लक्षण"मिति तथा च लक्ष्यतावच्छेदकमिव लक्षणमपि तद्व्यावृत्तमेवेति, लक्ष्यतावच्छेदकेन तदसंग्रहो न दोषायेति भावः ।

---

दीधितिः ।

साधनाव्यापकत्वमिह साध्याभाव-विशिष्ट-साधन-व्यापकीभूताभाव-प्रतियोगित्वं तादृश-साधना-सामानाधिकरण्यमिह पर्य्यवसितम् । तेनोपदर्शितोद्भूत-रूपवत्त्व-व्युदासः ।

---

दीधिति-प्रकाशः ।

यथाश्रुत-लक्षणेनोद्भूत-रूपवत्त्वादेरवारणादाह । "साधना-व्यापकत्व"मिति । उद्भूत-रूपवत्त्वादेरपि द्वित्वावच्छिन्नाभावस्य तादृश साधन व्यापकत्वादाह "तादृश-साधन-सामानाधिकरण्य-मिह पर्य्यवसित"मिति । तथा च तादृश-साधन-व्यापकी-भूताभाव-प्रतियोगितावच्छेदकं यदुपाधितावच्छेदकं तद्वत्त्वमर्थः । तेन जातिमान् भावत्वादित्यादौ साध्याभाव-विशिष्ट साधनाधि-करणे आत्मादौ समवायेन वृत्तित्वाप्रसिद्धया सत्त्वादावुपाधौ

नाव्याप्तिः। पदद्वयाद्‌वृत्तिश्च पूर्व्वोक्ता ग्राह्या। "उपदर्शिते"ति। प्रत्यक्षो मूर्त्तत्वादित्यत्रोपदर्शितोद्भूतरूपवत्त्वादेरुपाधित्व-व्युदास इत्यर्थः।

---

दीधितिः।

अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादावति-व्याप्तिः, साध्य-व्यापकत्वेन विशेषणे च स श्यामो मित्रा-तनयत्वादित्यादौ शाक-पाकजत्वादाव-व्याप्ति-रत उक्तं "साधनावच्छिन्ने"त्यादि। साध्याभाव-सम्बन्धिनि विरुद्धस्य साध्य-सम्बन्धस्यावच्छेद-भेदं विना-नुपपद्यमानस्यावच्छेदकीभूयोपपादनमुपाधि-फलं। तद-समर्थानाञ्चोपदर्शितोद्भूत-रूपवत्त्वादीनां नोपाधिभावः सम्भवतीत्याह "व्यभिचारिणी"ति। व्यभिचारः स-पक्ष-विपक्ष-वृत्तित्वम्।

---

दीधिति प्रकाशः।

"प्रत्यक्षः" प्रत्यक्ष-स्वरूप-योग्यः तेन घटत्वादौ (१) न सत्यन्ता-सम्भवः। "साध्यव्यापकत्वेन" साध्यतावच्छेदकावच्छिन्न-साध्य-व्यापकत्वेन, (तेन गुणकर्मान्यत्वे सति सत्तावान् जातेरित्यादौ द्रव्यत्वे नाव्याप्तिः)(२)। ननु व्यभिचारोन्नयन-रूपोपाधि-फलस्यो-

---

(१) घटत्वादावित्ति नास्ति ख।

(२) ( ) एतच्चिह्नितपाठो नास्ति ख।

द्भूत-रूपादावपि सत्त्वेन तद्वारणमेव किमर्थमित्याशङ्कायां (१) मूलं योजयति"साध्याभावसम्बन्धिनी"त्यादिना,"सम्बन्धः" सामानाधिकरण्यम्। "तदसमर्थानां" तादृशोपपादानासमर्थानाम्। केवल-विपक्ष-गामिनि विरुद्धे साध्य-सम्बन्धासम्भवेन तादृश-विरोधासम्भवादित्यत आह "सपक्ष-विपक्षे"ति।

तत्त्वचिन्तामणिः।

अत एव व्यभिचारे चावश्यमुपाधिरिति सङ्गच्छते। अन्यथा व्यभिचारादेव अनागमकत्वेन व्यभिचारित्वेन न तदनुमानमप्रयोजकत्वात्।

दीधितिः।

अथ विपक्षगामित्व-रूप-व्यभिचारोन्नयनमेव उपाधि-फलं, तच्चोद्भूत-रूपादीनामप्यस्तीत्यत आह "अत-एवे"ति।

दीधिति-प्रकाशः।

"अतएवेती"ति "व्यभिचारे चावश्यमुपाधि"रिति ग्रन्थेन (२) व्यभिचारस्योपाधि-व्याप्यत्वं प्रदर्श्यते, तत् फलञ्च व्यभिचारिणोपाध्यनुमानं व्यभिचारोन्नयनस्य उपाधिफलत्वे व्यभिचारे ज्ञाते उपाध्यनुमानं व्यर्थमेव स्यादतो विरोध-भञ्जनमेवोपाधि-फलमिति मूलार्थः।

(१) इति शङ्कायामिति ग। (२) ग्रन्थेनेति नास्ति च।

तत्त्वचिन्तामणिः।

अत एव च (१) तस्य साध्य-सम्बन्धितावच्छेदक-रूप-लक्षणा व्याप्तिः साधनताभिमते चकास्तीति स्फटिके जवाकुसुमवदुपाधिरसावुच्यते (२)। लक्षणन्तु साध्य-साधन-सम्बन्ध-व्यापकत्वे सति साधनाव्यापकत्वं, विषम-व्याप्तस्तु नोपाधि-पद-वाच्यः, उपाधि-पद-(३)प्रवृत्तिनिमित्ताभावात्। दूषकता च तस्य व्यभिचारोन्नायकतया। न च व्यभिचारोन्नायकत्वमेवोपाधित्वं, अप्रयोजक-साध्य-व्यापक-व्यभिचारिणोऽप्युपाधितापत्तेरिति।

इति श्रीमद्-गङ्गेशोपाध्याय-विरचिते तत्त्वचिन्तामणौ अनुमानखण्डे अतएव-चतुष्टय-प्रकरणं समाप्तम्।

---

दीधितिः।

यत एव साध्य-सम्बन्धितावच्छेदक-रूपं व्याप्तिः,

---

(१) चकारो नास्ति हस्तलिखितपुस्तके।

(२) जवाकुसुमवदसावुपाधिरुच्यते इति हस्तलिखितपुस्तके।

(३) उपाधिपदेति नास्ति सोसाइटिलिखितपुस्तके।

सोपाधौ तु स्वाभाविकं हेतुतावच्छेदकं न साध्य-सम्ब-न्धितावच्छेदकम् ।

---

दीधिति-प्रकाशः ।

प्रभाकर-मतोपष्टम्भेन अतएव-त्रयं व्याख्यायाचार्य्य-मतोप-ष्टम्भेन चतुर्थमतएवेत्यादि-व्याचिख्यासुराह (१) "अत एवे"ति । "स्वाभाविकं" किञ्चिदनवच्छिन्नम् ।

---

दीधितिः ।

अत एव स्व-समीप-वर्त्तिनि स्व-समानाधि-करणे व्यभिचारिणि हेतौ स्व-निष्ठ-साध्य-सम्बन्धिता-वच्छेदक-रूप-लक्षण-व्याप्ति-संक्रामकतया साध्य-व्याप्य-स्यैव उपाधित्वमाचार्य्यैरनुमन्यत इत्याह "अत-एवे"ति ।

---

दीधिति-प्रकाशः ।

"अतएव" स्वाभाविक-हेतुतावच्छेदकस्य साध्य-सम्बन्धितावच्छेदकत्वादेव । अन्यथा स्वाभाविक-हेतुतावच्छेदकस्य साध्य-सम्ब-न्धितावच्छेदकत्वे तत्र विशेषणतया साध्य-सम्बन्धितावच्छेदकत्व-प्रतीत्युपपादकत्व रूपं, साध्य-सम्बन्धि-तावच्छेदकत्व-भ्रम-जन-कत्व-रूपं वा तत् संक्रामकत्वमनुपपन्नमेव स्यादिति भावस्तूपष्टम्भो-

---

(१) व्याचिख्यासुरावष्टे इति च ।

पक्षधर्मतया साध्यसम्बन्धितावच्छेदक-लक्षणा व्याप्तिरित्यस्योप-योगः। उपाधिपद-निविष्टस्य उपपदस्यार्थमाह "स्वसमीपे"ति। सामीप्यं नात्र संयुक्तसंयोगाल्पीयस्त्वरूप(५)मित्याह "स्वसमाना-धिकरणे"ति। "संक्रामकतये"ति स्वविशिष्ट-हेतुतावच्छेदकस्य साध्य-सम्बन्धितावच्छेदकत्व-बुद्ध्युत्पादनेनोपाधेर्हेतौ साध्य-सम्बन्धि-तावच्छेदकत्व-संक्रामकत्वमिति भावः। "साध्य-व्याप्यस्यैवे"ति एवकारेण विषम-व्यापक-निरासः। विषम-व्यापके स्वनिष्ठ-साध्य-व्याप्तेरभावेन तत्संक्रामकत्वायोगादिति भावः।

---

दीधितिः।

साध्य-न्यूनवृत्तौ उपाधि-व्यवहारं दूषणौपयिक-रूपस्यावश्यं वाच्यतया उपाधि-पदस्य योगरूढ़त्व-व्यवस्थापनेन निराकुरुते "लक्षणन्त्वि"ति। "लक्षणं" दूषणौपयिकं रूपम्। "साध्ये"ति, अत्र साध्य-व्यापकमात्रं विवक्षितं, तावतैव साधनवति तद्व्यतिरेकेण साध्य-व्यतिरेकानुमान-सम्भवात्। साधनवति व्यापक-निवृत्त्या साध्य-साधन-सम्बन्ध-निवृत्ति-सिद्धौ अर्थात् साध्य-निवृत्तिः सिध्यतीति प्रकारान्तर-प्रदर्शनाय परं तथाविधोक्तिः। रूढ्या न्यून-वृत्तौ उपाधित्व-व्यवहारं निरस्य योगेनाधिक-वृत्तौ तन्निरस्यति

---

(५) रूपमित्यति नास्ति ग।

"विषमे"ति, प्रवृत्तिनिमित्तं यौगिकं व्यभिचारोन्नायकत्वमेवेत्येवकारेण योगार्थानादरं सूचयति। "उपाधित्वं" उपाधिपद-प्रवृत्तिनिमित्तम्। "उपाधिता" उपाधि-पद-वाच्यता।

---

दीधिति प्रकाशः।

"साध्य-न्यूनवृत्ती" साध्याव्यापके साध्य-व्याप्ये वा। "वाच्यतये"ति "उपाधि पदस्ये"ति मध्यस्थितमनुषज्यते। समव्याप्तस्यैव लक्ष्यत्वेन विषमव्याप्त-साधारणत्वाभावास्य लक्षणत्वं घटत इत्यत आह "दूषणोपयिक"मिति। "साधनवतीति" साध्य व्यभिचारोन्नयनमुपपादयितुम्। "तदतिरेकेण" साध्य-व्यापक-व्यतिरेकेण, तर्हि सम्बन्ध-व्यापकत्वोत्कीर्तनं किमर्थं अत आह "साधनवती"ति। "साधनवति" साधनवत्त्वेन ज्ञाते, अर्थात् साधनवत्त्वे सति साध्य-साधन-सम्बन्धाभावात्। "प्रकारान्तरं" उपाध्यभावातिरिक्तेन व्यभिचारानुमानप्रकारम्। "परं तथाविधोऽपि"रिति न तु लक्षणे तथैव निवेश इति भावः। "त"मुपाधि-व्यवहारम्।

विषम-व्याप्तेऽपि रूढि-प्रवृत्ति-निमित्त-सत्त्वादाह "यौगिक"मिति। "योगार्थानादर"मिति, तथा च विषमव्याप्तेऽप्युपाधिपदं मुख्यमेवेति भावः। अप्रयोजकत्वादावपि व्यभिचारोन्नायकत्व-रूपोपाधित्व सत्त्वेनेष्टापत्त्यापादानं न घटते इत्यतो व्याचष्टे "उपाधि-पदेति"। अप्रयोजकत्वादावुपाधिपदाप्रयोगान्नेष्टापत्तिरिति भावः।

दीधितिः ।

योगादरे तु लाघवात् साध्य-व्यापकतामात्रे रूढ़िरिति भावः ।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां दीधितौ
अनुमानखण्डे अतएव-चतुष्टय-
प्रकरणं समाप्तम् ।

---

दीधिति-प्रकाशः ।

ननु योगादरेऽपि (१) व्यभिचारोन्नायकत्वमेव रूढ़ि-विषयतावच्छेदकत्वमस्त्वत आह "योगे"ति । "लाघवा"दिति साध्य-व्यभिचारानुमापक-कोटि-प्रविष्टत्वापेक्षया साध्य-व्यापकत्वस्य लघुत्वादिति भावः । "साध्य-व्यापकतामात्र" इति, स्व-निष्ठ-व्याप्ति-संक्रामकतयैव साधना-व्यापकत्व-लाभा"मात्र" इति ।

इति श्रीमद्-भवानन्दीये तत्त्वचिन्तामणि-दीधिति-
प्रकाशे अनुमानखण्डे अतएव-चतुष्टय-
प्रकरण-व्याख्या समाप्ता ।

---

(१) योगाभिव्याहारेऽपीति ख ।

## अथ व्याप्ति-ग्रहोपाय-प्रकरणे

### तत्त्वचिन्तामणिः ।

सेयं व्याप्तिर्न भूयोदर्शन-गम्या, दर्शनानां प्रत्येक मर्हेतुत्वात्, आशु-विनाशिनां क्रमिकाणां मेलका-भावात् । न च तावद्दर्शनजन्य-संस्कारा इन्द्रिय-सह-कृता व्याप्ति-धी-हेतवः, प्रत्यभिज्ञायामिन्द्रियस्य तथात्व-कल्पनादिति वाच्यम् । समान-विषये स्मरणे प्रत्यभि-ज्ञाने च संस्कारो हेतुरतः कथं संस्कारेण व्याप्ति-ज्ञानं जन्येत अन्यथातिप्रसङ्गः ।

---

## अथ व्याप्ति-ग्रहोपाय-प्रकरणे

### दीधितिः ।

व्याप्ति-स्वरूपं निरूप्य परमत-निराकरण-पूर्व्वकं स्व-मतेन तद्-ग्रहोपायमभिधातुं प्रथमं प्राभाकर-मत-मुपदर्शयति "सेय"मित्यादिना । दर्शनानां प्रत्येकं वा हेतुत्वं मिलितानां वा ? मिलनमपि स्वरूपतो व्यापा-रतो वा? आद्ये "दर्शनाना"मिति। द्वितीये "आशु" ति । क्रमिकाणामपि स्थिराणामस्थिरानामपि सहोत्-पन्नानां मिलनमस्तीत्युभयमुपात्तम् । तृतीयमाशङ्क्य निराकुरुते "न चे"ति, व्यापक-साध्य-सामानाधिकर-

व्याप्तिकायां व्याप्तौ साध्य-सामानाधिकरण्यांशस्य प्रथममेव गृहीतत्वात् अगृहीत-व्यापकत्वांश-ग्रहे सहचार दर्शन-जन्य-संस्काराणां हेतुत्वं वाच्यम्। तच्च न सम्भवति भिन्न-विषयकत्वादित्याह "समाने"ति। भ्रम-स्त्वगृहीत-भेदं ज्ञान-द्वयं न तु वैशिष्ट्यावगाहीति भावः।

---

अथ व्याप्तिग्रहोपाय-प्रकरणे दीधिति-प्रकाशः।

व्याप्ति-ग्रहोपाये कथनीये प्रथमं प्राभाकर-मतोपन्यासं सङ्गमयन्नाह "व्याप्ती"ति (क)। (ख) प्रत्येक-पद-स्वरसाहिकल्प-

---

(क) मूले चेदमित्यादि। ननु तत्र साध्ये भूयोदर्शनग्राह्यत्वं किं त्रित्ववद्दर्शन-त्वावच्छिन्नजनकतानिरूपितजन्यतायां विषयतयावच्छेदकत्वं, त्रित्ववद्दर्शननिष्ठ-फलोपधायकतायां निरूपकीभूतप्रकृतविषयत्वं वा, त्रित्ववद्दर्शननिष्ठसहचारदर्शन-त्वावच्छिन्नजनकतानिरूपितजन्यतायां विषयतयावच्छेदकत्वं वा? नाद्यः, तादृशजनकत्वाप्रसिद्धेः। न द्वितीयः, तादृशत्रित्वपर्याप्त्यधिकरणदर्शनस्य फलो-पधायकत्वाप्रसिद्धेः। न तृतीयः, एतादृश-भूयोदर्शनगम्यत्वस्य सर्वैरेवाङ्गीकृतत्वेन बाधात्। किञ्च दर्शनानां प्रत्येकमहेतुत्वरूपहेतोः पश्चादुक्ततया स्वरूपासिद्धिः। न च सहचारदर्शननिष्ठहेतुतायां निरूपकतानवच्छेदकत्वं तदर्थ इति वाच्यम्। तादृशहेतुतायाः सर्व्वसिद्धत्वेन स्वरूपासिद्धितादवस्थ्यात्। न च भूयोदर्शननिष्ठ-फलोपधायकतानिरूपकप्रकृतविषयत्वं तदर्थः, तादृश-प्रत्येक-दर्शन-निष्ठफलोपधाय-कतायां व्याप्तिप्रत्यक्षस्य निरूपकत्वात्तादृशसाध्याप्रसिद्धेरिति। चेन्नैवं प्राभाकरमते उपाध्यभावो व्याप्तिः, स च केवलाधिकरण-स्वरूपो भूमाद्यालयः प्रथमदर्शनेन गृह्यते। तथाच व्याप्तौ साध्यसामानाधिकरण्यविषयिताव्यापकविषयिताप्रति-योगित्वं साध्यं चेत्तत्र एतद्दर्शननिष्ठफलोपधायकतानिरूपकत्व तद्दर्शननिष्ठफलोप-धायकता-निरूपकत्व-तद्दर्शननिष्ठ-फलोपधायकतानिरूपकत्वेतत्त्रितयावच्छिन्नाभाव-

इयमाह "दर्शनाना"मिति। "प्रत्येकं" दर्शनान्तर-निरपेक्षेण प्रातिस्विक-रूपेण तत्तद्दर्शनत्वादिना। "हेतुत्वं" फलोपधायकत्वम्। ननु भूयोदर्शन-हेतुत्वे खण्डनीये "न चेत्यादिना" तज्जनित-संस्कार-हेतुत्व-खण्डनमकृतमतस्तत् सङ्गमयितुं विकल्पयति "मिलनमपी"ति। मिलनम् (ग) एकक्षणावस्थायित्वम्। "स्वरूपतः" स्वरूपाणां "व्यापारतः" तद्व्यापाराणाम्। "तृतीयं" व्यापारतो मिलनम्। वह्नि-सहचरितो धूम इत्याकारक-सहचार-दर्शनज-संस्कारस्य धूम-व्यापक-वह्निसमानाधिकरणो धूम इत्याकारकं व्याप्तिज्ञानं समान-विशेष्यकं भवत्येवातो मूलं सङ्गमयति "व्यापके"त्यादिना। "प्रथममेव" तादृश-संस्कार-मिलनात् पूर्व्वमेव। "भिन्न-विषयत्वात्" साध्य-विशेष्यक-व्यापकत्व-प्रकारक-ग्रहमपेक्ष्य धूम-विशेष्यक-साध्य-सहचार-प्रकारक-संस्कारस्य भिन्न-विशेष्यत्वात् (१)। ननु शुक्ति-विशेष्यक-रज-

(१) विषयकत्वादिति ग।

व्याप्यविषयितानिरूपकत्वादिति। अथवा पर्य्याप्तिसम्बन्धेन निखिलदर्शनहेतुत्व-व्याप्तिप्रकारनिरूपितत्वे तदुभयाभाववति वा फलोपधायकता तन्निरूपकीभूतप्रत्य-विषयत्वं वाच्यं, पर्य्याप्तिसम्बन्धेन निखिलदर्शनाहितफलोपधायकतानिरूपकीभूत-ज्ञानविषयत्वमिति निष्कृष्टार्थः, चेत्तन्न पूर्व्वमिति दिक्।

(ख) ५४४ पृः, दर्शनानामित्यादेर्हेतुत्वपरत्वेन व्याख्यानसम्भवे दीधितौ विकल्पेन व्याख्यानाकृतेराह "प्रत्येकपद-स्वरसा"दिति। दर्शनानां प्रत्येकमहेतुत्वे "चापि" त्यादेर्हेतुत्वावश्यकत्वादिति भावः।

(ग) यद्येकानुवृत्तिविशेषविषयकस्वरूपमिलनं व्याप्तिनिश्चायकत्वेन तत्राह "एकक्षणे"ति एकाधिकरणावच्छेदेनेत्यादि।

तत्व-प्रकारक-भ्रमे रजत-विशेष्यक-रजतत्व-प्रकारक-संस्कारस्य भिन्न विशेष्यकस्यापि हेतुत्वं (क) दृष्टमेवेत्यत आह "भ्रमस्त्वि"ति। ननु ज्ञान-द्वयं (१) भ्रम इत्यनुपपन्नं भेदाग्रह-कालीन-शुक्ति-रजत-गोचर-समूहालम्बनस्य धर्म्म-धर्म्मि-भावानवगाहनेऽपि तन्मते भ्रमत्वादत आह "नत्वि"ति, तथा च वैशिष्ट्यावगाहित्व-व्यवच्छेदे नियमो, न तु ज्ञान-द्वयत्वेऽपीति भावः। रजत-भ्रमस्य शुक्तौ रजतत्व-वैशिष्ट्यावगाहित्वेऽपि भिन्न-विशेष्यकत्वं (ख) स्यादत-स्तन्निराकृतमिति मन्तव्यम्।

(१) द्वयमेवेति ग।

(क) तथाच व्यभिचारेणोक्तनियमस्यैवासिद्ध्या तद्भङ्गभयेन सहचारसंस्कारस्य व्यापकत्व-प्रत्यक्षे हेतुतानिरासोऽसङ्गत इति भावः।

(ख) तथाचोक्तव्यभिचारेणोक्तनियम एव न सिध्येदिति शेषः। नन्वत्र कोदृशो नियमः। न तावत् तत्संस्कारजन्य-ज्ञानविषयतायास्तत्संस्कारविषयताव्याप्यत्व-मिति नियमः, रजतविषयक-घट-विषयक-संस्कारद्वयजन्ये रजतं घटश्चेति समूहालम्बने व्यभिचारात्। नापि संस्कारजन्य ज्ञानीय-रजतत्व-प्रकारता-निरूपितविषयताया रजतत्व-प्रकारतानिरूपित-तत्संस्कारीय-विषयता व्याप्यत्वमिति नियमः, एकरजतविशेष्यक रजतत्व प्रकारकापर-रजतविशेष्यक-रजतत्व-प्रकारक-संस्कारद्वयजन्ये इदं रजतमिदं रजतमिति समूहालम्बने व्यभिचारात्। किन्तु तत्संस्कारनिष्ठ-जनकतानिरूपित-ज्ञाननिष्ठ-जन्यतावच्छेदक-विषयतायास्तत्संस्कारीय-विषयताव्याप्यत्वमित्येव नियमो वाच्यस्तथाच भ्रमस्य विशिष्टज्ञानत्वेऽपि व्यभिचाराभावेन व्यभिचारभिया "भ्रमस्त्वि"त्याद्युक्तिरसङ्गतैवेति। येन संस्कारस्य स्वविशेष्य-विशेष्यक-ज्ञानाजनकत्वनियमेन भ्रमस्य विशिष्टज्ञानत्वे तादृश-नियमे व्यभिचार इत्याशयेन "भ्रमस्त्वि"त्यादि-ग्रन्थसङ्गतेः। न च रजतं घटश्चेति समूहालम्बने व्यभिचारेण कथं तादृश-नियम इति वाच्यम्। तादृश-समूहालम्बना-नङ्गीकारात्। अतएव मिश्रैरन्यथा-ख्यातौ तथैवोक्तम्। न च संस्कारस्योपना-यकत्वमते सुरभिचन्दनमित्याद्युपनीतभाने व्यभिचारात्तादृश-नियमस्याप इति

वाच्यम् । तत्रापि विशिष्ट-ज्ञानत्वानुपगमेन व्यभिचाराभावात् । अथ स एवायं घट इति प्रत्यभिज्ञायां व्यभिचारो दुर्वारः । न च प्रत्यभिज्ञाया अपि विशिष्ट-ज्ञानत्वानुपगमान्न दोष इति वाच्यम् । तस्याः स्थैर्यसाधकत्वानुरोधेन विशिष्ट-ज्ञानत्वस्यावश्यकत्वात् । अतएव मूले पृथक्-प्रत्यभिज्ञोक्तेति चेन्न । तस्यास्तत्ताविशिष्टविशेष्यक-संस्कारजन्यत्वोपगमेन तत्ता-गोचरसंस्काराजन्यतया व्यभिचाराभावात् ।

केचित्तु नन्वत्र किं यो जन्य-ज्ञानीय-प्रकारता-निरूपित-विशेष्यताश्रयः स स्वीय-प्रकारता-निरूपित-विशेष्यताश्रय इति नियमः, किम्वा स्वीय-प्रकारता-निरूपित विशेष्यताश्रयो यः स स्वजन्य-ज्ञानीय-प्रकारतानिरूपितविशेष्यताश्रय इति नियमः ? तत्र नाद्यः सुरभिचन्दनमित्यादौ सौरभसंस्कारे व्यभिचारात्, तज्जन्यज्ञानीय-प्रकारतानिरूपित विशेष्यताश्रये चन्दने तदीय प्रकारतानिरूपित-विशेष्यताश्रयत्वाभावात् । नापि द्वितीयः तत्रैव व्यभिचारात् । तादृश संस्कारीय-प्रकारता-निरूपित-विशेष्यताश्रये सौरभे तज्जन्य ज्ञानीय-प्रकारतानिरूपित-विशेष्यताश्रयत्वाभावात् । अथ स्वनिष्ठ-जनकतानिरूपित-जन्यतावच्छेदक-विषयताश्रयो यः स स्वीयविषयताश्रय इति नियमस्तथाच स्वनिष्ठ जनकता-निरूपित-जन्यतावच्छेदकविषयताश्रये सौरभे स्वीय-विषयताश्रयत्व सत्त्वात्, गोत्वसंस्कारे व्यभिचार इति चेन्न । शुक्तौ रजतमिति भ्रमस्थलेऽपि संस्कारीयजन्यतावच्छेदक-विषयतापर्य्याप्त्यधिकरण—रजतत्व-संस्कारीय-विषयतापर्य्याप्त्यधिकरणत्व-सत्त्वेन उक्तनियमे व्यभिचाराभावात् "भ्रमश्चे"त्यादि-ग्रन्थानुत्थानादिति । चेत्तैवं तन्मते प्रत्यभिज्ञान-भ्रमात्मकोपनीतभानातिरिक्तस्थले संस्कारस्य प्रत्यक्षजनकत्वाभावेन तदुपनीतभानत्वावच्छिन्नं प्रति तद्गोचर-संस्कारस्य हेतुत्वं तत्ता-विशिष्टबुद्धित्वावच्छिन्नं प्रति तत्ताविशिष्टविशेष्यक-संस्कारस्य हेतुत्वमितिरीत्या कार्य्यकारणभाव-द्वयं, तथाचैवं नियमः स्वीय प्रकारतानिरूपितविशेष्यताश्रयो यः स तज्जन्य-ज्ञानीय-प्रकारतानिरूपित-विशेष्यताश्रय इति । एवञ्च भ्रमस्थले व्यभिचार इत्यतो "भ्रमश्चे"ति । यदि च तत्र घटपटोभयगोचर-संस्कारे उद्बोधकवशात् केवलं घटस्मृतिर्जाता तत्र स्वीय-प्रकारतानिरूपित-विशेष्यताश्रये पटे तज्जन्य-ज्ञानीय-प्रकारतानिरूपित-विशेष्यताश्रयत्वाभावात्तादृशसंस्कारे व्यभिचार इति विभाव्यते तदा संस्कारस्य स्वविषय-विषयकज्ञानजनकत्वनियमोऽभ्युपेयते, इदन्तु भ्रमात्मकोपनीतभानातिरिक्तस्थले ज्ञानस्योपनायकत्वमते न तु स्वविषयक-

तत्त्वचिन्तामणिः।

किञ्च सम्बन्ध-भूयोदर्शनम्? भूयःसु स्थानेषु दर्शनं (१) भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा, एकत्र रूप-रसयोर्द्रव्यत्व-घटत्वयोश्च व्याप्ति-ग्रहात्। एकत्रैव धारावाहिके तत्री-प्रसङ्गात्। भूयस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च।

अपि च पार्थिवत्व-लौहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात्। तर्क-सहकृतं तथेति चेत्तर्हि सहचार-दर्शन-व्यभिचारादर्शन(२)सहकृतः स एव व्याप्ति-ग्राहकोऽस्तु आवश्यकत्वात् किं भूयोदर्शनेन। न च तेन विना तर्क एव नावतरति, प्रथम-दर्शने व्युत्पन्नस्य तर्क-सम्भवात्।

---

दीधितिः।

"न तथा" न व्याप्ति-ग्राहकं, व्यभिचारादर्शनं

---

(१) दर्शनमिति नास्ति सोसाइटीमुद्रित पुस्तके।

(२) व्यभिचारादर्शनेति नास्ति सोसाइटीमुद्रित पुस्तके।

---

स्येनोपनायकत्वमते। तथाच सुरभिचन्दनमित्यत्र प्रत्यभिज्ञानस्थले च स्मृतेरेकोप-नायकत्वं न संस्कारस्येति न तत्र व्यभिचारः। प्रत्येक-गोचर-संस्कारादपि न समूहालम्बन-स्मरणं, समूहालम्बन-संस्कारेणैव समूहालम्बन-स्मरणाभ्युपगमादिति न समूहसंस्कारेऽपि व्यभिचारः। एवं सति [illegible] [illegible]-[illegible]-संस्कारे व्यभिचार इत्यतो "[illegible]"ति।

व्यापारतया सहकारीति व्यभिचारादर्शन-सहचार-दर्शन-सहकृतस्तर्क एव व्याप्ति-ग्राहकः भूयोदर्शनन्तु क्वचित्तर्क-प्रवृत्तावुपयुज्यत इति निर्गलितम्।

---

दीधिति-प्रकाशः।

अग्रे तथेत्यस्यान्यथापि सत्त्वा"न तथे"ति पाठं गृह्णन् व्याचष्टे "न तथे"ति। भूयो-दर्शनत्वाभावे साध्ये बाध इत्यतो व्याचष्टे "न व्याप्तिग्राहक"मिति, व्यभिचारादर्शनस्य हेतुत्वे तेनैव तर्कोऽन्यथा-सिद्ध इत्यतो व्याचष्टे "व्यापारतये"ति, व्यापारेण च व्यापारिणो नान्यथा-सिद्धिरिति भावः (क)। तर्कस्य हेतुत्वे भूयो-दर्शनस्योपयोगित्वं दर्शयति "क्वचिदि"ति।

---

तत्त्वचिन्तामणिः।

न चैवमेवास्तु, तर्कस्य व्याप्ति-ग्रह-मूलकत्वेनानवस्थानात्। जातमात्रस्य प्रवृत्ति-निवृत्ति-हेत्वनुमिति-जनक-व्याप्ति-ज्ञानं तर्कं वेनैवातो(१) नानवस्थेति चेत्, तर्हि व्यभिचारात् सोऽपि न व्याप्ति-ग्रहे हेतुः। न च तद्ग्रहावान्तरजातिरस्ति, सामान्य-प्रत्यासत्त्या-सर्व्वोप-

---

(१) विनैवेति क्वचित् पाठः।

---

(क) न च व्यभिचारादर्शनस्य अभाव-घटित-व्यापारत्वापत्तिः इति वाच्यम्। अत्र योग-क्षेम-साधारण्य-अभावस्य विवक्षितत्वात्।

संहारादविनाभाव-ग्रहः सामान्य-रूपता च सकृ-द्दर्शन-गम्येति भूयो-दर्शनापेक्षेति चेन्न, सामान्यस्य हि प्रत्यासत्तित्वं लाघवात्, न तु सामान्यतया ज्ञातस्य तदनभ्युपगमाच्च। न च काकतालीयत्वादि-शङ्का-व्युदासार्थं द्वितीयादि-दर्शनापेक्षेति वाच्यम् द्वितीयादि-दर्शनेऽपि शङ्का-तादवस्थ्यात्।

दीधितिः।

नैयायिक-मतमाशङ्क्य निराचष्टे "न चैव"मिति। "ज्ञातमात्रस्ये"ति, तथा च तन्मूलको व्याप्त्यन्तर-ग्राहक-तर्कावतार इति भावः। "तर्ही"ति, न च व्याप्ति-प्रत्यक्षं प्रति तर्को हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः विनानुभवं स्मरणस्यायोगात्। न च जन्मान्तरीनः सः, जन्मान्तरेऽपि पर्य्यनुयोग-तादवस्थ्यात्। अनादित्वेन च परिहारः परतो विचारयिष्यते (१)। "न चे"ति, मानाभावात् तर्कस्य च हेतुत्वासिद्धेः। यदि चागृहीतस्यागृहीत-पूरोवर्त्ति-संसर्गस्य वा प्रत्यासत्तित्वेऽतिप्रसङ्गस्तदा पूरोवर्त्तिनि तद्ग्रहो मृग्यतां न तु सामान्यत्वेनेत्याह। "न त्वि"ति।

(१) विशेषविभागे इति कलिकाताविहित पुस्तके।

दीधिति-प्रकाशः ।

"व्याप्त्यन्तरे"ति । यद्यपि इष्ट-साधनत्व-निरूपित स्तन-पानत्व-निष्ठ-व्याप्तेर्वह्नि-धूम-व्याप्ति-ग्राहक-तर्क-मूलत्वे मानाभाव-स्तथापि तद्व्याप्ति-ज्ञानमेव सर्व्वत्र तर्के मूलमिति भ्रान्तस्यैवेय-माशङ्केति भावः । अकारणक-कार्य्योत्पत्ति-शङ्का-निरास-द्वारा वह्नि-धूम-व्याप्ति-ग्राहक-तर्केऽप्यस्यो(क)पयोगित्वमित्यप्याहुः (ख) ।

केचित्तु यथा जातमात्रस्य व्याप्तिज्ञानं तर्कं विना भवति तथा वह्नि-धूम-व्याप्ति-ग्राहक-तर्क-मूल-व्याप्ति-ज्ञानमपि तर्कं विना भविष्यतीति प्रतिबन्धि-विषयामूलं योजयन्तीति । "तत्तु" जात-मात्रस्य तादृश-व्याप्ति-ज्ञानन्तु । "विना अनुभव"मिति, तथा च तदनुभवः प्रत्यक्षात्मक एव वाच्यः । शाब्दबोधादेः पदार्थ-स्मृत्यादि-पूर्व्वकत्वात् एवञ्च तत्रैव तर्कस्य व्यभिचार इति भावः । "सः" तादृश-व्याप्त्यनुभवः । "पर्य्यनुयोग" इति अन्यान्तरेपि तर्कापेक्षा-यामनवस्था तदनपेक्षायां व्यभिचार इत्यर्थः । "अनादित्वेने"ति अनाद्यनवस्था बीजाङ्कुरवन्न दोषायेत्यर्थः (१) । "परत" इति यत्र तर्के व्याप्त्यनुभवो मूलमित्यादिना ग्रन्थकारेणैव तत्स्याश्रयणीय-त्वादिति भावः । अवान्तर-जात्यभावे हेतोरदर्शनात्तं पूरयति "मानाभावादि"ति । तर्क-जन्यतावच्छेदकतयैव तादृश जातिः

---

(१) न दोषायेति भाव इति ग ।

---

(क) इष्टसाधनत्व-निरूपितस्तनपानत्व-निष्ठ-व्याप्तिग्राहकस्येत्यर्थः ।

(ख) अकारणकजूत्पत्तौ शक्तिव्याघातादेराकारणककार्य्योत्पत्तिशङ्का-निरासकस्याप्यन्यतरस्य "आहु"रित्यनेन सूचितः ।

स्यादत आह "तर्कस्य चे"ति। "न तु सामान्यतये"त्यस्य व्यावर्त्यं दर्शयितुमाह "यदि चे"ति। पूरोवर्त्तिनि शुक्तित्व-ग्रह-प्रतिबन्धक-दोष-सत्त्व-काले शुक्तित्व-स्मृतिमतोऽपि शुक्तित्व सामान्य-लक्षणया ज्ञानाभावादाह "अगृहीत-पूरोवर्त्ती"ति। "तद्‌ग्रहः" सामान्य-ग्रहः। ( मूले काकतालीयत्व-शङ्का व्यभिचारशङ्का ) (१)।

---

तत्त्वचिन्तामणिः।

नन्वनौपाधिकत्व-ज्ञानं व्याप्ति-ज्ञाने हेतुः तद्देश-काल -तत्रावस्थित--घटादीनामुपाधित्व-शङ्का-निरासः कस्यचित् साधन-व्यापकत्व-ज्ञानेन कस्यचित् साध्या-व्यापकत्व-ज्ञानेन स्यात्। तच्च भूयोदर्शनं विना नावतरतीति चेन्न अयोग्योपाधि-व्यतिरेकस्यानुमाना-धीन-ज्ञानत्वेनानवस्थापातात्।

---

दीधितिः :

साध्याव्यापकत्वं साध्य–सामानाधिकरण्याभाव-प्रतियोगित्वं, तद्‌ग्रहस्य साध्याधिकरणैकव्यक्ति-वृत्तितया गृह्यमाणस्य तादृश-व्यक्त्यन्तर-ग्रहं विना न सम्भवति इति भूयोदर्शनापेक्षा।

---

(१) ( ) एतच्चिह्नितः पाठो नास्ति ख।

दीधिति प्रकाशः।

साध्याव्यापकत्व-ज्ञाने भूयोदर्शनस्योपयोगं दर्शयति "साध्या-व्यापकत्व"मित्यादिना "तादृशे"ति"। स्वानधिकरण-साध्याधि-करण व्यक्त्यन्तरेत्यर्थः।

---

तत्त्वचिन्तामणिः।

अथ साध्य-साधन-सहचरित-धर्मान्तराणामुपाधि-त्व-संशये न व्याप्ति-ग्रहः। अतस्तेषामनुपाधित्व-ज्ञानं भूयोदर्शनाधीन-साध्याव्यापकत्व-ज्ञाने सतीत्येतदर्थं भूयो-दर्शनापेक्षा, अत एव यावता दर्शनेन तन्निश्चय-स्तावद्भूयोदर्शनं हेतुरिति न वार-संख्या-नियमो न वा-ऽननुगमः। यद्यपि चान्यस्य साध्य-व्यापकत्व-साधना-व्यापकत्व-संशयो नान्य-व्याप्ति-ग्रह-प्रतिबन्धकस्तथापि तदाहित-व्यभिचार-संशयः प्रतिबन्धक इति तद्विधूनन-मावश्यकमिति चेन्न। अयोग्योपाधि-संशयाधीन-व्यभि-चार-संशयस्य तथाप्यनुच्छेदात्। स च न भूयोदर्शना-न्नाप्यनुमानादित्युक्तम्। अपि च भूयो-दर्शनाहित-संस्कारो न वहिरिन्द्रिय-सहकारी, तद्व्यापारं विनापि च सहचारादि-ज्ञानवतो व्याप्ति-ग्रहात्। नापि मनसः, इन्द्रियादिवद्भूयोदर्शन-जन्य-संस्कारस्य तज्जन्य-स्मरणस्य वा प्रमाणान्तरत्वापत्तेः।

दीधितिः ।

तदाहितः संस्कारो बहिरिन्द्रियमात्रस्य सहकारी मनसोऽपि वा आद्ये "तद्व्यापारं विने"ति । द्वितीये "नापी"ति ।

दीधिति-प्रकाशः ।

(मूले पूर्व्वमनौपाधिकत्वज्ञानं व्याप्ति-ग्रहे हेतुरित्युक्तं इदानी-मुपाधिज्ञानाभावस्तद्धेतुरित्याशङ्कते "अथे"त्यादिना ) (१) बहि-रिन्द्रिय-व्यापार-दशायां बहिरिन्द्रिय-सहकारिणोऽपि तद्व्या-पारासत्त्व-दशायां मनः सहकारित्व-सम्भवा"त्तद्व्यापारं विने"ति मूलमनुपपन्नम् अतो मात्रपदमन्तर्भाव्य व्याचष्टे "तदाहिते"-त्यादिना ।

तत्त्वचिन्तामणिः ।

तस्मात् परिशेषेण (१) सकृद्दर्शन-गम्या सा, तथा ह्युपाध्यभावो व्याप्तिः । अभावश्च केवलाधिकरणं तत्काल-सम्बन्धी वा स्वप्रकाशरूपं तज्-ज्ञानं वा, तच्च प्रथमदर्शनेनावगतमेव चक्षुरादिना, न चाधिकस्तद-भावोऽस्ति । न च प्रतियोगि-ज्ञानं अधिकरणादि-ज्ञान-जनकं, येनोपाधिज्ञानं विना तन्न स्यात् । एव-

(२) ( ) एतच्चिह्नितः पाठो नास्ति ख ।

(१) परिशेषादिति दीधितिकृद् धृतः पाठः ।

मुपाध्यभावे ज्ञाते किञ्चिन्न ज्ञातुमवशिष्यते, उपाध्य-भाव-व्यवहारस्तु तन्नियमपेक्षते दीर्घत्वादि-व्यवहार इवावधि-ज्ञानम्। न चैवं रासभ-सम्बन्ध-तुल्य-वह्नि-धूम-सम्बन्ध-ज्ञानादेवानुमितिः स्यादिति वाच्यम्। उपाधि-स्मरणे सत्युपाधि-तद्व्याप्येतर-सकल-तदुपलम्भ-क-समवधाने चोपाध्यनुलम्भ-सहितस्य केवलाधिकरण-ज्ञानस्यानुमिति-हेतुत्वात्, तद्व्यवहार-हेतुत्वाच्च।

---

दीधितिः।

"परिशेषात्" साध्य-साधन-सम्बन्ध-ग्राहकाति-रिक्तानपेक्ष-ग्रहकत्वात्। उपाध्यभाव-ग्राहकस्यापेक्ष-णीयत्वादसिद्धिं निरस्यति, "तथाही"ति। "उपाधि-स्मरण" इत्यादि। नन्वेवं मसन्निकृष्टादि-हेतुकानु-मितिर्न स्यात् उपाधि-योग्यानुपलम्भ-विरहादतः आह "तद्व्यवहारेति" तद्व्यवहारस्य हेतुरेवानुमिति-हेतुः तच्चोपाध्यभावत्वेन ज्ञानम्। "उपाधि-स्मरण" इत्यादि तु तत्कारण-प्रदर्शन-परम्। मभावत्वञ्च इदमिह नास्तीति प्रतीति-साक्षिकः स्वरूप-विशेषोऽतिरिक्तः पदार्थो वेत्यदेतत्। एवञ्चोपाध्यभावत्वेन ज्ञानेऽधि-कापेक्षां न वारयाम इति भावः।

दीधिति-प्रकाशः ।

भूयो दर्शनाग्राह्यत्वे सति ग्राह्यत्वं यथाश्रुतः परिशेषः, स च सकृद्दर्शन-ग्राह्यत्व-वादि-मतेऽपि भूयो-दर्शन-विषयत्व-रूप-तद्-ग्राह्यत्व-सम्भवादसिद्धः, भूयोदर्शनत्वेन भूयो-दर्शन-जन्य-ग्रहाविषयत्वम् तदग्राह्यत्वं प्रतियोग्यप्रसिद्ध्यादिना दुर्वचमतः परिशेषमाह "साध्य-साधने"ति। यद्यपि साधने उपाध्यभावः साधनमेव तथा च तद्ग्राहकातिरिक्तानपेक्षेत्येव वक्तुमुचितं तथाप्यनौपाधिक-सम्बन्ध-रूपा व्याप्तिः पक्षोऽतएव निरुपाधिक-सम्बन्ध-रूप-व्याप्तित्वेन वेति वक्ष्यति। तद्ग्रहे च साधन-ग्राहकातिरिक्तस्य साध्य-साधन-सम्बन्ध-ग्राहकस्यापेक्षणीयत्वादसिद्धिरतस्तथोक्त-साध्य-साधन-सम्बन्ध-ग्रहत्व-व्यापक-विषयितावच्छिन्न-जन्यता-निरूपित-जनकतानाश्रयत्वं तदतिरिक्तत्वम्। तदनपेक्ष्य ग्रह-विषयत्वञ्च तादृश-जनकतानाश्रय-निष्ठ जनकता-निरूपित-ग्रह-निष्ठ-तज्जन्यतायां विषयतयाऽनवच्छेदकत्वे सति ग्रह-विषयत्वं तेन उपाध्यभावादि-ग्राहकस्यापि समूहालम्बन-रूप-साध्य-साधन-सम्बन्ध-ग्रह-जनकत्वेऽपि न क्षतिः। एवञ्च तत्र प्रयोगो व्याप्तिः प्राथमिक-साध्य-साधन-सम्बन्ध-ग्रह-विषया साध्य-साधन-सम्बन्ध-ग्राहकातिरिक्तानपेक्ष्य-ग्राह्यत्वात् साध्यादिवदिति। ननु सकृद्-दर्शन-ग्राह्यत्व-व्यवस्थापने व्याप्ति-लक्षणमप्रकृतमत आह "उपाध्य-भावेति"। उपाधि-स्मरण "इत्यादिना" "तद्व्यवहार-हेतुत्वा"दित्यन्तेन सूचनीयार्थं दर्शयितुं यथाश्रुतमाक्षिपति "नन्वेवमित्यादिना" "एव"मुपाधि योग्यानुपलब्धेरनुमिति-हेतुत्वे। "असन्निकृष्टे"त्यादि-

नाऽतीन्द्रियादि-परिग्रहः। "कारण-प्रदर्शनपर"मिति तथा चोपाधि-स्मरण इत्यादिकं कारण-प्रदर्शन मुखेन कार्य्यीभूतोपाध्य भावत्व-प्रकारक-ज्ञानोपलक्षकमिति भावः। नन्वनतिरिक्ताभाव-वादि-मते उपाध्यभावत्वमपि धूमत्वादि-रूपमेव तथा च तत्प्रका-रक-ज्ञानस्य हेतुत्वेऽप्यतिप्रसङ्गस्तदवस्थ एवेत्यत आह "अभाव-त्वञ्चे"ति "अन्यदेतदि"ति उपाधिर्नास्तीत्याकारकं विलक्षण-प्रका-रता-शालि-ज्ञानं हेतुरतो नोक्त-दोष इति भावः। नन्वेवमा-कारके ज्ञाने भूयो-दर्शनापेक्षाऽस्त्येवेत्यत आह "एवञ्चे"ति -व्याप्ति-स्वरूप-ज्ञाने अधिकापेक्षा नेति भावः। नैयायिक-मते व्याप्ति-स्वरूपस्याव्यभिचारितत्व-घटिततया तद्ग्रह एव भूयोदर्श-नापेक्षणादिति।

---

तत्त्वचिन्तामणिः।

नन्वेवं प्रथम-दर्शनेन व्याप्ति-निश्चयाद्विशेष-दर्शने सति रासभादि-संशयवत् तत्संशयो न स्यादिति चेत्, व्याप्ति-ज्ञानानन्तरं किं विद्यमान, एवोपाधि-र्मेयोपाधित्वेन न ज्ञातः इति शङ्कया गृहीत-व्याप्ता-वपि संशयः, अतस्तत्र भूयोदर्शनेन उपाधि-निरास-द्वारा व्याप्त्यभाव-शङ्कापनीयते, यद्वा ज्ञान-प्रामाण्य-संशया-द्व्याप्ति-संशयः, यथा घटज्ञान-सामग्र्यां सत्यां घटज्ञाने सति तत्प्रामाण्य-संशयाहितस्तत्संशयो न त्वग्रिमसंशया-

नुरोधेन तत्र घटज्ञानमेव न वृत्तमिति वाच्यं, तथे-
ष्टाप्युपाध्यभावस्य व्याप्तित्वात् तस्य च केवलाधिकरण-
रूपस्य प्रथमदर्शनेऽपि निश्चितत्वात्, व्याप्तिग्राहकान्त-
रस्याभावाच्च, परिशेषेण सकृद्-दर्शनस्य व्याप्तिग्राहक-
त्वात्, तन्निश्चये प्रामाण्य-संशयादेव तत्संशयः। न चैवं
रासभेऽपि प्रथमं व्याप्तिपरिच्छेदः स्यादिति वाच्यम्।
तत्र व्याप्तेरभावात् प्रत्यक्षज्ञाने विषयस्य हेतुत्वात्
क्वचिदसंसर्गाग्रहात् तथा व्यवहारो दोष-माहात्म्यात्।
न चात्रापि तथा, आरोपे सति निमित्तानुसरणं न तु
निमित्तमस्तीत्यारोप इत्यभ्युपगमात्।

---

दीधितिः।

व्याप्ति-स्वरूपे संशयाभाव आपद्यते, निरुपाधि-
सम्बन्धरूप-व्याप्तित्वेन वा? आद्ये इष्टापत्तिः। द्वितीय-
मपि किमुपाधि-स्मरणादिकं विना तत्समवधाने सति
वा सम्बन्धग्रहे? आद्ये किं "विद्यमान"इति। तथा च
तद्ग्रहमात्रं न तु तद्भात्वेनापि ग्रह इति समाना-
कारनिश्चयाभावात्तत्संशयो नानुपपन्न इति भावः।
द्वितीये "ज्ञान-प्रामाण्ये"ति। "प्रथमे"ति सत्युपाधि-

स्मरणादावित्यादिः। "न चावापी"ति सर्व्वत्र रासभादावित्यर्थः।

---

दीधिति-प्रकाशः।

"उपाधि-स्मरणादिकं विने"ति "सम्बन्ध-ग्रह" इत्यत्रान्वेति, आदिनोपाध्यभावत्वप्रकारक-ज्ञान-जनक--यावत्कारण--परिग्रहः। "तद्ग्रहमात्रम्" उपाध्यग्रहमात्रं मूले च साधारण-धर्म्म दर्शनादिरूप-संशय-सामग्री-संघटनायेदमुक्तमिति ध्येयम् (१)।

प्रथम-दर्शने तु उपाध्यभावत्वेन निर्णयो दुर्घट इत्यतः पूरयति "सत्युपाधौ"ति। "असंसर्गाग्रहा"दित्युपक्रम-स्वरसादाचष्टे-"ऽव्यापीती"ति यद्यपि व्याप्ति-भ्रमाविषये रासभे एव इदं वक्तुमुचितं तथापि यत्र भ्रमस्तत्र सुतरां, अन्यत्रापि भ्रमे आपादनीये सर्व्वत्रैव तदापादयितुमर्हमिति भावः। इत्यञ्च क्वचिद्रासभे यथा दोष-माहात्म्याद्व्यवहारो भवति तथा सर्व्वत्र रासभे स्यादिति मूलार्थः।

---

तत्त्वचिन्तामणिः।

केचित्तु साधनवन्निष्ठात्यान्ताभावाप्रतियोगि-साध्य-सामानाधिकरण्यं साधनवन्निष्ठान्योऽन्याभावाप्रतियोगि-साध्यवत्कत्वं वा व्याप्तिः। तदुभयमपि योग्यं प्रत्यक्षेण वह्नि-धूम-सम्बन्धानुभवेन प्रथममवगतमेव।

---

(१) इदमुक्तमिति क्वचिन्न पाठः।

महानसे योऽत्यन्ताभावोऽन्योऽन्याभावो वाऽवगतस्तस्य प्रतियोगी न वह्निर्न वा वह्निमान् इत्यनुभवात्, रासभे तथावगमेऽप्यग्रे स बाध्यत इति तन्न एवं हि तद्वह्नि-तद्धूमयोरेव व्याप्तिः स्यात्, न तु धूमत्ववह्नित्वावच्छेदेन। न च तदनुमानोपयोगि वह्नित्वं वह्निमत्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ज्ञातुमशक्यमेवेति। मैवं प्रकृत-साध्य-व्यापक-साधनाव्यापको वा साधनत्वाभिमतेन समं प्रकृतसाध्य-सम्बन्धितावच्छेदकं विशेषणं वोपाधिः, उभयथापि तदभावो न व्याप्तिः, सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः। किन्तु यावत् स्वव्यभिचारि-व्यभिचारि-साध्य-सामानाधिकरण्यमनोपाधिकत्वं तस्य च प्रथमं ज्ञातुमशक्यत्वात्।

---

दीधितिः।

"अवगत" इति स्वरूप-कथनमात्रम्। "महानस" इति अस्मिन् इत्यादिः। महति वायौ योग्यायोग्योद्भूत-रूप-सामान्य-तद्वतोरिव योग्ये वह्नौ तादृश-प्रतियोगित्व-सामान्य-तद्वतोरपि अत्यन्तान्योऽन्याभावयोर्योग्यत्वादिति भावः। "न प्रतियोगितावच्छेदक"

मिति न धूम-सामान्य-समानाधिकरण-तादृशाभाव-प्रतियोगिता-सामान्यावच्छेदकमित्यर्थः।

---

दीधिति-प्रकाशः।

अवगतत्वस्य विवक्षितत्वेऽसन्निकृष्ट-महानस-वृत्तित्वेनाभावाग्रह-दशायां सन्निकृष्ट-महानस एवाभावस्यावगतत्वेन महानसे योऽत्यन्ताभावोऽवगतस्तत्प्रतियोगित्व-सामान्याभावस्य सुग्रहत्वात् "वह्निरिति पुरणमनुचितमतः चरमोक्तमप्यवगतेति पदं प्रथमतो व्याचष्टे "अवगत" इति। "स्वरूपेति" अवगतत्व-ज्ञानस्यानुमित्य-जनकत्वादिति भावः। तथा च महानस-सामान्यमादाय तादृशाभावो ग्रहीतुमशक्यो महानसमात्रासन्निकर्षादिना योग्यानुपलम्भाभावादाह "महानस इत्यग्नि"रिति तथा चैतन्महानस-वृत्त्यत्यन्ताभाव-प्रतियोगित्व-सामान्याभाव एव एतन्महानस-सन्निकर्षकाल एव सुग्रह इति भावः। नन्वेतन्महानस-निष्ठात्यन्ताभाव-प्रतियोगित्वस्य पिशाचादि-वृत्तेरतीन्द्रियस्यापि सत्त्वात् तत्कथं तत्सामान्याभावो योग्य इत्यतस्तद्-योग्यतामुपपादयति "महतो"त्यादिना। "योग्ये वह्ना"विति उद्भूतरूपवति योग्ये वह्नौ एतादृश-प्रतियोगित्व-सामान्य-सत्त्वेनोपलम्भापादन-सम्भवादिति भावः। एतद्धूम-समानाधिकरणाभाव-प्रतियोगितानवच्छेदकत्वस्य वह्नित्वादौ सुग्रहत्वादाह "न धूम-सामान्ये"ति।

---

तत्त्वचिन्तामणिः।

किञ्च न वस्तुगत्या व्याप्तिज्ञानं हेतुः। किन्तु

व्याप्तित्वेन, तच्च उपाध्यभावत्वं, न चोपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति, विशेषण-ज्ञान-साध्यत्वात् विशिष्ट-ज्ञानस्य। न च नियमतः प्रथम-मुपाधि-धीरस्ति।

---

दीधितिः।

अथ साधनाव्यापक-व्याप्यत्वाभावःसाध्येऽधिकरण-स्वरूपमेव एवं साधन-निष्ठ-साध्य-सम्बन्धे साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीत्यनुशयानो येन रूपेण ज्ञाता व्याप्तिरनुमित्यङ्गं तद्रूप-विशिष्टा न सकृद्दर्शन-गम्या सामानाधिकरण्यमात्रस्य च तथा भावं न वारयाम इत्याशयेनाह "किञ्चे"ति। विशेषण-ज्ञान-साध्यत्वात् तत्सामग्री साध्यत्वाद्वा। "न चे"ति, उपलक्षणमेतत् उपाधेरयोग्यस्यापि सम्भवात्। उपाधि-सामान्य-तद्वतो मूर्त्तत्वादि-सामान्य-तद्वतोरिवात्यन्ता-न्योन्याभावयोरयोग्यतया प्रत्यक्षेण ग्रहीतुमशक्य-त्वात्। न च योग्योपाधि-व्यतिरेक-ग्रह एवानुमानाङ्गं अयोग्योपाधि-ग्रहेऽपि अनुमिति-प्रसङ्गात्।

---

दीधिति-प्रकाशः।

"साधना-व्यापक-व्याप्यत्वाभाव" इति। तद्व्याप्यत्वं तद्वद्न्या-

वृत्तित्वे सति वृत्तिमत्त्वम्, इत्यञ्च साध्यतावच्छेदके ताहृश-साधना-व्यापक-व्याप्यतावच्छेदकत्वाभावः। तेन वह्निमान् धूमादित्यादौ साधनाव्यापक-महानसत्व पर्व्वतत्व-व्याप्यत्वाभाव-कूटस्य प्रत्येकं वह्न्यावसत्त्वेऽपि न क्षतिः। महानसीय-वह्नित्वस्य व्याप्यतावच्छेदकत्वे वह्नित्वे तदनवच्छेदकत्वमवच्छेदक-लक्षणोक्त-रीत्योपपादनीयम्।

मूलोपदर्शितस्य द्विविधोपाधेः प्रथमोपाध्यभाव-घटितमनौपाधिकत्वं दर्शयित्वा द्वितीयोपाध्यभाव-घटितं तद्दर्शयितुं व्याप्तेर्हेतु-निष्ठत्वार्थमाह "एवमिति"। "साध्यसम्बन्धे" साध्य-सामानाधिकरण्ये, एवञ्च व्याप्तेरनौपाधिकत्व-सम्बन्ध-रूपतापि सङ्गच्छते इति भावः। "साधनतावच्छेदकातिरिक्तावच्छेद्यत्वं" साधनतावच्छेदकानवच्छेद्यत्वे सति अवच्छेद्यत्वं, तेन वह्निमान् धूमादित्यादौ धूम-निष्ठ-सामानाधिकरण्यावच्छेदक-धूमत्वातिरिक्त-तत्तद्धूमत्वाद्यवच्छेद्यत्वेऽपि द्रव्यं रूपादित्यादौ रूपनिष्ठ सामानाधिकरण्यस्य रूपत्वातिरिक्त-गुणत्वाद्यवच्छेद्यत्वेऽपि च न क्षतिः। एतच्च लघु-गुरु-साधारण-स्वरूप-सम्बन्ध-रूपावच्छेदकत्वं लक्षण-घटकमित्यभिप्रेत्य, इतरथा तु साधन-निष्ठ-साध्य-सम्बन्धे साधनाव्यापकतावच्छेदक--रूपावच्छिन्न-सामानाधिकरण्य--व्याप्यत्वाभावो वाच्यः इत्यनुशयान इत्यामयेन चाहेत्यन्वयः। "सामानाधिकरण्यमात्रस्य" अनौपाधिकत्व-विशेषित-सामानाधिकरण्यस्य "तथाभावः" सहदर्शन-गम्यत्वम्। मीमांसकमते विशेषण-धियो विशिष्टज्ञानाहेतुत्वात् पूरयति "तज्ञानमपी"त्यादि। "एतत्" प्रथम-

मुपाधिविधयोऽसत्त्वम्। "उपाधि-सामान्येति" साधनाव्यापकस्या-योग्यस्यापि सत्त्वात्तद्व्याप्यत्वाभावः साध्ये न योग्य इत्यर्थः। "न च योग्ये"ति, तथा च साधनाव्यापक-महत्त्वोद्भूत-रूपवत्व-व्याप्यत्वाभाव एवं तथाविध गुणादि-व्याप्यत्वाभाव इति रीत्या तत्प्रत्यक्षमिति भावः।

---

तत्त्वचिन्तामणिः।

यच्चोक्तं प्रतियोगि-ज्ञानं व्यवहार-हेतुः नाभाव-ज्ञान इत्यस्तु तावदेवं तथापि तदभावो मा व्यव-हारि उपाध्यभाव-ज्ञानाधीनानुमितिः स्यादेव उपाधि-ज्ञानं विनापि, न चैवम्। वस्तुतस्तु विशेषादर्शने सह-चारादि-साधारण-धर्म्म-दर्शनाद्व्यभिचार-संशयात् प्रथम-दर्शनेन न व्याप्ति-निश्चयः। अथ व्यभिचार-संशयो नाव्यभिचार-निश्चय-प्रतिबन्धकः, ग्राह्य-संशयस्य निश्च-याप्रतिबन्धकत्वात्। अन्यथा संशयोत्तरं क्वापि निश्चयो न स्यादिति चेत्। न व्यभिचार-संशयः प्रतिबन्धक इति ब्रूमः। किन्तु विशेषादर्शने सति सहचारादि-साधारण-धर्म्म-दर्शनात् संशयः स्यात्, न तु संशय-साम-ग्रीतो निश्चय इति। किञ्च यन्नी-सामग्री यत्र प्रतिबन्धिका विशेषादर्शने तत्र तन्नीरपीति व्यभिचार-

संशयोऽपि प्रतिबन्धकः, एवं भूयोदर्शनमपि संशायकं तर्कस्त्वनवस्था-ग्रस्त एवेति कथं व्याप्ति-ग्रहः।

दीधितिः।

यथाश्रुतं दूषयति "यच्चोक्त"मित्यादिना।

दीधिति-प्रकाशः।

उपाध्यभावत्व-प्रकारक-ज्ञानस्यानुमिति-हेतुत्वे तद्ग्रन्थ तात्पर्यार्थे मूलोक्त-दोषस्यानुक्ति-सम्भवादाह "यथाश्रुतमिति"।

तत्त्वचिन्तामणिः।

अत्रोच्यते, व्यभिचार-ज्ञान-विरह-सहकृतं सहचार-दर्शनं व्याप्ति-ग्राहकं, ज्ञानं निश्चयः शङ्का च, सा च क्वचिदुपाधि-सन्देहात् क्वचिद्विशेषादर्शन-सहित-साधारण-धर्म्म-दर्शनात्, तद्विरहश्च क्वचिद्विपक्ष-बाधक-तर्कात् क्वचित् स्वतः सिद्ध एव। तर्कस्य व्याप्ति-ग्रह-मूलकत्वेनानवस्थेति चेन्न यावदाशङ्कं तर्कानुसरणात्, यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः।

इति श्रीमद्-गङ्गेशोपाध्याय-विरचिते तत्त्वचिन्तामणौ अनुमानखण्डे व्याप्तिग्रहोपाय-प्रकरणं समाप्तम्।

दीधितिः।

"व्यभिचारे"त्यादि, अत्र प्रत्यक्षे ग्राह्य-संशयस्यापि प्रतिबन्धकत्वमाहत्य व्यभिचारशङ्कायास्तथात्वाभिधानम्। अन्यथा पुनरसाधारण-तत्तत्कारण-मेलकरूपा सामग्री प्रतिबन्धिका बोध्या। विवेचितञ्चेदं प्रत्यक्षमणि-दीधितौ, वक्ष्यते चाधिकमुपरिष्टात्।

---

दीधिति-प्रकाशः।

"प्रत्यक्षे" निर्णयात्मक-प्रत्यक्षे (क)। "तथात्वाभिधानं" प्रतिबन्धकत्वाभिधानम् "अन्यथा" ग्राह्य-संशयस्याप्रतिबन्धकत्वे, "असाधारणे"ति कालादीनां निवेशने प्रयोजनाभावादिति। कोटिस्मृति-विशेषादर्शनादि-रूपाणां तत्तत्सामग्रीणां प्रत्येकं सत्त्वेऽपि निर्णयोत्पादादाह "मेलक" इति। इत्यञ्च विशेषादर्शनकोटिस्मृतिविशिष्ट-धर्मिज्ञानत्वादिना प्रतिबन्धकत्वं, वैशिष्ट्यञ्चैक-कालावच्छेदेनैकात्मवृत्तित्वमिति भावः।

ननु व्यभिचार-संशयस्य तत्सामग्र्या वा अव्यभिचार-ग्रहत्वं न प्रतिबध्यतावच्छेदकं तत्सत्त्वे व्यभिचारसंशयोत्पादात्, नापि निश्चयात्मक-तद्ग्रहत्वं नीलेतर-तद्घटत्ववत् निश्चयत्वस्य कार्यतानवच्छेदकत्वादत आह "विवेचित"मिति, तथा च निश्चयत्वस्य कार्यतावच्छेदकत्वमभ्युपेत्येदमुक्तमिति भावः। उपरिष्टादिति संशयरूपानुमिति-व्यवस्थापनावसर इत्यर्थः।

---

(क) संशयानुमित्योः संशयाप्रतिबध्यत्वादाह निर्णयात्मक-प्रत्यक्ष इति।

दीधितिः।

अत्र च यद्यपि साधनगोचर-साध्याभाववद्वृत्तित्व-ग्रहाभावो हेतुरिति न युक्तं, केवलान्वयिनि व्याप्त्या प्रसिद्ध्या ग्रहासिद्धेः। खण्डशः प्रसिद्ध्या क्वचित् तादृश-भ्रम-सम्भवेऽपि सर्व्वत्र तथा भ्रमे मानाभावात्। अत एव साध्यतावच्छेदक-गोचर-साधनवन्निष्ठाभाव-प्रतियोगितावच्छेदकत्व-ग्रहोऽपि प्रत्युक्तः, सकल-साध्यतावच्छेदके तादृश-ग्रहे मानाभावात्। तथापि साध्यतावच्छेदके तत्पुरुषीय-तादृशावच्छेदकत्व-ग्रहस्य विषयतयाऽभावस्तद्विषयत्वाभावो वा तत्पुरुषीय-व्याप्ति-ग्रहे हेतुः।

---

दीधिति-प्रकाशः।

"व्याप्त्यप्रसिद्ध्या" व्याप्तेः साध्याभाववद्वृत्तित्वस्याप्रसिद्ध्या। ननु साध्याभाववद्वृत्ति साधनं इत्याकार-ग्रहाभावो हेतुर्व्याप्ति-स्तादृश-ग्रहाभावस्य अभावे साध्यप्रतियोगिकत्वारोपेण सुघट एवे-त्यत आह "खण्डश" इति "सर्व्वत्र" साधने "तथा भ्रमे" साध्या-भाववद्वृत्तीत्याकारक-भ्रमे। "अतएवे"त्यस्यार्थं विवृणोति "सक-लसाध्यतावच्छेदक" इत्यादि। "तादृशावच्छेदकत्वे"ति साधन-वन्निष्ठाभाव-प्रतियोगितावच्छेदकत्वेत्यर्थः। तादृश-ग्रहस्य विषय-तया अभावे उक्ते धूमसमानाधिकरणाभाव-प्रतियोगितावच्छे-

दकं घटत्वं वह्नित्वस्य प्रमेयमिति ज्ञान-सत्त्वेऽपि व्याप्ति ग्रहो न स्यात्, विषयतया तदभावस्य वह्नित्वेऽसत्त्वात्। (क) संयोगस्य महानसीय-वह्निसंयोगत्वादिनेव विषयताया अपि विशेष-रूपेण (ख) प्रतियोगितावच्छेदक-सम्बन्धत्वं नेष्यते इत्याशयादाह "तद्विषयत्वाभाव इति" तादृशावच्छेदकत्व-ग्रहस्य तादृशावच्छे-दकत्व-प्रकारता-निरूपित-विशेष्यत्वाभाव इत्यर्थः।

---

दीधितिः।

वस्तुतो व्याप्तिः साध्य-साधनभेद-भिन्नतया विशिष्येव कार्य्यकारण-भावः। तथा च यत्र साधनं साध्याभाववद्वृत्ति साध्यतावच्छेदकं साधनवन्निष्ठाभाव-प्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचार-ज्ञानं प्रसिद्धं तत्र यथायथं (१) तदभावः पुरुष-निष्ठो व्याप्ति-ग्रहे हेतुः। अत एवैकविध-व्यभिचार-ज्ञान-विरहे-ऽन्यविध–व्यभिचार–ग्रहाद्व्याप्ति-धी-विरोधः। एवञ्च

---

(१) यथायोगमिति क्वचित्पाठः स एव भवानन्दसम्मत इति प्रतिभाति।

---

(क) ननु तादृशावच्छेदकत्व प्रकारतानिरूपित विशेष्यतासम्बन्धेन तत्पुरुषीय-ज्ञानत्वावच्छिन्नं प्रति तादृशावच्छेदकत्व-प्रकारतानिरूपित-विशेष्यतासम्बन्धा-वच्छिन्न प्रतियोगिताक तत्पुरुषीय-ज्ञानाभावत्वेन हेतुत्वे गौरवदोषः। न चैवं साध्यतावच्छेदकत्वाद्युक्तिरफलेति वाच्यम्। एतादृश-सम्बन्धस्याभावेन तदुक्तेरत आह "संयोगस्ये"त्यादि।

(ख) उक्तविशेष्यतात्वादिनेत्यर्थः।

क्वचिद्व्यभिचार-ज्ञानस्याप्रसिद्ध्या तदभावस्याहेतुत्वेऽपि न क्षतिः । प्रसिद्धायाः साधनवन्निष्ठाभाव-प्रतियोगि-तावच्छेदकत्वादि-बुद्धेः, समान-विषयतया तदभाव-बोध-विरोधित्वानुरोधेन तु तथात्व-कल्पनं न वयं वारयामः, यदि तत् तत्प्रकारकादि-निवेशेन विशेषे न पर्य्यवस्येदिति दिक् ।

---

दीधिति-प्रकाशः ।

तत्पुरुषीयत्वादि-प्रवेशेऽनन्तकार्य्य-कारण-भाव-प्रसङ्गात् (क) वक्ष्यमाणास्वरसाच्चाह "वस्तुत" इति "यथायोग"मिति । यत्रैक-विध-व्यभिचार-ज्ञानं तत्र तदभाव एव, यत्रानेकविधं व्यभिचार-ज्ञानं तत्र तावदभाव एव हेतुरित्यर्थः । "पुरुषनिष्ठ" इति, सामानाधिकरण्य प्रत्यासत्त्या हेतुता प्राप्नोति भावः । "अतएव" नाना-विध-व्यभिचारग्रहाभाव-कूटस्य हेतुत्वादेव । "एवञ्च" विशिष्य कार्य्यकारणभावावश्यकत्वे च (ख) [ पूर्व्वकल्पेऽस्वरसमप्याह, "प्रसि-द्धाया" इत्यादिना । "प्रसिद्धायाः" तादृशानवच्छेदकत्व-ग्रहे जन-

---

(क) ननु वस्तुत इत्यादिवक्ष्यमाणकल्पे विशेष्यभेदेन कार्य्यकारणभावभेदाव-श्यकत्वात् क्वचित् विशेष्यतया पुरुषभेदेनानन्तकार्य्यकारणभाव प्रसङ्गस्तुल्यः, पुरुषातिरिक्तविशेष्यभेदेनानन्तकार्य्यकारणभावकल्पनागौरवं कार्य्यतावच्छेदकादि-गौरवं चुक्तरधिकं यत आह "वक्ष्यमाणे"ति । "प्रसिद्धाया" इत्यादिना वक्ष्य-माणेत्यर्थः ।

(ख) यत्र व्यभिचारग्रहो न प्रसिद्धस्तत्र तद्व्यभिचारदर्शनाभावं व्याप्तिग्राहक-मितिभावः ।

नीये प्रतियोगि-ज्ञान-मुद्रयाऽवश्यं प्रसिद्धाया, प्रतियोगितावच्छेद कत्वादीत्यादिना साध्ये साधनवन्निष्ठान्योऽन्याभाव-प्रतियोगिताव च्छेदकत्व-बुद्धि(१)-संग्रहः ।

ननु घटत्वादौ तादृशावच्छेदकत्व-ग्रहस्य प्रतियोगि-ज्ञानत्वेना पेक्षितस्य वह्नित्वादौ तदभाव ग्रहे अप्रतिबन्धकत्वात् तद्विषयत्वा-भावस्य हेतुत्वे किं मानमत आह "समानेति" घटत्वादौ (क) प्रति-योगितानवच्छेदकत्व-ग्रहे तादृशावच्छेदकत्व-ग्रहस्य समान-विषय-तया प्रतिबन्धकत्व-कल्पनादिति भावः । "तथात्वकल्पनं" तत्तु-रूपीय-तादृशावच्छेदकत्व-ग्रह विषयत्वाभावस्य हेतुत्व कल्पनं, "तत्तत्प्रकारादी"ति । "तत्" तथा कल्पनं, "तत्प्रकारो"ऽवच्छेद-कत्व-बुद्धि-प्रकारः, आदिना धर्म्मितावच्छेदक-परिग्रहः । तथा कल्पनं यदि विशेषे न पर्य्यवस्येदित्यन्वयः । धूमजनकतावच्छे-दक-तेजो-वृत्ति-जातित्वादिना वह्नित्वे तादृशावच्छेदकत्व-ग्रहेऽपि वह्नित्वत्व-रूपेण तदभाव-ग्रहात् वह्नित्वत्वेन यत्तादृशावच्छेदकत्व-ग्रहस्तद्विषयत्वाभावस्य हेतुताया विशेष विश्रान्तत्वेनासार्व्वत्रिकत्व-मिति भावः ।

---

(१) बुद्धीति नास्ति ग ।

---

(क) घटत्वादौ तादृशावच्छेदकत्व ग्रहे तादृशानवच्छेदकत्व ग्रहो न भवतीत्यत-स्तत्प्रतिबन्धकत्वे कल्पनीये सामान्यतो विषयता-सम्बन्धेन तादृशावच्छेदकत्वाभाव-ग्रहं प्रति तेन सम्बन्धेन तादृशावच्छेदकत्व-ग्रहत्वेन प्रतिबन्धकता कल्प्यत इति तत्रापि प्रतिबन्धकतावच्छेदकाक्रान्तत्वमर्थः ।

दीधितिः ।

व्याप्तिश्च धूमादि-व्यापक-वह्नि-समानाधिकरण-वृत्ति-धूमत्वादिकं तादृश-सामानाधिकरण्यमात्रस्य रासभादि-साधारणत्वात् । अत्र च व्यापकत्वांश-ग्रहे व्यभिचाराग्रहः, समानाधिकरण-वृत्तित्वांश-ग्रहे च तद्विशेषणतया सामानाधिकरण्यस्य ग्रहो हेतुरिति वक्तव्यम् । साध्य-सम्बन्धितावच्छेदक-रूपवत्त्व-लक्षण-व्याप्ति-ग्रहे विशेषणतया सम्बन्धस्य ग्रहो हेतुरित्यपि कश्चित् । (१)

दीधिति-प्रकाशः ।

व्यापकत्वांशग्रहे व्यभिचार-ग्रहाभावस्य सामानाधिकरण्यांशे-च विशेषण-ज्ञान-मुद्रया सहचार-ज्ञानस्य हेतुत्वं दर्शयितुं व्याप्ति-स्वरूपं दर्शयति —"व्याप्तिश्चे"ति । "केचि"दित्यस्वरसः, तद्बीजन्तु तादृश-व्याप्ति ग्रहे व्यभिचार-ग्रहस्य ग्राह्याभावानवगाहित्वेनाविरो-धात् तदभाव-हेतुत्वोपदर्शन-विरोध इति ।

दीधितिः ।

यत्तु विरुद्धे सहचार-भ्रमेण व्यापकत्व-भ्रमात् सामान्यत एव सहचार-ज्ञानं हेतुरिति तन्न असिद्ध-

(१) केचिदिति अधिकन्तु पुस्तकान्तरे पाठः ।

त्वात्, विरुद्धेऽपि व्यापकत्व-सामानाधिकरण्ययोर्ग्राहक-सामग्री-क्रम-यौगपद्याधीनं ग्रहण-क्रम-यौगपद्यं न तु मिथः कार्य्य-कारण-भाव इति ।.

---

दीधिति-प्रकाशः ।

"विरुद्ध"इति,न च विरुद्धादि-साधारणस्य सहचार-ज्ञानत्वस्यैक-स्याभावात् वह्नि-धूमयोः सहचार-ज्ञानस्य तद्व्यापकत्व-ग्रह-हेतुत्वे युक्तिर्नोक्तैवेति वाच्यम् वह्निविरुद्धे वह्निसहचार-भ्रमस्य वह्नि-व्याप्यत्वभ्रमं प्रति धूमविरुद्धे च धूमसहचार-भ्रमस्य धूम-व्यापकत्व-भ्रमं प्रति हेतुत्व-द्वयदर्शनाद्वह्नि-धूमयोरपि व्याप्यव्यापक-भाव-ग्रहे तथा कल्पनमिति भावः । "सामान्यत एवे"ति, भ्रम-प्रमा साधा-रण-व्यापकत्व-प्रत्यक्षत्वावच्छिन्नं प्रति तादृश-सहचार-ज्ञानत्वेन हेतुत्व, यद्विशेषयोरिति न्यायात् इत्यर्थः। "असिद्धत्वादिति" विरुद्धे सहचारभ्रमे व्यापकत्व-भ्रमस्यासिद्धत्वादित्यर्थः। असिद्धं विवृणोति "विरुद्धेऽपी"त्यादिना, "ग्राहकसामग्रीक्रमयौगपद्ये"ति ग्राहक सामग्री-क्रमाधीनोग्रहस्य क्रमः, तद्यौगपद्याधीनश्च यौगपद्यमित्यर्थः। "न तु मिथ" इति, अन्यथा क्वचिद्व्यापकत्व-ग्रहो-त्तरमपि सामानाधिकरण्य-ग्रह-दर्शनात्, सामानाधिकरण्य-ग्रहेऽपि व्यापकत्व-ग्रहो हेतुरिति किं न स्यादिति भावः ।

---

दीधितिः ।

इदं पुनरिहावधेयम्। यथा विद्यमानमपि वह्नित्वे

व्यवहित-विप्रकृष्ट-रासभादि-देश-निष्ठाभाव-प्रतियोगि-तावच्छेदकत्वं न गृह्यते । अभावदेश-विप्रकर्षादिना ग्राहकाभावात् । तथा धूमवन्निष्ठाभाव-प्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रह-सम्भवात् । नानुपलब्धेः प्रतियोगि-सत्त्व-विरोधित्वादि-लक्षणा योग्यतेति न तत्-सामान्याभावो लौकिक-प्रत्यक्ष-गम्यः, परन्तु कथञ्चित् विरोध-स्फुरणादिवशाद्धूमत्वादौ गृहीतो धूमवन्निष्ठात्यन्ताभाव-प्रतियोगितावच्छेदकत्वाभावो वह्नित्वादावुपनय मर्य्यादया गृह्यते । अत एवानुमानादिना व्यभिचार-ग्रहेऽपि न व्याप्ति-धीः, निर्णयात्मनि साधारणे वा दोष-विशेषाजन्योपनीत-भाने संशयादि-साधारणस्य निश्चयात्मनो वा विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वात् । तत्तद्धूमादौ देशान्तर-वृत्तित्व-सम्भावना-विरहादि-वशात् गृह्यमाणो वह्न्याद्यभाववद्वृत्तित्वाभावो धूमत्वाद्यवच्छेदेन गृह्यते लाघवादित्यपि वदन्ति ।

इति श्रीमद्-रघुनाथ-शिरोमणि-कृतायां दीधितौ अनुमानखण्डे व्याप्तिग्रहोपाय-प्रकरणं समाप्तम् ।

---

दीधिति-प्रकाशः ।

व्यापकत्वांशे लौकिकप्रत्यक्षासम्भवम् व्युत्पादयन्नानुमानिक-व्यभिचार-धियोऽपि विरोधित्वं व्यवस्थापयितुमाह, "इदं पुन"-रिति । "व्यवहिते"ति व्यवहितो विप्रकृष्टो वा यो रासभादि-देशस्तद्विशेत्यर्थः । व्यवधानं मध्यवर्त्ति-भित्त्यादि-सम्बन्धः । "विप्र-कृष्टो" विदूरवर्त्ती (१) तत्रेन्द्रिय-सन्निकर्षेऽपि दूरत्व-दोषादेवा-ग्रह इति भावः । "प्रतियोगिसत्त्व-विरोधित्वं" प्रतियोगि-सत्त्वापादित-प्रतियोगिकत्वं, आदिना प्रतियोगि-तद्व्याप्येतर-यावदुपलम्भक-समवधानरूप-योग्यता-परिग्रहः ।

"(क) कथञ्चिद्विरोधे"ति, धूमवति धूमाभावस्येव धूमत्वे धूमव-न्निष्ठाभाव-प्रतियोगितावच्छेदकत्वस्यापि विरोधेन ग्रहणासम्भव-त्वादित्यर्थः । वस्तुगत्या विरोध-स्फुरणस्य विशेषण-दर्शनतया व्यभि-चारशङ्का-प्रतिबन्धकत्वेन तत्राप्युपनयवशादेव तदभावो भासत इति "कथञ्चि"दित्युक्तम् । "अतएव" तादृशावच्छेदकत्वाभाव-ग्रहस्य तदंशे अलौकिक-प्रत्यक्षत्वादेव ।

"निर्णयात्मनी"ति, निर्णयात्मनि दोषविशेषाजन्योपनीत-भाने संशयादि-साधारणस्य विपरीत-ज्ञानमात्रस्य, संशय-निर्णयसाधारणे वा दोष-विशेषाजन्योपनीत-ज्ञाने निश्चयात्मनोऽपि विपरीतज्ञान-मात्रस्य विरोधित्वादित्यन्वयः । संशयानन्तरमपि संशयादाह

(१) विप्रकर्षो विदूरवर्त्तित्वमिति ख ।

(क) कथञ्चिद्विरोध व्याप्योपग्राहित्वार्थः ।

"निर्णयात्मनो"ति। आनुमानिक-तदभावनिर्णयेऽपि दोष-विशेषेण पित्तादिना लौकिक-सन्निकर्षेण वा ज्ञानदर्शनादाह—"दोष विशेषाजन्ये"त्यादि। उपनीत-भान-शब्देन लौकिक-सन्निकर्षाजन्यत्वं लभ्यं, तथा च दोषविशेषाजन्य-लौकिकसन्निकर्षाजन्य-तादृशज्ञानत्वं प्रतिबध्यतावच्छेदकं, तेन सामान्यलक्षणादि-जन्य-ज्ञानस्यापि संग्रहः, अन्यथा विशेषदर्शनमुत्तेजकं, तेन संशये सति विशेषदर्शनात्तादृशनिर्णयो नानुपपन्नः। न चैवं विशेषदर्शने सति बाधनिश्चयेऽप्यनुमितिः स्यादिति वाच्यम्। बाधनिश्चये संशयानुत्पादेन बाधनिश्चयत्वेनापि पृथक् प्रतिबन्धकत्वात्। अतएव द्वितीय-प्रतिबन्धकताया आवश्यकत्वे प्रथम-प्रतिबन्धकतायां मानाभाव इत्यनुशयात् "साधारणे"त्युक्तम्। अधिकञ्च शब्दालोकसारमञ्जुर्यां प्रकाशितमस्माभिः। मात्र-पदं कृत्स्नार्थकं तेनानुमानिकादि-विपरीतज्ञानस्यापि संग्रहः। वह्न्यभाववद्वृत्तित्वरूपव्याप्तेर्लौकिक-प्रत्यक्षं व्यवस्थापयति "तत्त-द्धूमादा"विति। धूमत्वावच्छिन्ने वह्न्यभाववद्वृत्तित्व-सत्त्वेऽपि नियमतो धूमान्तरासन्निकर्षेणैवोपेत्यापादनासम्भवात् तत्तद-भाव-प्रत्यक्षं न घटत इति। यथा वह्निसामानाधिकरण्य-तद्ग्रासभे कालान्तर-देशान्तर-वृत्तित्व-सम्भावना-वशात्तदभावो न गृह्यते तथा च तद्धूमेऽपीत्यत उक्तं "देशान्तरे"त्यादि। वस्तुतस्तु तद्धूमस्य कदापि देशान्तरावृत्तित्वादयोग्यानुपलब्धिरप्रत्यक्षैवेति भावः।

"लाघवादिति" प्रसिद्धधूमे वह्निसम्बन्धावगमात् वह्न्यभाव-वद्वृत्ति-धूमान्तरकल्पने गौरवात् क्लृप्तमेव लाघवम्।

यद्धर्म्मितावच्छेदक-विशिष्टे प्रतियोगि-सत्त्वेनोपलम्भापादनं तद्धर्म्मितावच्छेदकावच्छेदेनैव तदभावोऽध्यक्षः। अन्यथा महति वायौ रूपसत्त्वोपलम्भापादनेन वायुत्वावच्छेदेनापि रूपाभावोऽध्यक्षः स्यात्। तथा चोक्त-युक्त्यापि (क) धूमत्वावच्छेदेन (ख) तदभावस्य लौकिक-प्रत्यक्षं न सम्भवतीत्यस्वरसो वदन्तीत्यनेन सूचितः।

इति श्रीमद्-भवानन्दीये तत्त्वचिन्तामणि-दीधिति-प्रकाशे
अनुमानखण्डे व्याप्ति-ग्रहोपाय-प्रकरण-
व्याख्या समाप्ता।

---

(क) [illegible]।

(ख) तद्धर्म्मिक [illegible] प्रतियोगितावच्छेदकव्याप्तिज्ञानस्यैव प्रतियोगित्व[illegible]।